द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ।
गुर्वी शीता हन्ति वातरक्तपित्तमदात्ययान् ॥ १६० ॥
तद्वदेव च खर्जूरं क्षतक्षयहितं परम् ।
[1]हरीतकी सर्वरोगान् जयेद्वातकफोत्तरान् ॥ १६१ ॥
तद्वदामलकं शीतमम्लं पित्तकफापहम् ।
आक्षं केश्यं तद्गुणं च त्रिफला तैस्त्रिदोषजित् ॥ १६२ ॥
जातीफलं केसरं च मदकार्यतिसारजित् ।
मा[2]शीफलमतीसारमुखरुग्व्रणापहम् ॥ १६३ ॥
एलं हिक्कामवातघ्नं दीपनं मूत्रकृच्छ्रजित् ।
विळङ्गं कटु मेदोघ्नं कृमिश्लेष्मप्रसेकजित् ॥ १६४ ॥
अर्शोऽतिसारशूलघ्नः कटुरिन्द्रयवोऽग्निकृत् ।
तेजोवती वातकफगळजिह्वामयापहा ॥ १६५ ॥
वाकुची कृमिकुष्ठघ्नी तिक्ता कफविनाशनी ।
धान्याकं स्वादुपाकं च शूलाजीर्णविबन्धनुत् ॥ १६६ ॥
कटु ज्वरहरं रुच्यं तृष्णाघ्नं कफपित्तजित् ।
क्षत[3]बीजन्त्वतीसारग्रहणीमलदोषजित् ॥ १६७ ॥
काकोलीयुगळं वातनाशनं स्वादु बृंहणम् ।
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनपाचनम् ॥ १६८ ॥
रसे पाके च कटुकं कफघ्नं मरिचं लघु ।
स्वादुपाक्यार्द्रमरिचं नातितीक्ष्णं गुरु स्मृतम् ॥ १६९ ॥
शूर्[4]कोषणं तूषणवत् कृमिशत्रुविलङ्गवत् ।
सर्षपं कटु तीक्ष्णोष्णं कफमारुतकुष्ठजित् ॥ १७० ॥
तीक्ष्णोष्णं कटुपाकं च रुच्यं मेधाग्निवर्धनम् ।
जीरकाणां चतुष्कं च गन्धाढ्यं कफवातजित् ॥ १७१ ॥
कालानुसारी वातघ्नी पिटकार्शोऽतिसारजित् ।
श्लेष्मला स्वादु शीतार्द्रा गुर्वी स्निग्धा च पिप्पली ॥ १७२ ॥
सा शुष्का विपरीतातः स्निग्धा वृष्या रसे कटुः ।
शूलघ्नो दीप्यको रूक्षस्सतिक्तकटुको लघुः ॥ १७३ ॥

---

१. 'पथ्या गग सर्वरोगान' इति पाठभेदः । २. मायाक्कु. ३. इसुफोंकत्.
४. वाल्मुळ्ळक.

उष्णः कफानिलहरो दीपनः कृमिनाशनः ।
अजाजिका सुगन्धा च गुणैः पूर्ववदुच्यते ॥ १७४ ॥
कैशजं स्नेहनं वातपित्तकण्डूहरं हिमम् ।
शताह्वा कटुतिक्ता च स्निग्धोष्णा कफवातजित् ॥ १७५ ॥
कतकस्य फलं शीतं रक्तपित्तप्रसादनम् ।
स्रावहृद्दाहतृष्णाघ्नं हितं कृच्छ्रप्रमेहयोः ॥ १७६ ॥
भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १७७ ॥
कोलमज्जा तु मधुरस्तृट्च्छर्दिश्वासकासजित् ।
वार्तामज्जापि तद्वत्स्यात् स्नेहनो दोषनाशनः ॥ १७८ ॥
शीतला कटुका रूक्षा कफघ्नी गजपिप्पली ।
तक्कोलं श्वासकृच्छ्रार्शोविषदोषत्रयापहम् ॥ १७९ ॥

इति पञ्चमवर्गः ॥

---

कस्तूरी कटुतीक्ष्णोष्णा कफवातविनाशिनी ।
हृद्या गन्धोत्तमा कासश्वासवैगुण्यनाशिनी ॥ १८० ॥
त्वच्यो मृगमदस्नेहो वृष्यो वातकफापहः ।
कृष्णं मदकरं सर्ववातगुल्मप्रमेहजित् ॥ १८१ ॥
हिंगु वातकफानाहशूलघ्नं पित्तकोपनम् ।
सिक्थकं वातमत्यग्निं व्रणभेदांश्च नाशयेत् ॥ १८२ ॥
श्रीवेष्टं कफपित्तघ्नं व्रण्यं भूतज्वरापहम् ।
निर्यासः श्वासकासघ्नो ग्राही वातातिसारजित् ॥ १८३ ॥
गुल्गुलुस्तिक्तकटुकरसकषायो रसायनः ।
क्लेदमेदोऽनिलश्लेष्मगण्डकुष्ठापचिक्रिमीन् ॥ १८४ ॥
पिटकाग्रन्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः ।
पञ्चमस्तु क्षतश्वासकासवातविकारहा ॥ १८५ ॥
पारङ्कं वातकफजित् वातवैगुण्यकासजित् ।
ग्रन्थिर्ग्रन्थिप्रशमना शिरोरोगत्रिदोषजित् ॥ १८६ ॥

---

१. 'कसकस' इति प्रसिद्धः. २. बदांकुरु. ३. पुळुकु. ४. मीर. ५. काञ्चिवेष्ण.

देवधूपो वातरक्तशोफकण्ड्वादिनाशनः ।
कुन्दुरुष्कं वातकफशोफमूर्धरुजापहम् ॥ १८७ ॥
लाक्षा सद्यःक्षतहरा केश्या ज्वरगरप्रणुत् ।
नायको वातकफहा शोफगुल्मज्वरान् जयेत् ॥ १८८ ॥
विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ।
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ॥ १८९ ॥
सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषजित् ।
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ॥ १९० ॥
सौवर्चलं विबन्धघ्नं विडं वातानुलोमनम् ।
सामुद्रं श्लेष्मलं तीक्ष्णमौद्भिदं क्लेदनं कटु ॥ १९१ ॥
सौवर्चलोपमं कृष्णं स्यान्महालवणं तथा ।
वातास्रकृच्छ्रशोफघ्नं द्विच्यादौ सैन्धवादिकम् ॥ १९२ ॥
यवक्षारो वातकफगुल्मार्शोजठरापहः ।
अन्नभेदी दीपनस्स्यान्मलशुद्धिकरः परम् ॥ १९३ ॥
हेमक्षारो नेत्ररोगकफशोफविनाशनः ।
स्फटिकाख्यो नेत्ररोगे वक्त्रगुह्यव्रणे हितः ॥ १९४ ॥
शङ्खक्षारो गुह्यपामाक्षतदग्धव्रणापहः ।
रसकर्पूरमखिलदुष्टव्रणहरं परम् ॥ १९५ ॥
सौवीरं भेदि शोफघ्नं दुष्टव्रणविशोधनम् ।
शुक्तिक्षारः स्पर्शशीतो रक्तवाताग्निदाहजित् ॥ १९६ ॥
महा[2]क्षारो दुष्टशोफव्रणजिज्ज्वरनाशनः ।
पीतस्तथा न्यूनगुणः ततोऽप्यल्पगुणोऽरुणः ॥ १९७ ॥
प्रायस्सर्वेश्च तीक्ष्णोष्णः क्षारः कृमिहरो लघुः ।
पित्तास्रदूषणः पाकी छेद्यहृद्यो विदारणः ॥ १९८ ॥
अपथ्यस्सोऽतियुक्तस्स्यात्कुक्षौजःस्नेहचक्षुषाम् ।
सस्वादुतिक्तं छर्दिघ्नं रूक्षं कर्पूरमुच्यते ॥ १९९ ॥

सस्वादुतिक्तं कफपित्ततृष्णा-
मदभ्रमछर्द्यतिसारमेहान् ।
हृद्रोगमूर्च्छायविषाग्निसादान्
कर्पूरमामं शमयेत् क्षणेन ॥ २०० ॥

---

१. वेट्टियुप्पु. २. शंखपाषाणम्.

धूपराजः कफशिरोरोगपीनसनाशनः ।
शङ्खोदधिमले शीते कषाये चातिलेखने ॥ २०१ ॥
शुक्तिका च नखं मेदःकफशोफविनाशने ।
विद्रुमद्रवमास्योत्थरोगशोफहरं परम् ॥ २०२ ॥
तुत्थं च शिखितुत्थं च नेत्ररोगव्रणापहम् ।
विशदो गैरिकः स्निग्धः कषायमधुरो हिमः ॥ २०३ ॥
ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ।
हेमरूप्याद्यंशयुतं शिलाजतु तदुच्यते ॥ २०४ ॥
सर्वरोगप्रशमनं विधियुक्तं त्रिदोषजित् ।
अत्र गोमूत्रगन्धाढ्यं गुल्गुल्वाभं वरं मृदु ॥ २०५ ॥
कन्नारं शिरसश्शूलं शोफं वातकफौ जयेत् ।
कफघ्नी व्रणवातघ्नी मनोह्वा लेखनी सरा २०६ ॥
स्निग्धं कषायमधुरमलं व्रणविषप्रणुत् ।
गन्धकं त्वग्विकारेषु प्रशस्तं स्याद् व्रणेषु च ॥ २०७ ॥
हरवीर्यं महावीर्यं ज्वरकुष्ठव्रणादिकान् ।
योगप्रयोगभेदेन सर्वरोगान् विनाशयेत् ॥ २०८ ॥
हिंगुळन्तु व्रणे गुल्मे सन्निपातज्वरे हितम् ।
कषायमधुरे शीते लेखने साक्षिकाञ्जने ॥ २०९ ॥
रक्तपित्तविषच्छर्दिहिक्काघ्ने दृक्प्रसादने ।
सहस्रवेध्यतीसारं रक्तजं पवनं जयेत् ॥ २१० ॥
कृष्णाभ्रन्तु विशुद्धं स्यात् शीतं सर्वप्रमेहजित् ।
कान्तद्वयं गुल्मशूलजठराध्मानन‍ाशनम् ॥ २११ ॥
किट्टं पित्ते कामिलायां कुष्ठेऽर्शसि च शस्यते ।
चक्षुष्यं कृष्णलोहन्तु शीतं तिक्तकषायकम् ॥ २१२ ॥
लेखनं वातलं शोफकृमिपित्तकफप्रणुत् ।
कृष्णसीसं प्रमेहघ्नं मेदोऽनिलहरं परम् ॥ २१३ ॥
विशदं पाण्डुरोगघ्नं चक्षुष्यं व्रणनाशनम् ।
नाकं जयेद् गुल्मशोफौ त्रपुसीसं च तद्गुणम् ॥ २१४ ॥

---

१. साम्प्राणि. २. उदधिमलं=कटल्नाक्कु. ३. पविळप्पुत्तु. (പവിഴപ്പുറ്റ്)
४. चम्प्राकोट्टि,

कंसं रूक्षं लेखनं च तिक्तं पित्तकफापहम् ।
कटुपाकरसं ताम्रं शीतलं कफवातजित् ॥ २१५ ॥
वातपित्तहरं रूप्यं स्वादुपाकं च लेखनम् ।
सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः ॥ २१६ ॥
विषदोषहरं शीतं सकषायं रसायनम् ।
स्फटिकन्तु सरं शीतं चक्षुष्यं स्वादु लेखनम् ॥ २१७ ॥
पद्मरागाह्वयं मुक्तां विद्रुमं च हरिन्मणिम् ।
पुष्यरागं तथा वज्रमिन्द्रनीलाभिधं पुनः ॥ २१८ ॥
गोमेदकाख्यं वैडूर्यं नवरत्नानि निर्दिशेत् ।
स्वादूनि सकषायाणि चक्षुष्याणि सराणि च ॥ २१९ ॥
विलेखनानि शीतानि पापालक्ष्मीहराणि च ।
विष्णुक्रान्ती च वाराही देवी भृङ्गी शशश्रुतिः ॥ २२० ॥
दूर्वेन्द्रवल्ली लक्ष्मीश्च भद्रा स्पर्शासहेत्यमूः ।
दशपुष्पाभिधानाः स्युः पापालक्ष्मीहराश्शुभाः ॥ २२१ ॥
बालग्रहहरा व्रण्यास्त्रिदोषोत्थज्वरापहाः ।
विल्वकाश्मर्यतर्कारीपाटलाडुण्डुकैर्महत् ॥ २२२ ॥
जयेत् कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ।
ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ २२३ ॥
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।
एताभ्यां दशमूलं स्याद्दोषत्रयविनाशनम् ॥ २२४ ॥
बलापुनर्नवैरण्डसूर्प्यपर्णीद्वयेन च ।
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ॥ २२५ ॥
अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ।
जीवनाख्यन्तु चक्षुष्यं वृष्यं पित्तानिलापहम् ॥ २२६ ॥
तृणाख्यं पित्तजिद्दर्भकाशेक्षुशरशालिभिः ।
एतानि पञ्चमूलानि पञ्च घ्नन्ति त्रिदोषजान् ॥ २२७ ॥
हिध्माकासज्वरश्वासक्षयादीन् बृंहणानि च ।
तीक्ष्णपत्रघटाम्लाम्लवेतसाम्लद्रुमाम्रकैः ॥ २२८ ॥

---

१. ओड्ढ. २. पिणम्पुळि.

पञ्चाम्लमुदितं वातशोफोदरविनाशनम् ।
मरिचं नागरं कृष्णा स्मृतं त्रिकटु तज्जयेत् ॥ २२९ ॥
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।
चविकापिप्पलीमूलपिप्पलीचित्रकौषधैः ॥ २३० ॥
पञ्चकोलं दीप्तिकरं पीनसोदरगुल्मजित् ।
ससैन्धवं षट्पलं तद्वातश्लेष्मज्वरापहम् ॥ २३१ ॥
त्वक्पत्रैलं त्रिजातं स्याच्चतुर्जातं सकेसरम् ।
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ॥ २३२ ॥
शशाङ्करेखा धान्याकं विळङ्गं कौटचं फलम् ।
एला ज्योतिष्मती षट्कं तण्डुलानां त्रिदोषहृत् ॥ २३३ ॥
एवं बहुप्रयोगानामौषधानां गुणैस्सह ।
दिङ्मात्रमत्र गदितं तत्र तत्र च वक्ष्यते ॥ २३४ ॥
एकैकशश्च रोगघ्नाः केचिदन्ये तु यौगिकाः ।
अगदास्तत्प्रपञ्चोऽत्र ग्रन्थभीत्या न लिख्यते ॥ २३५ ॥
भस्मादिपरिणामेन कुर्युरभ्रादयो गुणान् ।
द्रव्यैर्गुणैः क्रियाभिश्च वीक्ष्य कार्याणि धीमता ॥ २३६ ॥
प्रविभज्य यथा दोषं प्रयोज्या रोगशान्तये ।
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ २३७ ॥
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥ २३८ ॥
शीतं भवति पित्तघ्नमुष्णं वातकफापहम् ।
व्यायामाद्याः क्रियाश्च स्युर्दोषघ्न्यो युक्तिसेविताः ॥
किन्तूदरादौ कल्पन्ते विषाद्याः प्राणरक्षकाः ।
अतोऽत्र युक्तियुक्तस्य सर्वमप्यौषधं भवेत् ॥ २४० ॥
शास्त्रप्रसिद्धिगुरुवाक्यबहुप्रयोगै-
स्सिद्धान्यनेकगुणवन्ति महौषधानि ।
एकैकशोऽत्र बहुभिर्मिलितानि वापि
सात्म्यादि साधु परिमृश्य भिषक् प्रयुञ्ज्यात् ॥ २४१ ॥

इति हृदयप्रिये द्रव्यज्ञानकल्पं नाम

अथ चतुर्थोऽध्यायः ।

वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥ १ ॥

विण्मूत्राधोमरुद्रोधे गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्सङ्गप्रमुखा विविधा रुजः ॥ २ ॥

निद्रारोधे मूर्धनेत्रगौरवालस्यजृम्भिकाः ।
शुक्रे धृते तत्स्रवणं गुह्यरुक्श्वयथुज्वराः ॥ ३ ॥

धृतेष्वन्येषु हृद्रोगमन्यास्तम्भारुचिभ्रमाः ।
शिरोर्तीन्द्रियदौर्बल्यप्रमुखाः प्रायशो गदाः ॥ ४ ॥

प्रायेण वातकोपः स्याद् बहुधा वेगधारिणः ।
तस्यानुलोमनं कुर्यादतोऽन्तर्बहिरौषधम् ॥ ५ ॥

विड्रोधे मलविस्रंसं सुखनिद्रां च तत्क्षये ।
स्त्रीसेवां शुक्ररोधे तु गुल्मारुच्यादिके पुनः ॥ ६ ॥

सेवेत वक्ष्यमाणं च यथायोगं चिकित्सितम् ।
धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ॥ ७ ॥

लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ।
धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥ ८ ॥

अतस्त्वन्नानि वक्ष्यन्ते प्रसिद्धानीह कानिचित् ।
मण्डपेयाविलेपीनामोदनस्य च लाघवम् ॥ ९ ॥

यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ।
तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ॥ १० ॥

स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ।
क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ ११ ॥

मलानुलोमनी पथ्या पेया दीपनपाचनी ।
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥ १२ ॥

व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ।
ओदनस्तु लघुः पथ्यः पक्वातीसारकासयोः ॥ १३ ॥

कफरोगेषु चान्यस्स्याद्देहदार्ढ्यबलप्रदः ।
आग्नेयौषधसिद्धश्च सुलघुर्भृष्टतण्डुलः ॥ १४ ॥

सुगुरुश्च भवेत् क्षीरमांसादिक्काथसाधितः ।
इति द्रव्यक्रियायोगमानाद्यैस्सर्वमादिशेत् ॥ १५ ॥

लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ।
कासपित्तप्रशमना दीपना लघवो हिमाः ॥ १६ ॥

पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ।
धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ॥ १७ ॥

सक्तवो लाघवः क्षुत्तृट्छ्रमनेत्रामयव्रणान् ।
घ्नन्ति सन्तर्पणाः पानात् सद्य एव बलप्रदाः ॥ १८ ॥

न केवलान्निशायां च सक्तूनद्यान्नवा बहून् ।
गुरवो बृंहणा वृष्या मोदकास्तु सुदुर्जराः ॥ १९ ॥

बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।
मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥ २० ॥

वातानुलोमी कौलस्थो गुल्मतूनिप्रतूनिजित् ।
प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ॥ २१ ॥

पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ।
सूपापूपादिकानेवं द्रव्यं स्मृत्वा विशेद् गुणान् ॥ २२ ॥

न सर्वाण्यन्नभेदानि कथ्यन्ते ग्रन्थगौरवात् ।
कुकूलकार्परभ्राष्टकन्द्वङ्गारविपाचितान् ॥ २३ ॥

एकयोनीन् लघून्विद्यादपूपानुत्तरोत्तरम् ।
हरिणाद्या मृगाः प्रोक्ता ये भक्ष्यं मृगयन्ति हि ॥ २४ ॥

लावादयो विष्किरास्स्युः पद्भ्यां विक्षिप्य भक्षणात् ।
प्रतुदास्स्युः कपोताद्याश्चञ्च्वा सन्तुद्य भक्षणात् ॥ २५ ॥

बिलेशयास्स्युर्गोधाद्या भूवृक्षविवराश्रयात् ।
गवाद्याः प्रसहाः प्रोक्ताः प्रसह्याशनशीलिताः ॥ २६ ॥

महामृगा वराहाद्या बलगर्वादितः स्मृताः ।
सारसाद्या जलचराः स्युर्जलोपरिवर्तनात् ॥ २७ ॥

रोहितप्रमुखा मत्स्यसंज्ञाः स्युर्ये जलोद्भवाः ।
एवमष्टविधं मांसमेषामाहुस्समासतः ॥ २८ ॥

आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ।
तत्र बद्धमलाश्शीता लघवो जाङ्गला हिताः ॥ २९ ॥

पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।
दीपनः कटुकः पाके ग्राही रूक्षो हिमश्शशः ॥ ३० ॥

नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदशाम् ।
तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मळो गुरुः ॥ ३१ ॥

नातिशीतं गुरु स्निग्धं मांसमाजमदोषळम् ।
उष्णो गरीयान्महिषस्स्वप्नदार्ढ्यबृहत्वकृत् ॥ ३२ ॥

तद्वद्वराहश्श्रमहा रुचिपित्तकफप्रदः ।
मत्स्याः परं कफकराश्चिलिचीमस्त्रिदोषकृत् ॥ ३३ ॥

मांसं सद्योहतं शुद्धं वयस्थं च भजेत्त्यजेत् ।
स्वयं मृतं कृशं पूति व्याधिवारिविषैर्हतम् ॥ ३४ ॥

ओदनो विषवान् सान्द्रो भवेत् पर्युषितोपमः ।
मयूरकण्ठतुल्योष्मा गन्धवर्णादिवर्जितः ॥ ३५ ॥

व्यञ्जनान्याशु शुष्यन्ति श्यावकोथानि तत्र च ।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ ३६ ॥

पाकः फलानामामानां पक्वानां परिकोथनम् ।
मृदूनां कठिनानां च भवेत् स्पर्शविपर्ययः ॥ ३७ ॥

आर्द्रेषु तत्तद्द्रव्येषु रेखाः स्युर्भिन्नवर्णकाः ।
असेव्यता मक्षिकादेर्मोहवैराग्यदायिता ॥ ३८ ॥

गन्धवर्णाद्यन्यथात्वं प्रायस्सविषलक्षणम् ।
इत्यन्नं सविषं ज्ञात्वा त्यजेदाशु विचक्षणः ॥ ३९ ॥

स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ।
नखरोमच्युतिश्शोफसेकाद्या विषनाशनाः ॥ ४० ॥

शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ।
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ॥ ४१ ॥

भुक्ते तु स्वेदरोमाञ्चमूर्च्छाध्मानभ्रमादयः।
आमाशयस्थे तु वमिश्चक्षुर्हृदयरोधनम्॥ ४२॥
पक्वाशयेनैकवर्णं मूत्रातीसारसम्भवः।
तयोर्वान्तविरिक्तस्य हरिद्रे कटभीङ्गुदम्॥ ४३॥
सिन्दुवारकनिष्पाववाष्पिकाशतपर्विकाः।
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम्॥ ४४॥
नावना(द्य)न्नपानेषु योजयेद्विषशान्तये।
विषपीताय दद्याच्च सूक्ष्मं ताम्ररजस्ततः॥ ४५॥
सक्षौद्रं हृद्विशुध्यर्थं शाणं स्वर्णरजस्ततः।
न सज्जेद्धेमपस्याङ्गे पद्मपत्रेऽम्बुवद्विषम्॥ ४६॥
क्रियां विषोक्तां कुर्याच्च गरेऽप्येष विधिः स्मृतः।
विरुद्धमपि चाहारं विद्याद्द गरविषोपमम्॥ ४७॥
विरुद्धमम्लं पयसा माषाद्यैर्लैकुचं फलम्।
फलं कदल्यास्तक्रेण दध्ना तालफलेन वा॥ ४८॥
मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः।
एकत्र वा समांशानि विरुध्यन्ते परस्परम्॥ ४९॥
भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः।
वराहवसया भ्रष्टा बलाका हन्त्यसून् क्षणात्॥ ५०॥
इत्यादिका बहुविधा विरुद्धास्सन्त्यनिष्टदाः।
यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः॥ ५१॥
विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः।
व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनाम्॥ ५२॥
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम्।
पादेनापथ्यमभ्यस्तं त्यजेत्सेवेत वा हितम्॥ ५३॥
असात्म्यजा हि रोगास्स्युस्सहसा त्यागशीलनात्।
क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः॥ ५४॥
प्राप्नुवन्त्यपुनर्भावमप्रकम्प्या भवन्ति च।
आहारशयनाब्रह्मचर्यैर्युक्त्या निषेवितैः॥ ५५॥

शरीरं धार्यते नित्यमागारमिव धारणैः ।
शुद्धे मूत्रमलाधारे शुद्धोद्गारे क्षुदुद्भवे ॥ ५६ ॥
स्वच्छे हृदि लघौ देहे दोषे स्वस्थेऽशनं हितम् ।
मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ॥ ५७ ॥
जीर्येद्यावत् सुखं यस्य सा मात्रा तस्य कीर्तिता ।
गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ॥ ५८ ॥
अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ५९ ॥
अथान्नमिष्टोपहृतमिष्टमिष्टजनैस्सह ।
षष्टिकादिकृतं मृष्टमश्नीयात्तुष्टिपुष्टिदम् ॥ ६० ॥
षड्रसं मधुरप्रायं सात्म्यं स्निग्धोष्णमादरात् ।
गुरुस्निग्धयुतं पूर्वं मध्येऽम्ललवणोत्कटम् ॥ ६१ ॥
लघुरूक्षोत्तरं चान्ते कृतकृत्यो हिताहितम् ।
समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः ॥ ६२ ॥
अनुपानं हिमं वारि यवगोधूमयोर्हितम् ।
दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु ॥ ६३ ॥
शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ।
व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः ॥ ६४ ॥
क्षीणे बाले च वृद्धे च पयः पथ्यं यथामृतम् ।
पयस्सुरा वा पुष्ट्यर्थं कर्शनार्थं मधूदकम् ॥ ६५ ॥
विपरीतं यदन्नस्य गुणैस्स्यादविरोधि च ।
अनुपानं समासेन सर्वदा तत् प्रशस्यते ॥ ६६ ॥
अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढांगताम् ।
अन्नसङ्घातशैथिल्यविक्लेदजरणानि च ॥ ६७ ॥
नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
गीतभाष्यप्रसङ्गे च स्वरसादे च तद्धितम् ॥ ६८ ॥
प्रक्लिन्नदेहमेहाक्षिगळरोगव्रणातुराः ।
पानं त्यजेयुस्सर्वं च स्वल्पं वा पथ्यमापदि ॥ ६९ ॥

भोजनं हीनमात्रन्तु न बलोपचयौजसे ।
अतिमात्रं पुनस्सर्वानाशुदोषान् प्रकोपयेत् ॥ ७१ ॥
पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ।
आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ॥ ७२ ॥
विष्टंभयन्तोऽलसकं च्यावयन्तो विषूचिकाम् ।
अधरोत्तरमार्गाभ्यां सहसा वाजितात्मनाम् ॥ ७३ ॥
पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ।
शूलादीन् कुरुते तीव्रान् छर्द्यतीसारवर्जितान् ॥ ७४ ॥
सोऽलसोऽत्यर्थदुष्टास्तु दोषास्तिर्यग्गताः पुनः ।
स्तम्भयन्त्यधिकं देहं त्याज्यो दण्डालसो हि सः ॥ ७५ ॥
अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।
पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ ७६ ॥
स्वेदनं फलवर्तिञ्च मलवातानुलोमनीम् ।
नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥ ७७ ॥
तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
अनग्निमातुरं हन्यादामदोषौपधाद्भ्रमः[1] ॥ ७८ ॥
शुद्धे जीर्णे च भेषज्यं युञ्ज्यात् स्तब्धगुरूदरे ।
दोषशेषस्य पाकार्थमग्नेस्सन्धुक्षणाय च ॥ ७९ ॥
विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणः ।
आमदोषो महाघोरो विषूच्यादिकरो भवेत् ॥ ८० ॥
विषूच्यां दीपनं दद्याद्वातश्लेष्महरञ्च यत् ।
पाननस्याञ्जने शस्तो बिल्वादिर्विषकल्पितः ॥ ८१ ॥
पाणिपादोदरे तापः पोट्टल्या च प्रशस्यते ।
क्वाथं बिल्वाजमोजाद्यं काळशाकादिकं पिबेत् ॥ ८२ ॥
पिपासायां दुस्सहायां माक्षिकव्योषसंयुतम् ।
नाळिकेरोदकं दद्याल्लाजबिल्वकृताम्बु वा ॥ ८३ ॥

१. 'भ्रः क्रमात' इति पाठभेदः

विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहो विधीयते ।
यश्श्यावदन्तोष्ठनखो रक्तान्तर्गतलोचनः ॥ ८४ ॥

क्षामस्वरः स्तब्धतनुस्स्रस्तसन्धिश्च तं त्यजेत् ।
निद्रया स्युस्सुखं चायुःपुष्टिर्ज्ञानं बलोद्यमौ ॥ ८५ ॥

तेषां विपर्ययं दद्यात् हीना चाकालजा च सा ।
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥ ८६ ॥

ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ।
दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः ॥ ८७ ॥

वृद्धबालाबलक्षीणक्षततृट्रोगिणां[1] हितः ।
अजीर्ण्यभिहतोन्मत्तहिध्माश्वासातिसारिणाम् ॥ ८८ ॥

दिवास्वप्नोचितानां च तन्निषेधो न युज्यते ।
बहुमेदः कफास्स्वप्युः स्नेहनित्याश्च नाहनि ॥ ८९ ॥

विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ९० ॥

चिन्ताव्यवायादि तथा यच्चान्यत् कफनाशनम् ।
शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ॥ ९१ ॥

अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ।
वातघ्नं कफकृच्चान्यद्विषयं मनसः प्रियम् ॥ ९२ ॥

असात्म्यजागरादर्धं प्रातः स्वप्यादभुक्तवान् ।
ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ ९३ ॥

निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते ।
ग्राम्यधर्मे त्यजेन्नारीं दुष्टसंकीर्णमेहनाम् ॥ ९४ ॥

अनुत्तानामप्रियां च देवगुर्वादिमन्दिरम् ।
अकालमन्यवेगार्तः कुर्यान्नात्याशितोऽपि तम् ॥ ९५ ॥

सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ॥ ९६ ॥

---

१. 'चङ्क्रमरोगिणाम्' इति पाठभेदः.

भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः ।
अकालमरणं च स्यादन्यथागच्छतः स्त्रियम् ॥ ९७ ॥
जीवनीयौषधक्षीररतर्पणं तस्य भेषजम् ।
स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ॥ ९८ ॥
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ।
सुरते विरते स्नानं चन्दनाद्यनुलेपनम् ॥ ९९ ॥
सुराक्षीरादिपानं च कृत्वा स्वप्याद्यथासुखम् ।
सम्यङ्निराकृतशरीरमनोमलस्य
 काले कृतोचितमितात्महिताशनस्य।
निद्राविधिं निधुवनं भजतो यथोक्तं
 बुद्धेर्बलं सुभगता च भवेच्चिरायुः ॥ १०० ॥

इति हृदयप्रिये प्रथमखण्डे आहारादिकल्पं नाम
चतुर्थोऽध्यायः ॥

---

अथ पञ्चमोऽध्यायः ।

रसाद्विपाकाद्वीर्याच्च प्रभावाच्च चतुर्विधा ।
द्रव्येषु कथ्यते शक्तिः बलवत्युत्तरोत्तरम् ॥ १ ॥
पञ्चभूतात्मकं द्रव्यं तेषां न्यूनातिरेकतः ।
नानार्थकारिताहेतुर्व्यपदेशस्तु भूयसा ॥ २ ॥
सम्मिश्रेऽपि रसे तत्र जिह्वाग्राह्यः स्फुटो रसः ।
अस्फुटोऽनुरसः प्रोक्तस्तयोर्मिश्रस्त्वनेकधा ॥ ३ ॥
जाठरेणाग्निना पाके रसानां परिणामतः ।
यो रसोऽन्यो विपाकस्स रसेभ्योऽपि बलाधिकः ॥ ४ ॥
स्वाद्वम्लकटुरूपेण विपाकस्त्रिविधो मतः ।
स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ॥ ५ ॥
तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ।
शीतमुष्णमिति द्वेधा वरत्वाद्वीर्यमिष्यते ॥ ६ ॥
गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिरान् ।
सस्थूलपिच्छिलान् प्राहुर्गुणान् शैत्यकरान् दश ॥ ७ ॥

लघूंस्तीक्ष्णाग्ररूक्षत्वपरुषद्रवसंयुतान् ।
काठिन्यगुरुसूक्ष्मत्वविशदांस्तुल्यकार्यदान् ॥ ८ ॥
रसादिसाम्ये यत् कर्म विशिष्टं तत् प्रभावजम् ।
दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी ॥ ९ ॥
मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ।
किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् ॥ १० ॥
गुणान्तरेण वीर्येण प्रभावेनैव किञ्चन ।
कुरुते जन्तुतः सात्म्यात् स्वादुर्धातुप्रबलं बलम् ॥ ११ ॥
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ।
प्रशस्तो बृंहणः कण्ठ्यः स्तन्यसन्धानकृद्गुरुः ॥ १२ ॥
आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ।
कुरुतेऽत्युपयोगेन स मेदःश्लेष्मजान् गदान् ॥ १३ ॥
स्थौल्याग्निसादसन्यासमेहगण्डार्बुदादिकान् ।
अम्लोऽग्निर्दीप्तिकृत् स्निग्धो हृद्यः पाचनरोचनः ॥ १४ ॥
उष्णवीर्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ।
करोति कफपित्तास्रं मूढवातानुलोमनम् ॥ १५ ॥
सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम् ।
कण्डूपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ॥ १६ ॥
लवणः स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ।
स्नेहनः स्वेदनस्तीक्ष्णो रोचनः छेदभेदकृत् ॥ १७ ॥
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ।
तृट्कुष्ठविषवीसर्पं जनयेत् क्षपयेद् बलम् ॥ १८ ॥
तिक्तः स्वयमरोचिष्णुररुचिक्रिमितृड्विषान् ।
कुष्ठमूर्च्छाज्वरोत्क्लेददाहपित्तकफान् जयेत् ॥ १९ ॥
क्लेदमेदोवसामज्जाशकृन्मूत्रोपशोषणः ।
लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ॥ २० ॥
धातुक्षयं चलव्याधीनतियोगात् करोति सः ।
कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ॥ २१ ॥

व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः ।
दीपनः पाचनो रुच्यश्शोधनोऽन्नस्य रूक्षणः ॥ २२ ॥
भिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ।
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ॥ २३ ॥
मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ।
कषायः पित्तकफहा गुरुरस्रविशोधनः ॥ २४ ॥
पीडनो रोपणश्शीतक्लेदमेदोविशोषणः ।
आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ॥ २५ ॥
करोति शीलितस्सोतिविष्टम्भाध्मानहृद्रुजः ।
तृट्कार्श्यपौरुषभ्रंशस्रोतोबन्धमलग्रहान् ॥ २६ ॥
मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमतः क्षौद्रात्सितायाः जांगलामिषात् ॥ २७ ॥
प्रायोऽम्लं पित्तजननं डाडिमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुष्योऽन्यत्र सैन्धवात् ॥ २८ ॥
तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥ २९ ॥
कषायः प्रायश्शीतस्स्तम्भनश्चाभयां विना ।
रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥ ३० ॥
तिक्तः कषायो मधुरस्तद्वदेव च शीतलः ।
तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥ ३१ ॥
पट्वम्लमधुराः स्निग्धास्सृष्टविण्मूत्रमारुताः ।
पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३२ ॥
लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ।
घृतहेमगुळाक्षोळमोचतालपरूपकम् ॥ ३३ ॥
अभीरुवीरापनसराजातनबलात्रयम् ।
मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभम् ॥ ३४ ॥
मधूकं मधुकं बिंबी विदारी श्रावणीयुगम् ।
क्षीरशुक्ला तुकाक्षीरी क्षीरिण्यः काश्मरी सहे ॥ ३५ ॥

क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।
अम्लो धात्रीफलाम्लीकामातुलुंगाम्लवेतसम् ॥ ३६ ॥
डाडिमं रजतं तक्रं शुक्तं पारावतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ ३७ ॥
वरं सौवर्चलं कृष्णं विडं सामुद्रमौद्भिदम् ।
रोमकं पांसुजं सीसं क्षारश्च लवणो गणः ॥ ३८ ॥
तिक्तः पटोली त्रायन्ती वालकोशीरचन्दनम् ।
भूनिम्बनिम्बकटुका तगरागरुवत्सकम् ॥ ३९ ॥
नक्तमालं द्विरजनी मुस्ता मूर्वाटरूषकम् ।
पाठापामार्गकं सायोगुडूचीधन्वयापकम् ॥ ४० ॥
पञ्चमूलं महद्व्याघ्र्यौ विशालातिविषा वचा ।
कटुको हिङ्गुमरिचकृमिजित्पञ्चकोलकम् ॥ ४१ ॥
कुठेराद्या हरितकं पित्तं मूत्रमरुष्करम् ।
वर्गः कषायः पथ्याक्षश्शिरीषः खदिरो मधु ॥ ४२ ॥
कदम्बोदुम्बरं मुक्ता प्रवालाञ्जनगैरिकम् ।
बालं कपित्थं खर्जूरं बिसं पद्मोत्पलादि च ॥ ४३ ॥

द्रव्यप्रभेदेषु रसं विपाकं
वीर्यं प्रभावं परिमृश्य साधु ।
समाहितात्मा विधिवत् प्रयुञ्जन्
भिषक् पृथिव्यामुपयाति कीर्तिम् ॥ ४४ ॥

इति हृदयप्रिये प्रथमखण्डे रसादिनिरूपणकल्पं नाम
पञ्चमोऽध्यायः ॥

---

## अथ षष्ठोऽध्यायः ।

शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशचोदितः ।
गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥
बीजात्मकैर्महाभूतैस्सूक्ष्मैस्सत्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्धते ॥ २ ॥

कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां बिल्वजेनासवेन वा ॥ ५९ ॥
शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ।
सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ ६० ॥
तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।
शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ॥ ६१ ॥
निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्सङ्गे ह्यनिलो हेतुस्सा निर्यात्याशु तज्जयात् ॥ ६२ ॥
कुशला पाणिनाक्तेन हरेत् क्लृप्तनखेन वा ।
मुक्तगर्भाऽपरां योनिं तैलेनाभ्यज्य मर्दयेत् ॥ ६३ ॥
मक्कलाख्ये शिरोवस्तिकोष्ठशूले तु पाययेत् ।
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ६४ ॥
धान्याम्बु वा गुळव्योषत्रिजातकरजोऽन्वितम् ।
सूता च वायुशान्त्यर्थं पञ्चकोलयुतं घृतम् ॥ ६५ ॥
तैलं वानुगुळाम्बूष्णं पिबेद्वा वातहृज्जलम् ।
त्र्यहादूर्ध्वं विदार्याद्यैः पेया स्नानं सुखाम्भसा ॥ ६६ ॥
सप्तरात्रात् परं चास्याः क्रमशो बृंहणं हितम् ।
यत्नेनोपचरेत्सूतां दुस्साध्या हि तदामयाः ॥ ६७ ॥
मासद्वयात्त्रिमासाद्वा गतसूताभिधा भवेत् ।
गर्भव्यापदि कर्तव्यं क्रमादथ निगद्यते ॥ ६८ ॥
पुष्पे जाते तु गर्भिण्याश्शूले वा स्निग्धशीतळम् ।
कार्यमन्तर्बहिः क्षीरीवल्कसेव्यहिमादिभिः ॥ ६९ ॥
साज्यैर्भृशार्द्राश्च पिचून्योनौ वस्तौ च धारयेत् ।
शतधौतघृतालेपः क्षीर्याद्यम्भोवगाहनम् ॥ ७० ॥
पिबेत् कान्ताब्जशालूकबालोदुम्बरवत् पयः ।
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ७१ ॥
पेयाममद्यपा कल्के साधितां पञ्चकोलके ।
लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत् ॥ ७२ ॥

मासतुल्यदिनान्येवं पेयादिः पन्तिते क्रमः ।
लघुरस्नेहलवणो दीपनीययुतो हितः ॥ ७३ ॥

सञ्जातसारो यो गर्भो योनिस्रावाद्वृद्धिमान् ।
वर्तते रास्फुरः कोष्ठे तमाहुरुपविष्टकम् ॥ ७४ ॥

वातकोपात् कृशे गर्भे शुष्येन्नागोदरन्तु तत् ।
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ ७५ ॥

तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।
घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ ७६ ॥

एवं पुष्टो भवेन्नोचेद्वर्षैर्जायेत नैव वा ।
उदावर्तन्तु गर्भिण्याः स्नेहैराशुतरं जयेत् ॥ ७७ ॥

योगैश्च वस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम् ।
गर्भे त्रिदोषप्रकोपादपथ्यैर्दैवतोऽपि वा ॥ ७८ ॥

मृतेऽन्तरुदरं शीतं स्तब्धाध्मातं भृशव्यथम् ।
गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्रमः ॥ ७९ ॥

अरतिस्रस्तनेत्रत्वमवीना मुहुर्भ्रमः ।
तस्याः कोष्णाम्बुसिक्ताङ्गाः पिष्ट्वा योनिं प्रलेपयेत् ॥

गुळं किण्वं सलवणं तथान्तः पूरयेन्मुहुः ।
घृतेन कल्कीकृतया *शाल्मल्यसितपिच्छया ॥ ८१ ॥

मन्त्रैर्योगैर्जरायूक्तैर्मूढगर्भो नचेत् पतेत् ।
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ ८२ ॥

हस्तमभ्यज्य योनिञ्च साज्यशाल्मलिपिच्छया ।
हस्तेन शक्यं तेनैव गात्रं च विषमस्थितम् ॥ ८३ ॥

आञ्छनोत्पीडसंपीडविक्षेपोत्क्षेपणादिभिः ।
आनुलोम्य समाकर्षेत् योनिं प्रत्यार्जवागतम् ॥ ८४ ॥

हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।
पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः ॥ ८५ ॥

विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।
मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ८६ ॥

---

* 'शाल्मल्युदित' इति पाठभेदः.

वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववतारयेत्
पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ८७ ॥
कक्षयोरस्तालुचिबुकप्रदेशान्यतमे ततः ।
समालम्ब्य दृढं कर्षेत् कुशलो गर्भशङ्कुना ॥ ८८
अभिन्नशिरसन्त्वक्षिकूटयोर्गण्डयोरपि ।
बाहुं छित्वांसंसक्तस्य वाताध्मातोदरस्य तु ॥ ८९
विदार्य कोष्ठमान्त्राणि बहिस्सम्यङ्निरस्य च ।
कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ९० ॥
यद्यद्वायुवशादङ्गं सज्जेद् गर्भस्य खण्डशः ।
तत्तच्छित्वा हरेत्सम्यग्रक्षन् नारीञ्च यत्नतः ॥ ९१
गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ।
तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ९२ ॥
छिन्द्याद् गर्भं न जीवन्तं मातरं स हि मारयेत् ।
सहात्मना न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ९३
योनिसंवरणभ्रंशमक्कलश्वासपीडिताम् ।
पूत्युद्गारां हिमाङ्गीञ्च मूढगर्भां परित्यजेत् ॥ ९४
अपरापातनाद्यौ तु पूर्वोक्तैव क्रिया हिता ।
स्नेहोष्णजलसेकाद्या वातघ्ना दीपनाः पुनः ॥ ९५
उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत् ।
बलायवाषमुद्गाब्दधान्यपर्पटकार्द्रकैः ॥ ९६ ॥
लघुना पञ्चमूलेन क्वाथः सूताज्वरं जयेत् ।
तैलं धान्वन्तरं चास्या बलातैलं च शस्यते ॥ ९७

अल्पेन मर्माश्रयिणाध्वना यत्
सूते सुखं सा खलु दैवशक्तिः ।
तद्गर्भसङ्गेऽपि तदाश्रयात्मा
समाहृतौ साधु यतेत वैद्यः ॥ ९८ ॥

इति हृदयप्रिये प्रथमखण्डे गर्भोपचारकल्पो नाम षष्ठोऽध्यायः ॥

## अथ सप्तमोऽध्यायः ।

जातमात्रं विशोध्योल्बात् बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥ १ ॥
अश्मनोर्वादनं कर्णे कुर्याच्च चतुरङ्गुलात् ।
ऊर्ध्वं सूत्रेण नाभिञ्च बध्वा छित्वोर्ध्वमानयेत् ॥ २ ॥
सेचयेत् कुष्ठतैलेन नाभिं गन्धोदकैः पुनः ।
क्षीरीवृक्षकषायैर्वा स्नापयेत् स्वर्णतापितैः ॥ ३ ॥
उन्नाम्य तालु तर्जन्या मूर्ध्नि स्नेहपिचुं क्षिपेत् ।
द्वाराभावे गुदास्यादौ युक्त्या शस्त्रेण पाटयेत् ॥ ४ ॥
हेमधात्रीरजोयुक्तं मध्वाज्यमभिमन्त्रितम् ।
हरेणुमात्रं मेधायुर्बलार्थं प्राशयेत्तथा ॥ ५ ॥
ऐन्द्रीब्राह्मीवचाशंखपुष्पीकल्कं घृतं मधु ।
गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ॥ ६ ॥
गर्भोदमिश्रे रुगिति स्तन्यं न त्रिदिनं हितम् ।
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ ७ ॥
अनन्तामिश्रिते दद्याद्यष्टी सर्पिस्तथान्ययोः ।
प्रायश्चतुर्थे दिवसे स्तन्यं मातुः प्रवर्तते ॥ ८ ॥
ततः कालद्वये दद्यात्तत्पाणितलसम्मितम् ।
नवनीतमनु स्तन्यं पाययेच्च यथोचितम् ॥ ९ ॥
पुष्ट्यै स्तन्यं मातुरेव दद्याद्धाञ्यास्तदापदि ।
शुक्क्रोधलङ्घनायासांस्त्यजेत् सा हितभोजना ॥ १० ॥
स्तन्ये क्षीणे शृतं क्षीरं क्षीरिणीजीवनौषधैः ।
दशमूलादियुक्तं वा यथादोषं पिबेद्वधूः ॥ ११ ॥
यदद्भिरेकतां याति तद्विशुद्धं पयो वदेत् ।
वाताद्दुष्टं फेनिलञ्च रूक्षमुत्प्लवतेऽम्भसि ॥ १२ ॥
पित्तादुष्णाम्लकटुकं पीतराज्यप्सु दाहकृत् ।

संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ।
तत्तद्रोगकरं स्तन्यं शोधयेत्तत्तदौषधैः ॥ १४ ॥

स्तन्याभावे पयः छागं गव्यं वा तद्गुणं हितम् ।
दशमेऽह्नि यथाचारं सूतिकोत्थानमाचरेत् ॥ १५ ॥

नामापि शस्तं बालस्य द्वादशे दिवसे वदेत् ।
ततः कुलोचिते काले यथाचारं शुभेऽहनि ॥ १६ ॥

कर्णौ दैवकृते छिद्रे विध्यादभ्यङ्गवर्तिनः ।
प्राग्दक्षिणं कुमारस्य भिषग्वामन्तु योषितः ॥ १७ ॥

कालिकोर्ध्वमधो रिक्ता मर्मरी पार्श्वयोस्सिराः ।
तद्वेधाज्ज्वररुक्शोफमन्यास्तम्भापतानकाः ॥ १८ ॥

यथादोषं क्रिया तेषां स्थाने नास्रग्रुजोद्भवः ।
सञ्चार्ये वर्तिं स्नेहाक्तां स्थूलां दद्यात् त्र्यहे त्र्यहे ॥ १९ ॥

अथान्नं प्राशयेद्युक्तं क्षीरं च लघु बृंहणम् ।
व्याधींश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ॥ २० ॥

क्षीरादिमधुरस्नेहप्राशनाच्च वयोवशात् ।
प्रायः कफोद्भवा रोगा हितं तद्वमनं मुहुः ॥ २१ ॥

स्तन्यस्य तृप्तं क्षीरान्नक्षीरपं वामयेच्छिशुम् ।
पीतवन्तं तनुं पेयामन्नादं घृतसंयुताम् ॥ २२ ॥

विरेचनं रोगवशात् कुर्याद्योगैश्शिशूचितैः ।
शिशोस्तीक्ष्णामतीक्ष्णाञ्च रोदनाल्लक्षयेद्रुजम् ॥ २३ ॥

स्वयं स्पृशेत यं देशं यत्राङ्गं स्पर्शनाक्षमम् ।
तत्र विद्याद्रुजं मूर्धरुजं चाक्षिनिमीलनात् ॥ २४ ॥

हृदि जिह्वोष्ठदशनश्वासमुष्टिनिपीडनैः ।
कोष्ठे विबन्धवमथुस्तनद्वेषान्त्रकूजनैः ॥ २५ ॥

आध्मानपृष्ठनमनजठरोन्नमनैरपि ।
वस्तौ गुह्ये च विण्मूत्रसङ्गोत्रासदिगीक्षणैः ॥ २६ ॥

अथ धात्र्याः क्रियां कुर्यात् स्तन्यपस्य यथामयम् ।
तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ॥ २७ ॥

अथवाग्निवचापाठाकटुकाकुष्ठदाप्यकम् ।
समार्ङ्गीदारुसरलवृश्चिकालीकणोषणम् ॥ २८ ॥
ततो घृतं वातहरं रेकस्वेदादि चोचितम् ।
रास्नाजमोजसरलदेवदारुरजोन्वितम् ॥ २९ ॥
बालो लिह्याद् घृतं तैर्वा विपक्वं ससितोपलम् ।
पित्तदुष्टेऽमृताभीरुपटोलीनिम्बचन्दनम् ॥ ३० ॥
धात्री कुमारश्च पिबेत् क्वाथयित्वा सशारिवम् ।
शारिवादिं पटोलादिं पद्मकादिन्तथा गणम् ॥ ३१ ॥
तैर्घृतं वा पित्तहरो विरेकश्शीतलेपनम् ।
कफात्मके वामयित्वा धात्रीं मुस्तादि पाययेत् ॥ ३२ ॥
तद्वत् तगरपृथ्वीकासुरदारुकलिङ्गकान् ।
अथवातिविषामुस्तापट्वग्रन्थापञ्चकोलकम् ॥ ३३ ॥
यष्ट्याह्वसैन्धवयुतं कुमारं पाययेत् घृतम् ।
सिन्धूत्थपिप्पलीभ्यां वा पिष्टैः क्षौद्रयुतैरथ ॥ ३४ ॥
राठपुष्पैः स्तनौ लिम्पेच्छिशोस्तु दशनच्छदौ ।
सुखमेवं वमेद्बालः तगराद्यं च पाययेत् ॥ ३५ ॥
स्तन्ये त्रिदोषमलिने दुर्गन्ध्यामं जलोपमम् ।
विबद्धमच्छं विच्छिन्नं पिच्छिलं चोपवेश्यते ॥ ३६ ॥
शकृन्नानाव्यथावर्णं मूत्रं पीतं घनं सितम् ।
ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृम्भिकाः ॥ ३७ ॥
अङ्गभङ्गोऽङ्गविक्षेपः कूजनं वेपथुर्भ्रमः ।
घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम् ॥ ३८ ॥
क्षीरालसकमित्याहुरत्ययञ्चातिदारुणम् ।
धात्रीं शिशुं वामयित्वा वचादिं योजयेद् गणम् ॥ ३९ ॥
निशादिं वाथवा माद्रीपाठातिक्ताघनामयान् ।
पाठाशुण्ठ्यमृतातिक्तादेवाह्वकणशारिवाः ॥ ४० ॥
समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहराः परम् ।
दन्तोत्पत्तौ ज्वरच्छर्दिकासनेत्ररुजादयः ॥ ४१

जायन्तेऽत्र यथादोषं कुर्याद्युक्त्या चिकित्सितम् ।
दन्तपालीं समधुना चूर्णेन प्रतिसारयेत् ॥ ४२ ॥

पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ।
दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ॥ ४३ ॥

स्वयमप्युपशाम्यन्ति जातदन्तस्य तद्गदाः ।
समङ्गाधातकीलोध्रकुटन्नटबलाद्वयैः ॥ ४४ ॥

महासहाक्षुद्रसहामुद्गविल्वशलाटुभिः ।
सकार्पासीफलैस्तोये साधितं साधितं घृतम् ॥ ४५ ॥

क्षीरमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ।
विविधानामयानेतद्वृद्धकाश्यपनिर्मितम् ॥ ४६ ॥

सैन्धवं व्योषशार्ङ्गेष्ठापाठागिरिकदम्बकान् ।
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ॥ ४७ ॥

स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ।
निचुलोत्पलवर्षाभूभार्ङ्गीमुस्तैश्च कार्षिकैः ॥ ४८ ॥

सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ।
सिंह्यश्वगन्धासुरसकृष्णागर्भश्च तद्गुणम् ॥ ४९ ॥

यष्ट्याह्वपिप्पलीलोध्रपद्मकोत्पलचन्दनैः ।
तालीसशारिबाभ्यां च साधितं शोषजिद् घृतम् ॥ ५० ॥

वचावयस्थातगरकायस्थाचोरकैः शृतम् ।
बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम् ॥ ५१ ॥

लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम् ।
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ॥ ५२ ॥

समूर्वारोहणीरास्नाशताह्वामधुकैस्समैः ।
सिद्धं लाक्षादिकन्नाम तैलमभ्यञ्जनादिदम् ॥ ५३ ॥

बल्यं ज्वरक्षयोन्मादश्वासापस्मारपाप्मजित् ।
यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ॥ ५४ ॥

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ ५५ ॥

तालुपाकः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ।
तृष्णास्यकर्णाक्षिरुजा ग्रीवादुर्धरता वमिः ॥ ५६ ॥

तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ।
तालु तद्वत् कणाशुण्ठीगोशकृद्रससैन्धवैः ॥ ५७ ॥

हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ॥ ५८ ॥

मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ।
ताम्रो व्रणोऽन्तः कण्डूमान् जायते भूर्युपद्रवः ॥ ५९ ॥

स्तन्यदोषोद्भवं प्रायो गुदकुट्टं वदन्ति तम् ।
तत्र धात्र्याः पयश्शोध्यं पित्तश्लेष्महरौषधैः ॥ ६० ॥

शृतशीतं च शीताम्बु पाययेदन्तरान्तरा ।
सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत् ॥ ६१ ॥

त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम् ।
कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः ॥ ६२ ॥

लेपयेदम्लपिष्टैर्वा चूर्णितैरवचूर्णयेत् ।
सुसूक्ष्मैरथवा यष्टीशङ्खसौवीरकाञ्जनैः ॥ ६३ ॥

रागकण्डूत्कटे कुर्याद्रक्तस्रावं जलौकसा ।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ ६४ ॥

पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ।
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ॥ ६५ ॥

मधुनातिविषाशुण्ठीपिप्पलीर्लेहयेच्छिशुम् ।
त एव दोषा दूष्या ये ज्वराद्या व्याधयश्च यत् ॥ ६६ ॥

अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ।
मृदुत्वादल्पकायत्वात् सर्वान्नानुपसेवनात् ॥ ६७ ॥

मूर्धोष्मणि तु बालानां स्तन्यामलकचन्दनैः ।
मूर्ध्न्यालेपो हितोऽथास्य पिटकायां तु मस्तके ॥ ६८ ॥

क्षीरेणोदुम्बरफलं द्रोणपुष्पं तिलं समम् ।
पक्त्वा पिष्ट्वा समालिम्पेन्नवनीतेन योजितम् ॥ ६९ ॥

हरिचन्दनयष्ट्याह्वपथ्याः पिष्टा घृतेन वा ।
दूर्वारसे घृतं यष्टीकल्कं तद्व्रणनाशनम् ॥ ७० ॥
कपालार्शसि जाते तु धुर्धूरस्वरसे पचेत् ।
तद्बीजकल्कं केराज्यं तदभ्यङ्गे प्रशस्यते ॥ ७१ ॥
पत्रैर्मातुलताम्बूलतुलसीनां विमर्जितम् ।
सगेहधूमैः केराज्यं कपालार्शोविनाशनम् ॥ ७२ ॥
दूर्वागुळूचीस्वरसे गोपीचन्दनयष्टिभिः ।
सेव्येन सपयस्तैलं शस्तं बालविसर्पके ॥ ७३ ॥
कर्णान्तरस्था पिटका दूर्वाक्षीरिभवाळकैः ।
निशानिम्बदळोपेतैस्तक्रे पक्त्वा सुपेषितैः ॥ ७४ ॥
प्रशाम्येन्मधुसंयुक्तैर्लेपात्सा तु कफोत्कटा ।
शुण्ठीरास्नाभृङ्गगेहैस्तक्रपिष्टैर्विधीयते ॥ ७५ ॥
कर्णपूयन्तु पिचुना साधु संशोध्य पूरयेत् ।
कर्णौ कुलस्थमधुना केराज्यं चात्र शस्यते ॥ ७६ ॥
तुलसीस्वरसे सिद्धं कुन्दुरुष्कं वचा निशा ।
कारस्करात् किसलयं चैतैरिन्दुविमिश्रितम् ॥ ७७ ॥
जम्बीरपत्रस्वरसे कार्पासास्थिप्रसाधितम् ।
तैलं च कर्णपूरेण पूयस्रुतिविनाशनम् ॥ ७८ ॥
विल्व*दूर्वादलरसे कृष्णजीरककल्कितम् ।
तैलं केरपयोयुक्तमभ्यङ्गात् कर्णपूयनुत् ॥ ७९ ॥
पाककण्डूरक्तदुष्टे नेत्रे सेचनमाचरेत् ।
रसेन पल्लवोत्थेन मधुयुक्तेन बिन्दुशः ॥ ८० ॥
शिग्रोर्वा सहदेव्या वा मायूर्या भ्रमरस्य वा ।
कोष्णाम्बुयुक्तक्षीरेण हितं वर्त्मप्रमार्जनम् ॥ ८१ ॥
शुक्रोद्भवे फलं पुष्पं दलं च रजतारिजम् ।
प्रमर्द्य स्तन्यसहितं सिञ्चेच्छुक्रप्रशान्तये ॥ ८२ ॥
सहदेवीरसे मग्नशोषितां त्रिदिनं पिचुम् ।
वराम्लीकापत्रसिरापारन्तीपुष्पचूर्णकैः ॥ ८३ ॥

---

* 'मूर्वा' इति पाठभेदः.

श्वतुल्यक्रोशनं वाजिविड्गन्धो बहिरायतिः ।
पितृग्रहादतीसारच्छर्दिर्मुष्टिनिबन्धनम् ॥ ९८ ॥

अङ्गेष्वाक्षेपविक्षेपौ शवगन्धो विवर्णता ।
पक्षिग्रहादतीसारस्स्रस्ताङ्गत्वं मुखे व्रणः ॥ ९९ ॥

गुदेऽपिवा सन्धिषु स्युः स्फोटा रुग्दाहपाकिनः ।
निशाबला दिवाक्षीणा भीतिश्शकुनिगन्धता ॥ १०० ॥

पूतनाया वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः ।
हिध्माध्मानशकृद्भेदपिपासामूत्रनिग्रहाः ॥ १०१ ॥

स्रस्तहृष्टाङ्गरोमत्वं काकवत्पूतिगन्धता ।
शीतपूतनया प्रायः पूर्ववत्तिर्यगीक्षणम् ॥ १०२ ॥

पार्श्वस्यैकस्य शीतत्वमुष्णत्वमितरस्य च ।
दृष्टिपूतनया चापि पूर्ववद्दृष्टिरुक् पुनः ॥ १०३ ॥

पोत्थकीजन्म शूनत्वं वर्चोदुर्गन्धभिन्नता ।
हिध्मा शोषस्स्वरक्रौर्यं वैवर्ण्यं मत्स्यगन्धिता ॥ १०४ ॥

मुखमण्डितया पाणिपादास्यरमणीयता ।
सिराभिरसिताभाभिराचितोदरता ज्वरः ॥ १०५ ॥

अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धिता ।
रेवत्यां श्यामनीलत्वं कर्णनासाक्षिमर्दनम् ॥ १०६ ॥

वक्त्रवक्त्रत्वरक्तत्वे ज्वरः पीतं शकृद्द्रवम् ।
स्याच्छोषः शुष्करेवत्यां नानावर्णपुरीषता ॥ १०७ ॥

स्वरदैन्यं विवर्णत्वमुदरे ग्रन्थयः सिराः ।
यस्य नानाविधं वर्चश्श्यावन्तालु च तं त्यजेत् ॥ १०८ ॥

भुञ्जानोऽन्नं बहुविधं यो बालः परिहीयते ।
तृष्णागृहीतः क्षामाक्षो हन्ति तं शुष्करेवती ॥ १०९ ॥

अबालानपि बाधन्ते पापाद् भूतादयो ग्रहाः ।
हन्तुकामे ग्रहे बालो महान् वा स्रुतनासिकः ॥ ११० ॥

क्षतजिह्वः क्वणन् बाढमसुखी सास्रलोचनः ।
दुर्वर्णो हीनवदनः पूतिगन्धश्च जायते ॥ १११ ॥

क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते ।
हस्तौ चोद्यम्य संरब्धो हन्त्यात्मानं तथापरम् ॥ ११२ ॥

तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ।
अप्सु मज्जेत् पतेत् कूपे कुर्यादन्यच्च तद्विधम् ॥ ११३ ॥

तृड्दाहमोहान् पूयस्य छर्दनं वा प्रवर्तयेत् ।
रक्तं च सर्वमार्गेभ्यो रिष्टोल्पासिश्च तं त्यजेत् ॥ ११४ ॥

रहस्त्रीरतिसल्लापगन्धस्रग्भूषणाप्रियः ।
हृष्टश्शान्तश्च दुस्साधो रतिकामेन पीडितः ॥ ११५ ॥

दीनः परिमृशेद्वक्त्रं शुष्कोष्ठगळताल्लुकः ।
शङ्कितं वीक्षते रौति ध्यायत्यायाति भीतताम् ॥ ११६ ॥

अन्नमन्नाभिलाषेऽपि दत्तं नातिबुभुक्षते ।
गृहीतं बलिकामेन तं विद्यात्सुखसाधनम् ॥ ११७ ॥

हन्तुकामं जयेद्धोमैस्सिद्धमन्त्रप्रवर्तितैः ।
इतरौ तु यथाकामं रतिबल्यादिदानतः ॥ ११८ ॥

स्नानधूपप्रलेपाद्यैर्ग्रहपीडाहरैरपि ।
अथ साध्यग्रहं बालं गेहे नित्यानले शुचौ ॥ ११९ ॥

पुराणसर्पिषाभ्यक्तं परिषिञ्चेत्सुखाम्बुना ।
साधितेन बलानिम्बवैजयन्तीनृपद्रुमैः ॥ १२० ॥

पारिभद्रककट्वंगजम्बूवरणकर्तृणैः ।
कपोतवङ्कापामार्गपाटलीमधुशिग्रुभिः ॥ १२१ ॥

काकजङ्घामहाश्वेताकपित्थक्षीरिपादपैः ।
सकरञ्जकदम्बैश्च दशपुष्पाभिधैश्च वा ॥ १२२ ॥

द्वीपिव्याघ्रभुजङ्गर्क्षचर्मोद्यैर्धूपमाचरेत् ।
पूतीदशांगीभल्लातबलासिद्धार्थदीप्यकैः ॥ १२३ ॥

सकुष्ठैस्सघृतैर्धूपस्सर्वग्रहविमोक्षणः ।
सर्षपा निम्बपत्राणि मूलमश्वखुराह्वया ॥ १२४ ॥

भूर्जपत्रं घृतं धूपस्सर्वग्रहविमोक्षणः ।
अनन्ताम्रास्थितगरम्मरिचं मधुरोगणः ॥ १२५ ॥

सृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ।
दशमूलरसक्षीरयुक्तं तद् ग्रहजित्परम् ॥ १२६ ॥
कल्याणकं पञ्चगव्यं ब्राह्मीसर्पिश्च पाययेत् ।
सिद्धार्थकाद्यौ हिङ्ग्वादिं कार्पासादिं च योजयेत् ॥ १२७ ॥

सम्मृष्टसंसिक्तविविक्तदेशे
सदा प्रदीपानलपुष्पयुक्ते ।
स्थितिर्ग्रहघ्नी शुचिभृत्यवर्गे
शिवस्य देव्यास्तपसा च पूजा ॥ १२८ ॥

इति हृदयप्रिये प्रथमखण्डे बालरोगप्रतिषेधकल्पो नाम
सप्तमोऽध्यायः ॥

---

अथाष्टमोऽध्यायः ।

शिरोन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ।
षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥
त्वङ्मयास्सप्त चाधारा रक्तस्याद्यः क्रमात् परे ।
कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ॥ २ ॥
गर्भाशयोऽष्टमस्स्त्रीणां चामपक्वाशयान्तरे ।
कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम पुप्फुसः ॥ ३ ॥
यकृत्प्लीहोण्डुकं वृक्कौ नाभिडिंबान्त्रवस्तयः ।
स्रोतांसि नासिकाकर्णनेत्रपाय्वास्यमेहनम् ॥ ४ ॥
स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।
जीवितायतनान्यन्तः स्रोतांस्याहुस्त्रयोदश ॥ ५ ॥
प्राणधातुमलाम्भोन्नवाहीन्यत्यायतानि च ।
यथा न दुष्यन्त्यहितात्तानि रक्षेत् प्रयत्नतः ॥ ६ ॥
अतिप्रवृत्तिस्सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ७ ॥
व्यधे तु स्रोतसां मोहः कम्पाध्मानवमिज्वराः ।
प्रलापश्शूलविण्मूत्ररोधो मरणमेव वा ॥ ८ ॥

स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।
उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ९ ॥

दश मूलसिरा हृत्स्थास्तास्सर्वास्सर्वतो वपुः ।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥ १० ॥

स्थूलमूलास्सुसूक्ष्माग्राः पत्ररेखाङ्कतानवत् ।
शाखारूपेण वपुषि तास्स्युस्सप्तशतानि च ॥ ११ ॥

धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तरा ।
ताभिः परिवृता नाभिश्चक्रनाभिरिवारकैः ॥ १२ ॥

ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।
दश जीवितधामानि शिरो रसनबन्धनम् ॥ १३ ॥

कण्ठोऽस्रं हृदयं नाभिर्वस्तिः शुक्लौजसी गुदः ।
सिरा जालधरा नाम तिस्रश्चाभ्यन्तराश्रिताः ॥ १४ ॥

द्वे द्वे वंक्षणयोर्द्वे द्वे कटीकतरुणे तथा ।
एकैकां पार्श्वगां पार्श्वद्वये पृष्ठे तु वंशतः ॥ १५ ॥

द्वे द्वे तथोर्ध्वगामिन्यावुदरे च तथा पुनः ।
रोमराजीमुभयतो द्वे द्वे वत्से चतुर्दश ॥ १६ ॥

स्तनरोहिततन्मूलहृदये च पृथक् द्वयम् ।
अपस्तम्भाख्ययोरेकां तथापालापयोरपि ॥ १७ ॥

नीले कृकाटिके मन्ये विधुरे चाष्टमातृकाः ।
षोडशैवं गळे हन्वोस्सिरे द्वे सन्धिबन्धने ॥ १८ ॥

जिह्वाधो रसबोधिन्यौ द्वे द्वे वचनशक्तिदे ।
नासायां गन्धवेदिन्यौ द्वे चैकां तालुसंश्रिताम् ॥ १९ ॥

निमेषोन्मेषकारिण्यौ द्वे द्वे चापाङ्गसंश्रये ।
द्वे चेति षण्नयनयोर्ललाटे स्थपनीश्रिताम् ॥ २० ॥

आवर्तमर्मगे द्वे च चतस्रश्च कचान्तगाः ।
सप्तैवं कर्णयोश्च द्वे शब्दगे द्वे च शङ्खगे ॥ २१ ॥

एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् ।
मूर्ध्न्येवमष्टौ च सिरा न शस्त्रेण परामृशेत् ॥ २२ ॥

सिराजालावृतेष्वङ्गेष्ववेध्यज्ञानसिद्धये ।
गणितास्तत्र विज्ञेयाः शृङ्गग्राहिकया गुरोः ॥ २३ ॥
अवेध्या ग्रथिता वक्राः सङ्कीर्णास्सन्धिसंश्रिताः ।
तत्र श्यावारुणास्सूक्ष्माः पूर्णारिक्ताः क्षणात् सिरा ॥ २४ ॥
प्रस्पन्दिन्यश्च वातास्रं वहन्ते पित्तशोणितम् ।
स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः ॥ २५ ॥
गौर्यः स्निग्धाः स्थिरास्शीताः संसृष्टं लिङ्गसङ्करे ।
षट् कूर्चाः सप्तसीवन्यश्चतस्रो मांसरज्जवः ॥ २६ ॥
जालानि कण्डराश्चाङ्गे पृथक् षोडश निर्दिशेत् ।
चतुर्दशास्थिसंङ्घाताः सीमन्ता द्विगुणा नव ॥ २७ ॥
अस्थ्नां शतानि षष्ट्या च त्रीणि दन्तनखैस्सह ।
स्नावानवशती पञ्च पुंसां पेशीशतानि च ॥ २८ ॥
अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रयाः ।
इति संक्षेपतः प्रोक्तास्शरीरावयवाः पृथक् ॥ २९ ॥
व्यापारैरथवाकारैराधाराधेयभावतः ।
संख्याभिर्वा न शक्यन्ते संख्यातुं बहुभेदतः ॥ ३० ॥
स्थिता पक्वाशयद्वारि धमनी वह्निवर्धिनी ।
भक्तमार्गं निरुध्याशुग्रहणाद् ग्रहणी मता ॥ ३१ ॥
अधो नयति पक्वान्नं बलवत्याममन्यथा ।
यत्तैजसगुणाधिक्यादद्रवं भुक्तपाचकम् ॥ ३२ ॥
पक्वामाशयमध्यस्थं पित्तं तद्वह्निसंज्ञितम् ।
शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद् गुणाः ॥ ३३ ॥
खानिलाग्न्यम्बुभूमीनामेकगुणवृद्ध्यन्वयाः परे ।
तत्र खात् खानि देहेऽस्मिञ्छ्रोत्रं शब्दो विविक्तता ॥ ३४ ॥
वातात् स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ।
आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ॥ ३५ ॥
मृद्वत्र मातृजं रक्तमज्जमांसगुदादिकम् ।
पैतृकं तु स्थिरं शुक्रधमन्यस्थिकचादिकम् ॥ ३६ ॥

आत्मजं चित्तमक्षाणि नानायोनिषु जन्म च ।
सात्म्यजन्त्वायुरारोग्यमनालस्यं प्रभा बलम् ॥ ३७ ॥

रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ।
सात्विकं शौचमास्तिक्यं शुक्लधर्मरतिर्मतिः ॥ ३८ ॥

राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः ।
तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता ॥ ३९ ॥

सप्तोत्तरं मर्मशतं तेषामेकादशादिशेत् ।
पृथक् सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ॥ ४० ॥

पृष्ठे चतुर्दशोर्ध्वन्तु जत्रोस्त्रिंशच्च सप्त च ।
मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् ॥ ४१ ॥

तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ।
अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ॥ ४२ ॥

तस्योर्ध्वं द्व्यंगुले कूर्चं पादभ्रमणकम्पकृत् ।
गुल्फसन्धेरधः कूर्चशिरश्शोफरुजाकरम् ॥ ४३ ॥

जङ्घाचरणयोस्सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत् ।
जङ्घान्तरे त्विन्द्रवस्तिर्मारयत्यसृजः क्षयात् ॥ ४४ ॥

जङ्घोर्वोस्सङ्गमे जानुः खञ्जता तत्र जीवतः ।
जानुनस्त्र्यङ्गुलादूर्ध्वमाण्यूरुस्तम्भशोषकृत् ॥ ४५ ॥
उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसंक्षयात् ।
ऊरुमूले लोहिताक्षं हन्ति पक्षमसृक्क्षयात् ॥ ४६ ॥
मुष्कवंक्षणयोर्मध्ये विटपं षण्डताकरम् ।
इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्र गुल्फवत् ॥ ४७ ॥
कूर्परं जानुवत्कौग्यस्तयोर्विटपवत्पुनः ।
कक्षाक्षमध्ये कक्ष्याधृक् कुणित्वं तत्र जायते ॥ ४८ ॥
स्थूलान्त्रबद्धस्सद्योघ्नो विड्वातवहनो गुदः ।
मूत्राशयो धनुर्वक्रो वस्तिरल्पास्रमांसगः ॥ ४९ ॥
एकाधोवदनः कट्योर्मध्ये सद्यो निहन्त्यसून् ।
ऋतेऽश्मरीव्रणाद्विद्धो व्रणो रोहेच्च यत्नतः ॥ ५० ॥

देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः।
नाभिस्सोऽपि हि सद्योघ्नो द्वारमामाशयस्य तु ॥ ५१ ॥
सत्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम्।
स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत् ॥ ५२ ॥
ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात्।
अपस्तम्भावुरःपार्श्वे नाळ्यावनिलवाहिनी ॥ ५३ ॥
रक्तेन पूर्णकोष्ठोऽत्र श्वासात् कासाच्च नश्यति।
पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ॥ ५४ ॥
अधोंऽसकूटयोर्विद्यादपालापाख्यमर्मणी।
तयोः कोष्ठेऽसृजापूर्णे नश्येद्यातेन पूयताम् ॥ ५५ ॥
वंशस्य पार्श्वयोरूर्ध्वं कटीकतरुणे स्फिजोः।
तत्र रक्तक्षयात् पाण्डुर्हीनरूपो विनश्यति ॥ ५६ ॥
पृष्ठवंशं ह्युभयतो यौ सन्धी कटिपार्श्वयोः।
जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ॥ ५७ ॥
चेष्टाहानिरधःकाये स्पर्शाज्ञानं च तद्व्यधात्।
पार्श्वौ नितम्बौ मध्यस्थौ कटीकतरुणोपरि ॥ ५८ ॥
आशयाच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ।
अधश्शरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ ५९ ॥
पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयोः।
तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ॥ ६० ॥
रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः।
स्तनमूलार्जवे भागे पृष्ठवंशाश्रिते सिरे ॥ ६१ ॥
बृहत्यौ तत्र विद्धस्य मरणं रक्तसंक्षयात्।
बाहुमूलाभिसंबद्धे पृष्ठवंशस्य पार्श्वयोः ॥ ६२ ॥
अंसयोः फलके बाहुस्वापशोषौ तयोर्व्यधात्।
ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोऽन्तरे ॥ ६३ ॥
स्कन्धांसपीठबन्धार्थावंसौ बाहुक्रियाहरौ
कण्ठनाळीमुभयतस्सिरा हनुसमाश्रिताः ॥ ६४ ॥

चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ।
स्वरप्रणाशवैकृत्यरसाज्ञानानि तद्व्यधात् ॥ ६५ ॥

कण्ठनालीमुभयतो जिह्वानासाश्रिताः सिराः ।
पृथक् चतस्रस्तास्सद्यो घ्नन्त्यसून्मातृकाह्वयाः ॥ ६६ ॥

कृकाटिके शिरोग्रीवासन्धौ तत्र चलं शिरः ।
अधस्तात् कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ ६७ ॥

फणावुभयतो घ्राणमार्गे श्रोत्रपथानुगौ ।
अन्तर्गलस्थितौ वेधाद् गन्धविज्ञानहारिणौ ॥ ६८ ॥

नेत्रयोर्बहितोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ।
तथोपरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ॥ ६९ ॥

हनुकर्णललाटान्ते शङ्खौ सद्योविनाशिनौ ।
केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ स्थपनी पुनः ॥ ७० ॥

भ्रुवोर्मध्ये त्रयोऽप्यत्र शल्ये जीवेदनुद्धृते ।
स्वयं वा पतिते पाकात् सद्यो नश्यति तूद्धृते ॥ ७१ ॥

जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ।
तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु ॥ ७२ ॥

विद्धः शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ।
कपालसन्धयः पञ्च सीमन्तास्तिर्यगूर्ध्वगाः ॥ ७३ ॥

भ्रमोन्मादमनोनाशात्तेषु विद्धेषु नश्यति ।
आन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागमः ॥ ७४ ॥

रोमावर्तोऽधिपो नाम मर्म सद्यो निहन्त्यसून् ।
प्रसिद्धान्येवमुक्तानि सामान्येन तु लक्षयेत् ॥ ७५ ॥

विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् ।
तेषां विटपकक्ष्याधृगुर्व्यः कूर्चशिरांसि च ॥ ७६ ॥

द्वादशाङ्गुलमानानि द्व्यङ्गुले मणिबन्धने ।
गुल्फा च स्तनमूले च त्र्यङ्गुलं जानु कूर्परम् ॥ ७७ ॥

अपानवस्तिहृन्नाभिनालास्सीमन्तमातृकाः ।
कूर्चशृङ्गाटमन्याश्च त्रिंशदेकेन वर्जिताः ॥ ७८ ॥

आत्मपाणितलोन्मानाङ्गोपाङ्गर्माङ्गुलानि यत् ।
तृष्णाकम्पप्रलोन्मादा वैकल्यं मृतिरेव वा ॥ ७९ ॥

मर्मच्छेदे भवत्यस्मात् क्षाराग्नी तत्र वर्जयेत् ।
अमर्मवेधे वा रक्तं यदि स्यादतिनिस्स्रुतम् ॥ ८० ॥

सद्यो हन्यादन्यथा तु जीवेत् क्षतशतैरपि ।
जीवितं प्राणिनां रक्ते तिष्ठत्येव हि तिष्ठति ॥ ८१ ॥

तत्र स्नेहप्रधानैस्तु शीतैर्वाताविरोधिभिः ।
पानालेपनसेकाद्यैर्युक्त्या धीमानुपाचरेत् ॥ ८२ ॥

पक्काशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ।
स्थानं वातस्य तत्रापि पक्काधानं विशेषतः ॥ ८३ ॥

उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ।
सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ॥ ८४ ॥

अनुगृह्णात्यविकृतो वृद्धस्यास्य तु लक्षणम् ।
कार्श्यकार्ष्ण्योष्णकामत्वकम्पानाहशकृद्ग्रहाः ॥ ८५ ॥

बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ।
क्षीणस्य श्लेष्मवृद्ध्युक्तरोगास्सादो विसंज्ञता ॥ ८६ ॥

अल्पचेष्टावचनता स्याच्च पित्तस्य तु स्मृतम् ।
नाभिरामाशयस्स्वेदो लसीका रुधिरं रसः ॥ ८७ ॥

दृक् स्पर्शनं विशेषेण नाभिः पक्त्यूष्मदर्शनैः ।
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ॥ ८८ ॥

अनुगृह्णात्यविकृतं वृद्धस्यास्य तु लक्षणम् ।
पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाल्पनिद्रताः ॥ ८९ ॥

क्षीणस्य तु प्रभाहानिर्मन्दवह्नित्वशीतता ।
उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रसः ॥ ९० ॥

मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः ।
स च स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः ॥ ९१ ॥

समो रक्षति वृद्धस्य चिह्नश्चालस्यगौरवम् ।
श्वैत्यशैत्यश्लथाङ्गत्वश्वासकासातिनिद्रताः ॥ ९२ ॥

प्रसेको वह्निसादश्च चिह्नं क्षीणस्य तु भ्रमः ।
श्लेष्माशयानां शून्यत्वं हृद्रवः श्लथसन्धिता ॥ ९३ ॥

रसासृङ्मांसमेदोऽस्थिमज्जशुक्लानि धातवः ।
सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च ॥ ९४ ॥

प्रीणनं जीवनं लेपः स्नेहो धारणपूरणम् ।
गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ॥ ९५ ॥

क्लेदनं स्यादवष्टम्भो मलानां केशधारणम् ।
रसो वृद्धस्तु कफवद्रक्तं रक्ताश्रयान् गदान् ॥ ९६ ॥

श्लीहवीसर्पगुल्मादीन् मांसं ग्रन्थ्यर्बुदादिकान् ।
गण्डोदरोरुस्थौल्यं च मेदश्चाल्पेऽपि चेष्टिते ॥ ९७ ॥

श्वासं श्रमं च कुरुते स्फिक्स्तनोदरलम्बताम् ।
अस्थ्यध्यस्थ्यधिदन्तांश्च मज्जा नेत्राङ्गगौरवम् ॥ ९८ ॥

पर्वसु स्थूलमूलानि कुर्यात् कृच्छ्राण्यरूंषि च ।
शुक्लन्त्वतिस्त्रीकामत्वं स्रावं शुक्लाश्मरीमपि ॥ ९९ ॥

कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ।
मूत्रन्तु वस्तेर्निस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥ १०० ॥

स्वेदोऽतिस्वेददौर्गन्ध्यकण्डूरेवं च लक्षयेत् ।
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥ १०१ ॥

क्षीणे रसे श्रमश्शोषो रौक्ष्यं शब्दासहिष्णुता ।
रक्तेऽम्लशिशिरप्रीतिस्सिराशैथिल्यरूक्षते ॥ १०२ ॥

मांसेऽक्षिग्लानिगण्डास्फिक्शुष्कतासन्धिवेदनाः ।
मेदसि स्वपनं कट्याः श्लीह्नो वृद्धिः कृशाङ्गता ॥ १०३ ॥

अस्थ्न्यस्थितोदश्शातनं दन्तकेशनखादिषु ।
अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥ १०४ ॥

शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ १०५ ॥

पुरीषे वायुरान्त्राणि सशब्दो वेष्टयन्निव ।
कुक्षिं भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् ॥ १०६ ॥

मूत्रेऽल्पं मूत्रयेत् कृच्छ्राद्विवर्णं सास्रमेव वा ।
स्वेदे रोमच्युतिस्तब्धरोमता स्फुटनं त्वचः ॥ १०७ ॥

मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ।
स्वमलायनसंशोषतोदशून्यत्वलाघवैः ॥ १०८ ॥

कुर्वतेऽभिरुचिं दोषा विपरीतसमानयोः ।
वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधा न तत् ॥ १०९ ॥

रोगान् वृद्धिक्षयोद्भूतान् क्रमाल्लङ्घनबृंहणैः ।
जयेदन्यत्र पवनात्तज्जांस्तैरुत्क्रमात्कृतैः ॥ ११० ॥

विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ।
मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ॥ १११ ॥

स्थौल्यकार्श्योपचारेण मेदोजानस्थिसंक्षयात् ।
जातान् क्षीरघृतैस्तिक्तसंयुक्तैर्वस्तिभिस्तथा ॥ ११२ ॥

मज्जशुक्रामयानान्तु भोजनं स्वादुतिक्तकम् ।
शुद्धिं व्यवायं व्यायामं यच्चान्यच्छुक्रशोधनम् ॥ ११३ ॥

विड्वृद्धिजानतीसारक्रियया विट्क्षयोद्भवान् ।
मेषाजमध्यकुन्माषयवमाषद्वयादिभिः ॥ ११४ ॥

मूत्रवृद्धिक्षयोत्थांस्तु मेहकृच्छ्रचिकित्सया ।
व्यायामाभ्यञ्जनस्वेदमद्यैस्स्वेदक्षयोत्थितान् ॥ ११५ ॥

अतिस्थौल्यनिरासार्थं चिन्ताशोधनजागरम् ।
सेवेत मद्यं व्यायामं मस्तु तक्रं मधूदकम् ॥ ११६ ॥

मधुना त्रिफलां लिह्यात् गुल्चीमभयां घनम् ।
व्योषादिकं विळङ्गाद्यं यथावस्थं प्रयोजयेत् ॥ ११७ ॥

बृंहणार्थं मांसमद्यात् क्षीराज्यं बृंहणैर्युतम् ।
अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ॥ ११८ ॥

स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ।
यवगोधूममधुपयोहितं सौम्यौषधैर्युतम् ॥ ११९ ॥

ओजस्तेजस्तु धातूनां शुक्रान्तानां परं स्मृतम् ।
हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ १२० ॥

यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ।
ओजोवृद्धौ तु देहस्य तुष्टिः पुष्टिर्बलोदयः ॥ १२१ ॥

ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ।
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ॥ १२२ ॥

दुच्छायो दुर्मना रूक्षो भवेत् क्षामश्च तत्क्षये ।
जीवनीयरसक्षीररसाद्यास्तत्र भेषजम् ॥ १२३ ॥

प्राणादिभेदात् पञ्चात्मा वायुः प्राणोऽत्र मूर्धगः ।
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ॥ १२४ ॥

ष्ठेवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत् ।
उरस्स्थानमुदानस्य नासानाभिगळांश्चरेत् ॥ १२५ ॥

वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ।
व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ॥ १२६ ॥

गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।
प्रायस्सर्वाः क्रियास्तस्मिन् प्रतिबद्धाश्शरीरिणाम् ॥ १२७ ॥

समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ १२८ ॥

अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः ।
शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रामणक्रियः ॥ १२९ ॥

एतैरविकृतैर्देहस्सुखदो दुःखदोऽन्यथा ।
हिताहारविहाराद्यैर्विकाराद्रक्ष्यतां सदा ॥ १३० ॥
अन्नादौ विगुणेऽपाने समाने शूल इष्यते ।
व्यानेऽन्ते मातरिश्वस्थ सायमाशस्य तत्परे ॥ १३१ ॥
ग्रासग्रासान्तयोर्ध्यादौ भोजने ।
मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकारिषु ॥ १३२ ॥
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ।
प्रायो वातात्मका मर्त्या रूक्षदीर्घकृशाप्रियाः ॥ १३३ ॥
बह्वाहारोष्णपट्वम्लस्वादुकांक्षाः कलिप्रियाः ।
चलसौहार्दधीदृष्टिचेष्टावाचश्च नास्तिकाः ॥ १३४ ॥
अल्पजीवितविज्ञानसुखनिद्राः प्रलापिनः ।
पित्तोद्रिक्तास्ताम्रकेशवक्त्रपादाल्परोमकाः ॥ १३५ ॥
उष्णाङ्गाः क्षोभरक्ताक्षा मेधावन्तोऽभिमानिनः ।
स्वादुतिक्तकषायाढ्यास्शीताशाश्रितवत्सलाः ॥ १३६ ॥
क्लेशासहास्तीक्ष्णतृष्णाबुभुक्षा मध्यमायुषः ।
श्लेष्मला नीलनिबिडकेशास्सुस्निग्धलोचनाः ॥ १३७ ॥
प्रलम्बबाहवः पीनवक्षसः स्निग्धरूपिणः ।
धीरास्सत्यपराः क्लेशसहा बुद्धिबलान्विताः ॥ १३८ ॥
कटुतिक्तकषायाल्पभोजना अपि सद्बलाः ।
दृढप्रेमविरोधाश्च वदान्या मान्यमानदाः ॥ १३९ ॥
सत्यस्वल्पप्रियालापाः श्रीनिवासाश्चिरायुषः ।
तामसै राजसैस्सत्वप्रधानैश्च गुणैः क्रमात् ॥ १४० ॥
संयुक्ता मिश्रणे तेषां जानीयान्मिश्रिताद्गुणात् ।

एवं प्रोक्तो देहकर्माङ्गभागो
विस्तारस्स्यात् ग्रन्थकोट्याप्यपूर्णः ।
देहेऽन्वस्मिन् प्राप्तमात्रे विकारे
कुर्याद्युक्त्या शोधनाद्यैश्चिकित्साम् ॥ १४१½ ॥

इति हृदयप्रिये प्रथमखण्डे अङ्गविज्ञानकल्पं नाम
अष्टमोऽध्यायः ॥

---

अथ नवमोऽध्यायः ।

गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ १ ॥

सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
घृतं बहूपयोगेन गुरु चापि यथोत्तरम् ॥ २ ॥

द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्तृवृतो महान्
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ॥ ३ ॥

वृद्धबालाबलकृशा रूक्षाः क्षीणास्त्ररेतसः ।
वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ॥ ४ ॥

स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।
ऊरुस्तम्भातिसारामगळरोगगरोदरैः ॥ ५ ॥

मूर्च्छाछर्धरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।
अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ६ ॥

ऋतौ साधारणे स्नेहश्शस्तोऽह्नि विमले पुनः ।
शीते तैलं माधवे चेद् घृतं निश्येव शस्यते ॥ ७ ॥

युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्नेन वस्तिभिः ।
नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः ॥ ८ ॥

तत्राच्छपानं श्रेष्ठं स्यात् स्नेहकर्माशुसाधनात् ।
द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ॥ ९ ॥

ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् ।
कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ॥ १० ॥

ह्यस्तने जीर्ण एवान्ने स्नेहोच्छश्शुद्धये बहुः ।
शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ ११ ॥

बृंहणो रसमद्याद्यैस्सभक्तोऽल्पो हितश्च सः ।
प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ॥ १२ ॥

व्याधीन् जयेद् बलं कुर्यादङ्गानां च यथाक्रमम् ।
वार्युष्णमच्छेऽनुपिबेत् स्नेहे तत्सुखपक्तये ॥ १३ ॥

आस्योपलेपशुद्ध्यै च तौरवारुष्करे न तु ।
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ॥ १४ ॥
भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ १५ ॥
उष्णोदकोपचारी स्यात् ब्रह्मचारी क्षपाशयः ।
न वेगरोधी व्यायामक्रोधशोकहिमातपान् ॥ १६ ॥
प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः ।
नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥ १७ ॥
यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ।
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ १८ ॥
त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।
सम्यक् स्निग्धोऽथवा यावदतः सात्मीभवेत्परम् ॥ १९ ॥
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।
स्नेहोद्वेगः क्लमस्सम्यक्स्निग्धे रूक्षे विपर्ययः ॥ २० ॥
अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ।
अमात्रयाहितोऽकाले मिथ्याहारविहारतः ॥ २१ ॥
स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः ।
कण्डूकुष्ठज्वरोत्क्लेशशूलानाहभ्रमादिकान् ॥ २२ ॥
क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ।
तक्रारिष्टखळोद्दाळयवश्यामाककोद्रवाः ॥ २३ ॥
पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुल्गुलु ।
यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ॥ २४ ॥
मांसळा मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ॥ २५ ॥
संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ।
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ॥ २६ ॥
स्नेहार्थं सघृतां पेयां सस्नेहं तिलचूर्णकम् ।
क्षीरपेयां घृतैरुष्णां फाणितं कृसरां च वा ॥ २७ ॥

सगुडं मस्तु वा दद्यात् तथा स्नेहं पटूत्कटम् ।
वाते वातोत्तरे रोगे लक्षिताङ्गेऽपि वा बहिः ॥ २८ ॥
स्नेहैस्सेकं प्रकुर्वीत दशमूलविपाचितैः ।
सप्ताहं द्विगुणं वापि त्रिगुणं वा यथोचितम् ॥ २९ ॥
शाययित्वाथ खट्वायां रोगिणं कृतमङ्गलम् ।
कोष्णस्नेहप्लुतैश्चैलखण्डैर्द्विगुणितैः प्रसेचयेत् ॥ ३० ॥
यामार्धमङ्गे देहे वा स्नातः कोष्णोदकैस्ततः ।
भजन् पूर्वोक्तमाचारं त्यक्तरोगः सुखी भवेत् ॥ ३१ ॥
अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम् ।
मूर्धतैलं गुणोत्कृष्टं तद्विद्यादुत्तरोत्तरम् ॥ ३२ ॥
तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु ।
अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ ३३ ॥
परिषेकः पिचुः केशशातस्फुटनधूपने ।
नेत्रे स्तब्धे च वस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ ३४ ॥
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ।
तत्रोत्तानं शयानस्य ललाटमनुलम्बिते ॥ ३५ ॥
पात्रे रोगिकनिष्ठाग्रप्रवेशच्छिद्रमध्यके ।
छिद्राधोलम्बितमृदुनवाङ्गुलपिचौ दृढे ॥ ३६ ॥
आढकप्रमिते शुक्तं स्नेहमापूर्य सेचयेत् ।
पिचुबद्धललाटस्य बहिर्बन्धात् प्रचालयन् ॥ ३७ ॥
पिच्वग्रं शङ्खयोर्मध्ये शिरोदेशे यथासुखम् ।
ललाटपिच्वन्तरं स्यादेकद्वित्र्यङ्गुलोन्मितम् ॥ ३८ ॥
वातादिकोपे पात्रञ्च सिक्तेनापूरयेन्मुहुः ।
तक्रक्षीरादिना मूर्धसेकेऽप्येवं क्रियाक्रमः ॥ ३९ ॥
कचान्ते चेलखण्डेन वेष्टितस्य सुखं पिचून् ।
तैलाक्तानतिस्रावान् सप्त च द्वादशाङ्गुलान् ॥ ४० ।
मात्रासहस्रान्तरितमेकैकं मूर्ध्नि धारयेत् ।
शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ॥ ४१ ॥

द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरस्समम् ।
आकर्णबन्धनस्थानं ललाटे वस्त्रवेष्टिते ॥ ४२ ॥
चैलवेणिकया बध्वा माषकल्केन लेपयेत् ।
ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत् ॥ ४३ ॥
ऊर्ध्वं केशभुवो यावद्ङ्ग्यङ्गुलं धारयेच्च तम् ।
आवक्त्रनासिकोत्क्लेदाद्दशाष्टौ षट् चलादिषु ॥ ४४ ॥
मात्रासहस्राण्यरुजे त्वेकं स्कन्धादि मर्दयेत् ।
मुक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम् ॥ ४५ ॥
सुखासीनस्य कल्प्यास्स्युरभ्यङ्गपिचुवस्तयः ।
धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयेत् ॥ ४६ ॥
रुजाया मार्दवं यावन्मात्राशतमवेदने ।
यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ॥ ४७ ॥
निमेषोन्मेषमात्रेण समं मात्रा तु सा स्मृता ।
चिरायुः सुकुमाराङ्गो जराहीनो दृढेन्द्रियः ॥ ४८ ॥
दीप्ताग्निश्शुद्धकोष्ठश्च स्नेहाभ्यासी भवेज्जनः ।
स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ॥ ४९ ॥
तापोऽग्नितप्तवसनफालहस्ततलादिभिः ।
उपनाहो वचाकिण्वशताह्वादेवदारुभिः ॥ ५० ॥
धान्यैस्समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ।
उद्रिक्तलवणैः स्नेहशुक्ततक्रपयःप्लुतैः ॥ ५१ ॥
केवले पवने श्लेष्मसंसृष्टे सुरसादिभिः ।
पित्तेन पद्मकाद्यैस्तु चर्मपट्टदलादिना ॥ ५२ ॥
बद्धं रात्रौ दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवा कृतम् ।
ऊष्मा तु काञ्जिकादीनामूष्मणा विविधौषधैः ॥ ५३ ॥
पक्वानां विविधोपायं तत्तद्व्याधिप्रकल्पितैः ।
द्रवे सवाससाच्छाद्य स्निग्धं सिञ्चेद्यथासुखम् ॥ ५४ ॥
धान्याम्लैर्वातजित्तोयैर्गलन्त्यादिपरिस्रुतैः ।
तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ॥ ५५ ॥

अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ।
निवातेऽन्तर्बहिः स्निग्धो जीर्णान्नः स्वेदमाचरेत् ॥ ५६ ॥

व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ।
कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ॥ ५७ ॥

आमाशयगते वायौ कफे पक्वाशयाश्रिते ।
रूक्षपूर्वं तथा स्निग्धपूर्वं स्थानानुरोधतः ॥ ५८ ॥

अल्पं वंक्षणयोस्स्वल्पं दृङ्मुष्कहृदये न वा ।
शीतशूलक्षये स्विन्नो जातेऽङ्गानाञ्च मार्दवे ॥ ५९ ॥

स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ।
पित्तास्रकोपस्तृण्मूर्च्छास्वराङ्गसदनभ्रमाः ॥ ६० ॥

सन्धिपीडाज्वरश्यावरक्तमण्डलदर्शनम् ।
स्वेदातियोगाच्छर्दिश्च तत्र स्तम्भनमौषधम् ॥ ६१ ॥

विषक्षाराग्न्यतीसारछर्दिमेहातुरेषु च ।
स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ॥ ६२ ॥

न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ।
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ॥ ६३ ॥

तिमिरोदरवीसर्पकुष्ठशोफाढ्यरोगिणः ।
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ॥ ६४ ॥

भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान् ।
क्षुत्तृष्णाकामिलापाण्डुमेहिनः पित्तपीडितान् ॥ ६५ ॥

गर्भिणीं पुष्पितां सूतां मृदु चात्ययिके गदे ।
श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ॥ ६६ ॥

स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे ।
महत्वे मुष्कयोः खल्यामायामे वातकण्टके ॥ ६७ ॥

मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ।
स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ ६८ ॥

स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।
आयासावातगृहभीसुराप्रावरणादिभिः ॥ ६९ ॥

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीतास्सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ ७० ॥

इति हृदयप्रिये प्रथमखण्डे स्नेहस्वेदकल्पं नाम
नवमोऽध्यायः ॥

---

अथ दशमोऽध्यायः।

कफे विदध्याद्वमनं संयोगे वा कफोद्बणे।
देशकालादिमालोच्य विशेषेण तु वामयेत् ॥ १ ॥
नवज्वरातिसाराधःपित्तासृग्राजयक्षिणः।
कुष्ठमेहापचिग्रन्थिश्लीपदोन्मादकासिनः ॥ २ ॥
श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः।
अवाम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥ ३ ॥
बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः।
प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४ ॥
ऊर्ध्वप्रवृत्तवाय्वस्रदत्तवस्तिहतस्वराः।
मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५ ॥
उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः।
ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६ ॥
प्रसक्तवमथोः पूर्वे प्रायेणामज्वरोऽपि च।
ऊर्ध्वाधः शुद्धिभिर्वर्ज्यास्सर्वैरेवं त्वजीर्णिनः ॥ ७ ॥
स्निग्धस्विन्नं यथायोग्यं मत्स्यमाषतिलादिभिः।
पूर्वेद्युरुत्क्लिष्टकफं पूर्वाह्णे कृतमङ्गलम् ॥ ८ ॥
ईषत्स्निग्धं सघृतया पेयया त्यक्तसिक्थया।
परितृप्तं रोगवशात् क्षीरेणेक्षुरसै रसैः ॥ ९ ॥
पाययेदथ भैषज्यं मधुसैन्धवसंयुतम्।
ब्रह्मरुद्रादिमन्त्रेण मन्त्रितं प्राङ्मुखं भिषक् ॥ १० ॥

मुहूर्तं पालयेत् पीते तन्मनाश्छर्दयेत्ततः ।
जातप्रसेकहृल्लासो जानुतुल्यासनस्थितः ॥ ११ ॥

अप्रवृत्ते त्वङ्गुलीभ्यां नाळेन मृदुनाथवा ।
गळताल्वरुजं स्पृष्ट्वा पुनर्वेगान् प्रवर्तयेत् ॥ १२ ॥

पित्तस्य दर्शनं यावत् छेदो वा श्लेष्मणो भवेत् ।
उभे पार्श्वे ललाटं च वमतश्चास्यधारयेत् ॥ १३ ॥

प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः ।
हीनवेगः कणाधात्रीसिद्धार्थलवणोदकम् ॥ १४ ॥

पिबेत्तथा प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।
चत्वारष्षड्वमावष्टौ वेगा हीनान्तरोत्तमाः ॥ १५ ॥

प्रस्थार्धं प्रस्थमपि च द्विप्रस्थं मानतः क्रमात् ।
सम्यग्योगे त्वयोगे स्युः कण्डूकोठज्वरादयः ॥ १६ ॥

अतियोगे तु वमनं फेनचन्द्रकरक्तवत् ।
भ्रमस्तमो जीवरक्तनिर्गमान्मृत्युरेव वा ॥ १७ ॥

सम्यग्योगे पिबेद्धूमं भजेत् पेयादिकं क्रमम् ।
पेयां विलेपीं यूषं च रसं लघ्वोदनं पृथक् ॥ १८ ॥

अद्यादेकद्वित्रिवारं क्रमान्न्यूनादि शुद्धिमान् ।
तूलकैर्गोमयैः काष्ठैर्यथाग्निस्यान्महाबलः ॥ १९ ॥

महान् स्थिरस्सर्वपचश्चौदर्योऽग्निस्तथा भवेत् ।
पथ्याचारं वदेदस्य गदितः स्नेहने तु यः ॥ २० ॥

क्षुद्रत्वाल्पकफत्वाद्यमातुरस्यौषधस्य च ।
मृदुत्वतीक्ष्णताल्पत्वाद्ययोगे कारणं स्मरन् ॥ २१ ॥

स्निग्धस्विन्नं पुनश्चापि वामयेन्निपुणौषधैः ।
पवनेनातिवमतो हृदयं यस्य पीड्यते ॥ २२ ॥

तस्मै स्निग्धाम्ललवणान् दद्यात् पित्तकफेऽन्यथा ।
योज्योऽतिवमने रेको विरेके वमनं मृदु ॥ २३ ॥

परिषेकावगाहाद्यैस्सुशीतैस्तम्भयेच्च तम् ।
अञ्जयेच्चन्दनोशीरैर्मन्थं लाजयवैः पिबेत् ॥ २४ ॥

पश्चान्मच्छर्दिभैषज्यं युक्त्या तदपि योजयेत् ।
सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः ॥ २५ ॥
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ।
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहः ॥ २६ ॥

स्निग्धाम्ललवणा हृद्या यूषा मांसरसा हिताः ।
फलान्यम्लानि खादेयुः तस्याग्रेऽन्ये ससीत्कृतम् ॥ २७ ॥
निस्सृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ।
अतियोगेन भैषज्यं जीवास्रं हरते यदि ॥ २८ ॥
तृष्णामूर्छामदार्तस्य कुर्यादामरणात् क्रियाम् ।
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षिणीम् ॥ २९ ॥

मृगाजमहिषादीनां सद्यस्कं जीवतामसृक् ।
पिबेज्जीवाभिसन्धानमाश्वात्यस्यजीवितम् ॥ ३० ॥

तदेव दर्भमृदितं रक्तं वस्तौ निषेचयेत् ।
श्यामाकाष्मर्यमधुकमूर्वोशीरैश्शृतं पयः ॥ ३१ ॥

घृतमण्डाञ्जनयुतं वस्तिं वा योजयेद्धिमम् ।
जीवशोणितशङ्कायां शुक्ले वस्त्रे प्रलेपितम् ॥ ३२ ॥
कोष्णाम्भोभिः क्षालितं तज्जीवाच्छुध्यति नान्यथा ।
व्यापत्करितया कर्म वमनाद्यं नच त्यजेत् ॥ ३३ ॥

अजीर्णव्यापदुक्तिस्तु निषेद्धुं नहि भोजनम् ।
कालात् क्वचिद्धितत्वासौ चिकित्सावगमाय यत् ॥ ३४ ॥

द्रव्याणि वमनार्हाणि वक्ष्ये रोगहराणि च ।
वमने मदनं श्रेष्ठं विरेके त्रिवृता यथा ॥ ३५ ॥

फलानि नातिपाण्डूनि न चातिहरितान्यपि ।
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ ३६ ॥

प्रमृज्य कुशमूतोल्यां क्षिप्त्वा बध्वा प्रलेपयेत् ।
गोमयेनानु मूतोलीं धान्यमध्ये निवापयेत् ॥ ३७ ॥
मृदूभूतानि सन्मिष्टगन्धानि कुशवेष्टनात् ।
निष्कृष्टानि गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ३८ ॥

दधिमध्वाज्यपललैर्मृदितां शोषयेत्पुनः ॥ ३९ ॥
ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ।
अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ४० ॥
शर्वरीं मधुयष्ट्या वा प्रत्यक्पुष्प्या जलेऽपि वा ।
मृदितं गालितं तत्तु पिबेत् प्रातस्तथा वमेत् ॥ ४१ ॥
त्रिभागत्रिफलाचूर्णं प्रत्यक्पुष्पादिवारिणा ।
हृद्दाहेऽधोऽस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ॥ ४२ ॥
क्षैरेयीं वा कफच्छर्दिप्रसेकतमकेषु तु ।
दध्युत्तरं वा दधि वा तत्कृतक्षीरसम्भवम् ॥ ४३ ॥
तत्सिद्धमाज्यं लेहं वा लीढ्वा प्रच्छर्दयेत् सुखम् ।
*(फलचूर्णयुतं राठपुष्पमाघ्राय वामयेत् ।
मण्डपेयारसादीनां तृप्तो वर्त्या यथासुखम् ॥)
फलाभावे गणप्रोक्तैरौषधैरपि वामयेत् ॥ ४४ ॥
मदनमधुकलम्बानिम्बबिम्बीविशाला-
त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।
विदुलदहनचित्राः कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ ४५ ॥
पित्ते च पित्तभूयिष्ठे कुर्याद्रोगे विरेचनम् ।
विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामिलाः ॥ ४६ ॥
जीर्णज्वरोदरच्छर्दिगरप्लीहहलीमकाः ।
विद्रधिस्तिमिरं काचः स्यन्दः पक्वाशयव्यथा ॥ ४७ ॥
योनिशुक्राश्रया रोगाः कोष्ठगाः कृमयो व्रणाः ।
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ॥ ४८ ॥
वम्याश्च कुष्ठमेहाद्या नतु रेच्यो नवज्वरः ।
अल्पाग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ॥ ४९ ॥
सशल्यास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ।
अथैनं वामितं भूयः स्निग्धस्विन्नं विरेचयेत् ॥ ५० ॥

बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते ।
प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि ॥ ५१ ॥

कषायमधुरैः पित्ते विरेकः कटुकैः कफे ।
स्निग्धोष्णलवणैर्वायावप्रवृत्तौ तु पाययेत् ॥ ५२ ॥

उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम् ।
उत्थानेऽल्पे दिने तस्मिन् भुक्त्वाऽन्येद्युः पुनः पिबेत् ॥ ५३ ॥

अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ५४ ॥

यौगिकं सम्यगालोच्य स्मरन् पूर्वमतिक्रमम् ।
शकृत्पित्तकफानां हि सुखनिस्सरणं क्रमात् ॥ ५५ ॥

सम्यग्विरेचनं तत्र वमनोक्तेन योजयन् ।
धूमवर्ज्येन विधिना क्रमेणाग्निं विवर्धयेत् ॥ ५६ ॥

हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ।
विदाहो वातविट्सङ्गस्स्यादयोगस्य लक्षणम् ॥ ५७ ॥

अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ।
भूयेऽह्यं सुतीक्ष्णं वा शीताद्यैर्भेषजं पुनः ॥ ५८ ॥

स्तब्धं करोति मन्दाग्नेः कुक्ष्याध्मानाद्युपद्रवान् ।
अत्यर्थरूक्षं दीप्ताग्नेरविरिच्यैव भेषजम् ॥ ५९ ॥

जीर्णं करोति श्वयथुहिध्मामूर्च्छादिकान् गदान् ।
अयोगस्त्रिविधस्त्वेवमाद्ये वमितवत् क्रिया ॥ ६० ॥

द्वितीये वामयेत्तीक्ष्णैरौषधैः पुनरन्तिमे ।
स्नेहैस्सलवणैः स्निग्धस्विन्नं संस्तरसङ्करैः ॥ ६१ ॥

वर्तिभिर्वस्तिभिर्वापि हृतोद्गारं विरेचयेत् ।
(अतिक्रमं स्मरन् पूर्वं सर्वानेव विरेचयेत् )
तत्तद्व्याधिवशात् सङ्गे तदुक्ता च प्रतिक्रिया ॥ ६२ ॥

विट्पित्तकफवातेषु निस्सृतेष्वाधिकं स्रवेत् ।
निश्श्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ॥ ६३ ॥

मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ।
गुदनिस्सरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ६४ ॥

भवन्त्यतिविरिक्तस्य तथातिवमनामयाः ।
दीपनं ग्राहि लघु च नात्युष्णं वातहारि च ॥ ६५ ॥

देयं तत्रातिवमनविहितं चापि भेषजम् ।
स्तम्भवेपथुनिस्तोददाहोद्वेष्टादिमान् यदि ॥ ६६ ॥

तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ।
त्रिदोषघ्नौषधैर्युक्ता त्रिदोषघ्नी भवेत्त्रिवृत् ॥ ६७ ॥

तन्मूलं तिर्यगग्रान्तं गम्भीरानुगतं च यत् ।
तद् गृहीत्वा त्यजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६८ ॥

अथ काले ततश्चूर्णं किञ्चिन्नागरसैन्धवम् ।
वातामये पिबेदम्लैः पैत्ते साज्यसितामधु ॥ ६९ ॥

क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसैः ।
कफामये पीलुरसमूत्रमद्याम्लकाञ्जिकैः ॥ ७० ॥

पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ।
त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥ ७१ ॥

मधुत्रिजातसंयुक्तो लेह्यो हृद्यं विरेचनम् ।
अजगन्धा तुकाक्षीरी विदारी शर्करा त्रिवृत् ॥ ७२ ॥

चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
तत्तद्रोगौषधैस्सार्धमेवं दद्याद्विरेचनम् ॥ ७३ ॥

त्रिवृताद्यं यथाकालबलं सर्वकल्पास्वपि ।
निकुम्भकुम्भत्रिफलागवाक्षीस्नुक्शङ्खिनीनीलिनितिल्वकानि ।
शम्याककम्पिल्यकहेमदुग्धा दुग्धं च मूत्रं च विरेचनानि ॥ ७४ ॥

बुद्धिप्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।
चिराच्च पाकं वयसः करोति संशोधनं सम्यगुपास्यमानम् ॥ ७५ ॥

इति हृदयप्रिये प्रथमखण्डे वमनविरेचनकल्पो नाम
दशमोऽध्यायः ॥

## अथैकादशोऽध्यायः ।

वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते ।
उपक्रमाणां सर्वेषामग्रणीस्त्रिविधश्च सः ॥ १ ॥

निरूहोऽन्वासनं बस्तिरुत्तरस्तेन साधयेत् ।
गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥

जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ।
वर्ध्माश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥ ३ ॥

अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।
आमातिसारवमिमान् संशुद्धो दत्तनावनः ॥ ४ ॥

श्वासकासप्रसेकार्शोहिध्माध्मानाल्पवह्नयः ।
शूनपायुः कृताहारो बद्धच्छिद्रदकोदराः ॥ ५ ॥

कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।
आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥ ६ ॥

रूक्षाः केवलवातार्ता नानुवास्यास्त एव च ।
येऽनास्थाप्यास्तथा पाण्डुकामिलामेहपीनसाः ॥ ७ ॥

निरन्नप्लीहविड्भेदगुरुकोष्ठकफोदराः ।
अभिष्यन्दिभृशस्थूलकृमिकोष्ठाढ्यमारुताः ॥ ८ ॥

पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ।
आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ॥ ९ ॥

अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत् ।
शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ॥ १० ॥

अभ्यक्तस्नातमुचितात् पादहीनं हितं लघु ।
अस्निग्धरूक्षमशितं सानुपानं द्रवादि च ॥ ११ ॥

कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे ।
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ॥ १२ ॥

संकोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् ।
अथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे ॥ १३ ॥

उच्छ्वासस्य वस्तेर्वदनं बध्वा हस्तमकम्पयन् ।
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ॥ १४ ॥

नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ।
सावशेषं च कुर्वीत वायुश्शेषे हि तिष्ठति ॥ १५ ॥

दत्ते तूत्तानदेहस्य पाणिना ताडयेत् स्फिजौ ।
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ १६ ॥

ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्यान्मुष्टिनाङ्गञ्च स्नेहेनाभ्यज्य मर्दयेत् ॥ १७ ॥

वेदनार्तमिति स्नेहो नहि शीघ्रं निवर्तते ।
योऽयश्शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्न कार्यकृत् ॥ १८ ॥

दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।
निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥ १९ ॥

अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।
तीक्ष्णैर्वा वस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥ २० ॥

अतिरौक्ष्यादनागच्छन्नचेज्जाड्यादिदोषकृत् ।
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥ २१ ॥

प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा ।
अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥ २२ ॥

यदा वा स्नेहपक्तिस्स्यादतोऽत्युद्धणमारुतान् ।
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥ २३ ॥

इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ २४ ॥

पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥ २५ ॥

अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ।
अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥ २६ ॥

वस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ।
क्वाथयेद्विंशतिपलं द्रव्यस्याष्टौ फलानि च ॥ २७ ॥

द्रव्याच्चतुर्गुणे तोये कुर्यात्तत् पादशेषितम् ।
ततः क्वाथाच्चतुर्थांशं स्नेहं वाते तु कल्पयेत् ॥ २८ ॥
पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिके ।
सर्वत्र चाष्टमं भागं कल्काद् भवति वा यथा ॥ २९ ॥
नात्यच्छसान्द्रता वस्तेः पलमात्रं गुळस्य च ।
मधुपट्वादिशेषं च युक्त्या सर्वं तदेकतः ॥ ३० ॥
उष्णाम्बु कुम्भीबाष्पेण तप्तं खजसमाहतम् ।
प्रक्षिप्य वस्तौ प्रणयेत् पायौ नात्युष्णशीतळम् ॥ ३१ ॥
नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु ।
नात्यच्छसान्द्रं नो नातिमात्रं नापटु नाति च ॥ ३२ ॥
लवणं तद्वदम्लं च पठन्त्यन्ये तु तद्विदः ।
मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथक् ॥ ३३ ॥
कर्षार्द्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ।
सर्वद्रवाणां साराणां पलानि दश कल्पयेत् ॥ ३४ ॥
माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ।
आवपेत निरूहाणामेष संयोजने विधिः ॥ ३५ ॥
निरूहमात्राप्रथमे प्रकुञ्चो वत्सरे परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥ ३६ ॥
प्रसृतं वर्धयेदूर्ध्वं द्वादशाष्टादशस्य तु ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ ३७ ॥
यथायथं निरूहस्य पादो मात्रानुवासने ।
उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ३८ ॥
कृतोपधानस्सञ्जातवेगश्चोत्कुटिकस्सृजेत् ।
आगतौ परमः कालो मुहूर्तो मृत्यवे परः ॥ ३९ ॥
तत्रानुलोमिकस्नेहक्षारमूत्राम्लकल्पितम् ।
त्वरितं स्निग्धतीक्ष्णोष्णं वस्तिमन्यं प्रपीडयेत् ॥ ४० ॥
विदध्यात् फलवर्तिं वा स्वेदनोत्रासनादि च ।
स्वयमेव निवृत्तौ तु द्वितीयो वस्तिरिष्यते ॥ ४१ ॥

तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता ।
विरिक्तवच्च योगादीन् विद्याद्योगे च भोजयेत् ॥ ४२ ॥

कोष्णेन वारिणा स्नातं धन्वमांसरसौदनम् ।
विकारा ये निरूढस्य भवन्ति प्रबलैर्मलैः ॥ ४३ ॥

ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतश्शमम् ।
अथ वातार्दितं भूयस्तद्वदेवानुवासयेत् ॥ ४४ ॥

सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत् ।
किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ४५ ॥

सानुलोमानिलस्स्नेहस्तत्सिद्धमनुवासनम् ।
एकं त्रीन् वा बलासे तु स्नेहवस्तीन् प्रकल्पयेत् ॥ ४६ ॥

पञ्च वा सप्त वा पित्ते नवैकादश वाऽनिले ।
पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ४७ ॥

कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ।
वातघ्नौषधनिष्क्वाथस्त्रिवृतासैन्धवैर्युतः ॥ ४८ ॥

वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः ।
न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ॥ ४९ ॥

पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ।
आरग्वधादिनिष्क्वाथवत्सकादियुतास्त्रयः ॥ ५० ॥

रूक्षास्सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ।
त्रयश्च सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ॥ ५१ ॥

त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः ।
न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ५२ ॥

उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।
त्रिधैव कल्पयेद्वस्तिमित्यन्येऽपि प्रचक्षते ॥ ५३ ॥

दोषौषधादिबलतस्सर्वमेतत् प्रमाणयेत् ।
प्राक् स्नेह एकः पञ्चान्ते द्वादशाऽऽस्थापनानि तु ॥ ५४ ॥

सान्वासनानि कर्मैवं वस्तयस्त्रिंशदीरिताः ।
कालः पञ्चदशैकोऽत्र प्राक् स्नेहोऽन्ते त्रयस्तथा ॥ ५५ ॥

षट्पञ्चवस्त्यन्तरिता, योगोऽष्टौ वस्तयोऽत्र तु ।
त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ॥ ५६ ॥

स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मारुताद् भयम् ॥ ५७ ॥

स्नेहयोजनयुक्त्यैवं वस्तिकर्म त्रिदोषजित् ।
ह्रस्वया स्नेहपानस्य मात्रया योजितस्समः ॥ ५८ ॥

मात्रावस्तिः स्मृतः स्नेह,श्शीलनीयस्सदाखिलैः ।
दोषघ्नो निष्परीहारो बल्यस्सृष्टमलश्च सः ॥ ५९ ॥

अस्निग्धास्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ ६० ॥

वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ ६१ ॥

नाभिवस्तिरुजानाहो[1] हृल्लेपश्श्वयथुर्गुदे ।
कण्डूर्देहे च वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ६२ ॥

तत्रातिसारविहितं पाचनक्वाथमादिशेत् ।
पूतीकपिप्पल्याद्यं वा विल्वधान्यादिकं तथा ॥ ६३ ॥

फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
विल्वमूलतृवृद्दारुयवकोलकुलत्थवान् ॥ ६४ ॥

सुरादिमूत्रवान् वस्तिर्यवान्यादियुतो हितः ।
रौक्ष्यादिना वस्तिरुद्धः पवनो मर्मपीडनम् ॥ ६५ ॥

गुदे कोष्ठे विदाहं च मुष्कवंक्षणवेदनाम् ।
आध्मानं हृदये रोधमितश्चेतश्च धावनम् ॥ ६६ ॥

करोति तत्र चाभ्यक्तस्विन्ने वर्त्तिं प्रयोजयेत् ।
विल्वादिश्च निरूहस्स्यात् पीलुसर्षपकल्कवान् ॥ ६७ ॥

सरळामरदारुभ्यां साधितं चानुवासनम् ।
कुर्वतो वेगसंरोधं पीडितो वातिमात्रया ॥ ६८ ॥

रौक्ष्याद्यैर्वा वायुनोर्ध्वमुत्क्षिप्तो मुखनासिकात् ।
निरेति मूर्छाहृल्लासतृड्दाहादीन् प्रवर्तयेत् ॥ ६९ ॥

---

१. 'दाहो' इति पाठभेदः.

मूर्च्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ।
वीजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ॥ ७० ॥

पृष्ठपार्श्वोदरं मृद्यात् करैरुष्णैरधोमुखम् ।
केशेषूत्क्षिप्य धुन्वीत विविधं भावयेदपि ॥ ७१ ॥

तथा वस्तिरधो याति पाययेच्चाम्लसंयुतम् ।
कुष्ठक्रमुककल्कं च वस्तिं सोऽस्यानुलोमयेत् ॥ ७२ ॥

विल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।
शिरस्थे नावनं कार्यं प्रच्छाद्यं सर्षपैश्शिरः ॥ ७३ ॥

अतियोगेन वस्तिस्तु भवेत् कुक्षिरुजाकरः ।
विरेचनातियोगेन स तुल्याकृतिसाधनः ॥ ७४ ॥

भूरिक्षारादिमान् वस्तिः कुर्यात् पित्तास्रविस्रुतिम् ।
गुदं दहन्मोहकरस्तत्र कुर्याच्चिकित्सितम् ॥ ७५ ॥

रक्तपित्तातिसारघ्नं, कुम्भं द्राक्षाम्भसा पिबेत् ।
सशर्करां हिमां पेयां स्नेहवस्तौ च वक्ष्यते ॥ ७६ ॥

शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।
द्रव्यस्तैरावृतः स्नेहो नायात्यभिभवादपि ॥ ७७ ॥

स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ।
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ॥ ७८ ॥

वातहारिनिरूहैस्तं चिकित्सेत्सानुवासनैः ।
तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरैः ॥ ७९ ॥

विद्यात् पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ।
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ८० ॥

संमूर्च्छाग्लानिभिर्विद्यात् श्लेष्मणा स्नेहमावृतम् ।
कषायतिक्तकट्वाद्यैर्वस्तिभिस्तं विरेचयेत् ॥ ८१ ॥

छर्दिमूर्छाद्यामालिङ्गैर्विद्यादत्यशनावृतम् ।
तत्र स्यात् कटुपट्वाद्यैः क्वाथैश्चूर्णैश्च पाचनैः ॥ ८२ ॥

विण्मूत्रानिलसङ्गाद्यैर्ज्ञात्वा स्नेहं विडावृतम् ।
स्नेहस्वेदैर्वस्तिभिश्चाप्युदावर्तहरैर्हरेत् ॥ ८३ ॥

एवं नानाविकारेषु प्रतिकुर्याद्यथायथम् ।
परित्यक्तविकारौघस्स यावत् प्रकृतिं भजेत् ॥ ८४ ॥

गुदोत्तरेण मार्गेण दत्तो वस्तिस्तथोत्तरः ।
वस्तिरोगेषु सर्वेषां योनिगर्भाशये स्त्रियाः ॥ ८५ ॥

योज्यो यन्त्रेण तत्र स्यान्मात्रा शुक्तिर्विकल्प्य वा ।
अथ स्नाताशितस्यास्य स्नेहवस्तिविधानतः ॥ ८६ ॥

ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ।
हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये ॥ ८७ ॥

सूक्ष्मां शलाकां प्रणयेत् तया शुद्धेऽनुसीवनीम् ।
आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः ॥ ८८ ॥

पीडितेऽनुगते स्नेहे स्नेहवस्तिक्रमो हितः ।
वस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ॥ ८९ ॥

अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ।
स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः ॥ ९० ॥

विदधीत तदा तस्मादनृतावपि चात्यये ।
योनिविभ्रंशशूलेषु योनिव्यापद्यसृग्दरे ॥ ९१ ॥

मूत्रापत्याध्वनोर्योज्यं द्व्यङ्गुलं चतुरङ्गुलम् ।
यन्त्राग्रं मूत्ररोगेषु बालानान्त्वेकमङ्गुलम् ॥ ९२ ॥

प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव वा ।
उत्तानायाश्शयानायास्सम्यक् सङ्कोच्य सक्थिनी ॥ ९३ ॥

ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ।
वस्तिं त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत् ॥ ९४ ॥

त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम् ।
योगाश्चात्र विलिख्यन्ते प्रसिद्धा वस्तिकर्मणि ॥ ९५ ॥

बलां गुडूचीं त्रिफलां सरास्नां
द्विपञ्चमूलं च पलोन्मितानि ।

अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात् पचेदंबु चतुर्थशेषम् ॥ ९६ ॥

पूतो यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रयुतैस्सतैलै-
र्युक्तस्सुखोष्णो लवणान्वितश्च ॥ ९७ ॥

वस्तिः परं सर्वगदप्रमाथी
स्वस्थे हितो जीवनबृंहणश्च ।
वस्तौ च यस्मिन् पठितो न कल्क-
स्सर्वत्र दद्यादमुमेव तत्र ॥ ९८ ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्त-
स्सछागमांसस्य सपूर्वपेष्यः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ९९ ॥

एरण्डमूलात्त्रिपलं पलाशा-
त्तथा पलांशं लघुपञ्चमूलम् ।
रास्नाबलाछिन्नरुहाश्वगन्धा
पुनर्नवारग्वधदेवदारुः ॥ १०० ॥

फलानि चाष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाहपुषाप्रियङ्गु-
यष्टीकणावत्सकबीजमुस्तम् ॥ १०१ ॥

दद्यात् सुपिष्टं सह तार्क्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतस्समूत्रो
वस्तिर्जयेद्दीपनपाचनोऽसौ ॥ १०२ ॥

जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबन्धम् ।

गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान् कफवातजातान् ॥ १०३ ॥
यष्ट्याह्वलोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करं क्षौद्रयुतं सुशीतं
पित्तामयान् हन्ति सजीवनीयम् ॥ १०४ ॥
कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटचार्कपाठाः ।
पक्त्वा कुलस्थान् बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ १०५ ॥
तान् सर्षपैलामदनैस्सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य शताह्वयस्य
क्षारस्य तैलस्य च सार्षपस्य ॥ १०६ ॥
दद्यान्निरूहं कफरोगिताय
मन्दाग्नये चाशनविद्विषे च ।
वक्ष्ये मृदून् स्नेहकृतो निरूहान्
सुखोचितेभ्यः प्रसृतैः पृथक् तु ॥ १०७ ॥
क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ।
खजेन मथितो वस्तिर्वातघ्नो बलवर्णकृत् ॥ १०८ ॥
एकैकप्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
विल्वादिमूलक्वाथौ द्वौ कौलत्थाद् द्वौ स वातजित् ॥१०९॥
पटोलनिम्बपूतीकरास्नासप्तच्छदाम्भसः ।
प्रसृतः पृथगाज्याच्च वस्तिस्सर्षपकल्कवान् ॥ ११० ॥
स पञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ।
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ॥ १११ ॥
प्रसृतास्सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ।
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषः ॥ ११२ ॥

एकैकप्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत् ।
सिद्धवस्तीनतो वक्ष्ये सर्वदा तान् प्रयोजयेत् ॥ ११३ ॥

निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ।
मधुतैले समे कर्षं सैन्धवाद् द्विपिचुर्मिसिः ॥ ११४ ॥

एरण्डमूलक्काथेन निरूहो माधुतैलिकः ।
रसायनं प्रमेहार्शःकृमिगुल्मान्त्रवृद्धिहृत् ॥ ११५ ॥

सयष्टीमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ ११६ ॥

पायुजानूरुवृषणवस्तिमेहनशूलनुत् ।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ११७ ॥

यापनं सैन्धवार्धाक्षहपुषार्धपलान्वितम् ।
एरण्डमूलनिष्क्वाथो मधुतैलं ससैन्धवम् ॥ ११८ ॥

एष युक्तरथो वस्तिस्सवचापिप्पलीफलः ।
सक्काथो मधुषड्ग्रन्थाशताह्वाहिङ्गुसैन्धवम् ॥ ११९ ॥

देवदारु च रास्ना च वस्तिर्दोषहरश्शिवः ।
पञ्चमूलस्य निष्क्काथस्तैलं मागधिका मधु ॥ १२० ॥

ससैन्धवस्समधुकस्सिद्धवस्तिरिति स्मृतः ।
स्नेहांश्चायन्त्रणान् सिद्धान् सिद्धद्रव्यैः प्रकल्पयेत् ॥ १२१ ॥

दोषघ्नास्सपरीहारा वक्ष्यन्ते स्नेहवस्तयः ।
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ॥ १२२ ॥

गुडूच्येरण्डपूतीकभार्ङ्गीवृक्षकरोहिषम् ।
शतावरीं सहचरं काकनासां पलांशिकम् ॥ १२३ ॥

यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ।
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥ १२४ ॥

पचेत्तैलाढकं पैष्यैर्जीवनीयैः पलोन्मितैः ।
अनुवासनमित्येतत्सर्ववातविकारनुत् ॥ १२५ ॥

आनूपानां वसा तद्वत् जीवनीयोपसाधिता ।

सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद् घृतम् ।
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥ १२७ ॥

शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ।
स्वगुप्तां क्षीरकाकोळीं कर्कटाख्यां शठीं वचाम् ॥ १२८ ॥

पिष्ट्वा तैलघृतं क्षीरे साधयेत चतुर्गुणे ।
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ॥ १२९ ॥

रजश्शुक्रामयहरं पुत्रीयं चानुवासनम् ।
सैन्धवं मदनं कुष्ठं शताह्वा निचुळो वचा ॥ १३० ॥

ह्रीबेरं मधुकं भार्ङ्गी देवदारु सकट्फलम् ।
नागरं पुष्करं मेदा चविका चित्रकश्शठी ॥ १३१ ॥

विळङ्गातिविषा श्यामा हरेणुर्नीलिनी स्थिरा ।
विल्वाजमोजौ चपला दन्ती रास्ना च तैस्समैः ॥ १३२ ॥

साध्यमेरण्डजं तैलं तैलं वा कफरोगनुत् ।
वध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ॥ १३३ ॥

आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ।
साधितं पञ्चमूलेन तैलं विल्वादिनाथवा ॥ १३४ ॥

कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ।
फलैरष्टगुणैश्चाम्लैस्सिद्धमन्वासनं हितम् ॥ १३५ ॥

बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो वस्तिः ।
स्वैः स्वैरौषधवर्गैः कृच्छ्रान् रोगान्निवर्तयति ॥ १३६ ॥

इति हृदयप्रिये प्रथमखण्डे वस्तिकल्पं नाम
एकादशोऽध्यायः ॥

---

अथ द्वादशोऽध्यायः ।

हितं जत्रूर्ध्वरोगेषु नस्यं नासाहि तत् स्रुतिः ।
विरेचनं शिरश्शूलजाड्यस्यन्दगळामये ॥ १ ॥

शोफगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ।
बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ॥ २ ॥

नासास्यशोषे वाक्सङ्गे कृच्छ्रोन्मीलेऽपबाहुके ।
शमनं नीलिकाव्यङ्गकेशदोषाक्षिरोगिषु ॥ ३ ॥

स्नेहचूर्णरसैस्तत्तु कुर्याद्युक्त्या प्रकल्पितैः ।
मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ॥ ४ ॥

प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ।
यावत् पतत्यसौ बिन्दुर्दशाष्टौ तत् क्रमेण ते ॥ ५ ॥

मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ।
बिन्दुद्वयोनाः कल्कादेः प्रतिमर्शो द्विबिन्दुकः ॥ ६ ॥

आजन्ममरणं शस्तः शीलितो मर्शकार्यकृत् ।
प्रातः श्लेष्मणि मध्याह्ने पित्ते सायन्निशोश्चले ॥ ७ ॥

स्वस्थवृत्तौ तु पूर्वाह्णे सायंप्रातस्स्वरक्षये ।
मन्यास्तम्भे च हिध्मायां वाताक्रान्ते च मूर्धनि ॥ ८ ॥

एकाहान्तरमन्यत्र सप्ताहं च तदाचरेत् ।
स्निग्धस्विन्नं निवातस्थं जत्रूर्ध्वं स्वेदयेत् पुनः ॥ ९ ॥

अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते ॥ १० ॥

नासापुटं पिधायैकं पर्यायेण निषेचयेत् ।
उष्णांबुतप्तं भैषज्यं प्रणाल्या पिचुनाथवा ॥ ११ ॥

दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ।
किञ्चिद्विलंब्य निष्ठीवेच्छनैरुच्छिङ्ख्यपार्श्वयोः ॥ १२ ॥

मूर्च्छायां शीततोयेन सिञ्चेत् परिहरञ्छिरः ।
न कुर्यात् स्नातुकामे च स्नाते भुक्ते स्रुतासृजि ॥ १३ ॥

तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥ १४ ॥

शुद्धानां दत्तवस्तीनां दुर्दिने चात्ययो नचेत् ।
सिद्धेऽक्षपाटवं श्वाससुखमस्वास्थ्यमन्यथा ॥ १५ ॥

स्निग्धरूक्षादि चालोच्य पुनः कुर्याद्यथासुखम् ।
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ १६ ॥

जीवन्ती जलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुकप्लवागरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभिं स्थिरे कृमिहरं पत्रं त्रुटीं रेणुकां
किञ्जल्कं कमलाद्बलां शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥१७॥

तैलाद्रसं दशगुणं परिशेष्य तेन
तैलं पचेत सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ १८ ॥

घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ १९ ॥

जत्रूर्ध्वकफवातोत्थे रोगे धूमं पिबेत् सदा ।
स्निग्धं मध्यं सुतीक्ष्णं च वाते वातकफे कफे ॥ २० ॥
क्षुतजृंभितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ।
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदु ॥ २१ ॥
कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ।
निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ॥ २२ ॥
द्रव्याणि गुल्गुल्वगरुमुस्तास्थौणेयवालकम् ।
वराङ्गसेव्ययष्ट्यादि वातघ्नं मृदु चादिमे ॥ २३ ॥
आज्यादिस्नेहभूयिष्ठं शमने सल्लकी जतु ।
चतुस्त्वचस्सितालोध्रं पृथ्वीका कमलोत्पलम् ॥ २४ ॥
यष्टीमधु सुवर्णत्वक् पद्मकं रक्तयष्टिका ।
गन्धाश्च कुष्ठतगरा तीक्ष्णे ज्योतिष्मती निशा ॥ २५ ॥
दशमूलमनोह्वाललाक्षाः श्वेता फलत्रयम् ।
गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ २६ ॥
इषीकादिं पञ्चकृत्वः पिष्टैरेतैः प्रलेपयेत् ।
वर्तिरंगुष्ठकस्थूला यथा स्याद्द्वादशाङ्गुला ॥ २७ ॥

छायाशुष्कां विगर्भां तां सस्नेहां समये पिबेत् ।
पिबेद्यन्त्रार्पितं धूमं सुखासीनोऽक्षिपर्ययम् ॥ २८ ॥
प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ।
पिधाय छिद्रमेकैकं वक्त्रेणोत्क्लेशनाय च ॥ २९ ॥
कण्ठगे विपरीतं स्यान्मुखेनैवोद्वमेदथ ।
योज्यो न रक्तपित्तार्ततिमिरोदरमेहिषु ॥ ३० ॥
शिरस्यभिहते पाण्डुरोगे जागरिते निशि ।
रक्तपित्तान्ध्यबाधिर्यतृण्मूर्छामदमोहकृत् ॥ ३१ ॥
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः ।

कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः ।
कर्णास्याक्षिस्रावकण्ड्वार्तिजाड्यं
तन्द्रा हिध्मा धूमपं न स्पृशन्ति ॥ ३२ ॥

चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ॥ ३३ ॥
रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु ।
अन्त्यो व्रणघ्नः स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ॥ ३४ ॥
स्नेहैस्संशमनस्तिक्तकषायमधुरौषधैः ।
शोधनस्तिक्तकट्वम्लपटूष्णैः रोपणः पुनः ॥ ३५ ॥
कषायतिक्तकैस्तत्र स्नेहक्षीरमधूदकम् ।
शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथायथम् ॥ ३६ ॥
कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ।
दन्तहर्षे दन्तचाले मुखरोगे च वातिके ॥ ३७ ॥
सुखोष्णमथ शीतं वा तिलकल्कोदकं हितम् ।
क्षारक्षतोषादाहादौ सर्पिर्धार्यं पयोऽथवा ॥ ३८ ॥
वैशद्यार्थं रोपणार्थं तृष्णाशान्त्यै हितं मधु ।
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ॥ ३९ ॥
तदेवालवणं शीतं मुखशोषहरं परम् ।
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ॥ ४० ॥

असञ्चार्यो मुखे पूर्णे गण्डूषः कवळोऽन्यथा ।
कफपूर्णास्यता यावत् धार्यो वा नासिकास्रवात् ॥ ४१ ॥

मन्याशिरःकर्णमुखाक्षिरोगाः
प्रसेककण्ठामयवक्त्रशोषाः ।
हृल्लासतन्द्रारुचिपीनसाश्च
साध्या विशेषात् कवळग्रहेण ॥ ४२ ॥

सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम् ।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम् ॥ ४३ ॥

उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः ।
उन्मीलितेऽक्षिण पिचुना ऽङ्गुलाद्वसेचयेत् ॥ ४४ ॥

दशद्वादश वा बिन्दून् कनीने रक्तजे पुनः ।
शतवारं पाणितलप्रमितेनापि सेचयेत् ॥ ४५ ॥

स्तन्यक्वाथादिना शुक्तौ गृहीतेन मुहुर्मुहुः ।
अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ॥ ४६ ॥

अतिशीतं तु कुरुते निस्तोदस्तम्भवेदनाः ।
नेत्रनासास्यगान् दोषान् निर्हरेन्नयनौषधम् ॥ ४७ ॥

कफे वाते कोष्णवारिप्लुतैश्चेलैः प्रमार्जयेत् ।
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ॥ ४८ ॥

लेखनं रोपणं दृष्टेः प्रसादनमिति त्रिधा ।
कल्पयेल्लेखनं तत्र कषायाम्लपटूषणैः ॥ ४९ ॥

रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ।
पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ॥ ५० ॥

पिण्डस्य तीक्ष्णद्रव्यस्य मृदुद्रव्यकृतस्य च ।
हरेणुमात्रं द्विगुणं प्रमाणं भवति क्रमात् ॥ ५१ ॥

रसक्रियायामप्याहुर्विळङ्गफलमात्रकम् ।
शलाकां द्विगुणां तीक्ष्णे चूर्णे च त्रिगुणां मृदौ ॥ ५२ ॥

दशाङ्गुला तनुर्मध्ये शलाका मुकुळानना ।
प्रशस्ता लेखने ताम्री रोपणे काळलोहजा ॥ ५३ ॥

अंगुली च सुवर्णोत्था रूप्यजा च प्रसादने ।
अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ॥ ५४ ॥

उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ।
तेजोऽतिसङ्गान्नयनं मध्याह्ने [illegible] ॥ ५५ ॥

प्रातः सायं च बलवत्तस्मान्नेत्रेऽञ्जयेत्सदा ।
तीक्ष्णाञ्जनं तूष्णकाले निशायामेव शस्यते ॥ ५६ ॥

तीक्ष्णाञ्जनप्रतप्तेऽक्ष्णि सौम्यं प्रत्यञ्जनं हितम् ।
दत्तेऽनुन्मीलयन् दृष्टी चालयेद्वर्त्मनी पुनः ॥ ५७ ॥

अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षाळयेत्सुखम् ॥ ५८ ॥

नाञ्जयेद्दुःखितं क्रुद्धभीतं कृतजागरम् ।
प्रतान्ताक्षं शिरःस्नातं पीतधूमं सुरातुरम् ॥ ५९ ॥

नयने तर्पणं योज्यं वातपित्तोत्तरे गदे ।
कृच्छ्रोन्मीलसिराहर्षसिरोत्पाततमोऽर्जुने ॥ ६० ॥

स्यन्दमन्थान्यतोवातवातपर्ययशुक्रके ।
शुद्धेऽङ्गे शिरसि प्रातः सायं वोत्तानशायिनः ॥ ६१ ॥

यवमाषमयीं पाळीं नेत्रकोशाद्बहिस्समाम् ।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ॥ ६२ ॥

सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ।
नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ॥ ६३ ॥

आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः ।
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते ॥ ६४ ॥

दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ।
शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश ॥ ६५ ॥

पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ।
कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे निगाळयेत् ॥ ६६ ॥

पिबेच्च धूमं नेक्षेत व्योम रूपं च भास्वरम् ।
इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ॥ ६७ ॥

स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ।
तत्तद्रोगशमः स्वास्थ्यं तृप्तेऽतृप्ते विपर्ययः ॥ ६८ ॥

पुटपाको दृग्बलाय तर्पणानन्तरं हितः ।
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ॥ ६९ ॥

स्नेहनं पयसा पिष्टैर्जीवनीयैः प्रकल्पयेत् ।
लेखनं शङ्खफेनायस्ताम्रसैन्धवमस्तुना ॥ ७० ॥

मधुरैस्ससघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ।
ऊरुपूगवटाम्भोजपत्रैः स्निग्धादिषु क्रमात् ॥ ७१ ॥

वेष्टयित्वा भेषजानां पलं पिण्डीकृतं पुनः ।
मृदा प्रलिप्य निश्छिद्रं धवधन्वनगोमयैः ॥ ७२ ॥

पक्त्वेन्धनैरथाग्न्याभे हृत्वा निष्पीड्य तद्रसम् ।
नेत्रे तर्पणवद्दद्याच्छतं द्वे त्रीणि धारयेत् ॥ ७३ ॥

लेखनस्नेहनान्त्येषु कोष्णौ पूर्वौ हिमोऽपरः ।
धूमपोऽन्ते तयोरेव योगास्तत्र तु तृप्तिवत् ॥ ७४ ॥

तर्पणं पुटपाकं वा नस्यानर्हे न योजयेत् ।
यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग्भवेत् ॥ ७५ ॥

सर्वात्मना नेत्रहिताय यत्नं
कुर्वीत नस्याञ्जनतर्पणाद्यैः ।
दृष्टिश्च नष्टा विविधं जगच्च
तमोमयं जायत एकरूपम् ॥ ७६ ॥

इति हृदयप्रिये प्रथमखण्डे नस्यादिकल्पं नाम
द्वादशोऽध्यायः ॥

---

अथ त्रयोदशोऽध्यायः ।

मधुरं लवणं किञ्चिदशीतोष्णमसंहतम् ।
पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥
रक्तं शुद्धं वदेत्तत्तु दूष्यते श्लेष्मपित्तलैः ।
दुष्टं स्रावयितुं रक्तमुद्रिक्तं व्यध्ययेत्सिराम् ॥ २ ॥

न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ३ ॥

गर्भिणीसूतिकाजीर्णपित्तासृक्श्वासकासिनाम् ।
अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ४ ॥

स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।
नायन्त्रितां सिरां विध्येन्न तिर्यङ् नाप्यनुत्थिताम् ॥ ५ ॥

विकारासन्नदेशेषु प्रायेण व्यधयेत्सिराम् ।
ललाटश्रवणाद्येषु यत्नान्मर्माश्रयां त्यजेत् ॥ ६ ॥

उरोऽपाङ्गललाटस्थाश्चुन्मादेऽपस्मृतौ पुनः ।
हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥ ७ ॥

इन्द्रबस्तेरधोऽपच्यां द्व्यङ्गुले चतुरङ्गुले ।
ऊर्ध्वं गुल्फस्य सक्थ्यर्त्तौ तथा क्रोष्टुकशीर्षके ॥ ८ ॥

विशेषेण सिरां विध्येदूरुगां गळगण्डके ।
तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ॥ ९ ॥

प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।
अथ स्निग्धः कृतशुभः सज्जोपकरणो बली ॥ १० ॥

अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ।
मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ॥ ११ ॥

मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ।
दन्तप्रपीडनोच्छ्वासगण्डाध्मानानि चाचरेत् ॥ १२ ॥

पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ।
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ॥ १३ ॥

एषोऽन्तर्मुखवर्जानां सिराणां यन्त्रणे विधिः ।
ततो मध्यमयाङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ॥ १४ ॥

ताडयेदुत्थितां ज्ञात्वा स्पर्शाद्वाङ्गुष्ठपीडनैः ।
कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया ॥ १५ ॥

फलोद्देशे सुनिष्कम्पं सिरां तद्वच्च मोक्षयेत् ।
ताडयन् पीडयेच्चैनां विध्येद्व्रीहिमुखेन तु ॥ १६ ॥

अङ्गुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम् ।
अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ॥ १७ ॥

यन्त्रयेत् स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे ।
पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ॥ १८ ॥

कुक्षेरारभ्य मृदिते विध्येद् बद्धोर्ध्वपट्टके ।
विध्येद्धस्तसिरां बाहावनाकुञ्चितकूर्परे ॥ १९ ॥

बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम् ।
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥ २० ॥

विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ।
प्रहृष्टे मेहने जङ्घासिरां जानुन्यकुञ्चिते ॥ २१ ॥

पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ।
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ॥ २२ ॥

द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ।
बध्वा विध्येत्सिरामित्थमनुक्तास्वङ्गेषु चाचरेत् ॥ २३ ॥

मांसले व्रीहिनिम्नं स्यात् क्षतमङ्गेऽर्धमस्थिगे ।
सम्यग्विद्धे स्रवेद्धारा यन्त्रे मुक्ते तु न स्रवेत् ॥ २४ ॥

भीमूर्च्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृक्षयः ।
क्षामत्ववेगितास्वेदा रक्तस्यास्रुतिहेतवः ॥ २५ ॥

दुर्विद्धेऽल्पं स्रवेत् कृच्छ्रधार्यं स्याददतिवेधने ।
असम्यगस्रे स्रवति वेल्लव्योपनिशानतैः ॥ २६ ॥

सागारधूमलवणतैलैर्दिह्यात् सिरामुखम् ।
सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ २७ ॥

अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।
सम्यक् स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ २८ ॥

यन्त्रं विमुच्य मूर्च्छायां वीजेत व्यजनैः पुनः ।
स्रावयेन्मूर्च्छति पुनस्त्वपरेद्युरत्र्यहेऽपि वा ॥ २९ ॥

वाताच्छ्यावारुणं रूक्षं वेगात्स्राव्यच्छफेनिलम् ।
पित्तात् पीतासितं विस्रमस्कन्द्युष्णं सचन्द्रकम् ॥ ३० ॥

कफात् स्निग्धमसृक्पाण्डुतन्तुमत् पिच्छिलं घनम् ।
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ ३१ ॥

अशुद्धं बलिनोऽप्यस्रं न प्रस्थात् स्रावयेत् परम् ।
अतिस्रुतौ हि मृत्युस्स्याद् दारुणा वा चलामयाः ॥ ३२ ॥

तत्राभ्यङ्गरसक्षीररक्तपानादि भेषजम् ।
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ॥ ३३ ॥

प्रक्षाल्य तैलप्लोताक्तं बन्धनीयं सिरामुखम् ।
अशुद्धं स्रावयेद् भूयस्सायमह्न्यपरेऽपि वा ॥ ३४ ॥

स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ।
दुष्टं प्रसादयेच्छिष्टं रक्तं पित्तापहैर्हिमैः ॥ ३५ ॥

रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ।
लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ३६ ॥

मृत्कपालाञ्जनक्षौमभस्मक्षीरित्वगङ्कुरैः ।
विचूर्णयेद् व्रणमुखं पद्मकादिहिमं पिबेत् ॥ ३७ ॥

तामेव वा सिरां विध्येद्व्यधात्तस्मादनन्तरम् ।
सिरामुखं वा त्वरितं दहेत्तप्तशलाकया ॥ ३८ ॥

ततो भजेदन्नपानं नात्युष्णं नातिशीतळम् ।
दीपनीयं च वह्निर्हि परं रक्ष्यः स्रुतासृजः ॥ ३९ ॥

जळौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ।
शुद्धाम्बुजातास्तन्वङ्ग्यो वृत्ता नीलोर्ध्वराजयः ॥ ४० ॥
निर्विषाः शैवलश्यावाः किञ्चित्पीतोदराश्च याः ।
अन्यथा सविषास्त्याज्यास्ताभिः कण्डूभ्रमादयः ॥ ४१ ॥
अथेतरा निशाकल्कसंयुक्तेऽम्भसि सम्प्लुताः ।
अवान्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥ ४२ ॥

गणयेत् घृतमृत्स्तन्यरक्तशस्त्रनिपातनैः ।
पिबन्तीरुन्नतस्कन्धाः छादयेदार्द्रवाससा ॥ ४३ ॥

संपृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ॥ ४४ ॥

दंशस्य तोदे कण्डूवां वा मोक्षयेल्लवणादिभिः ।
अन्यथा सा स्वयं मुञ्चेच्चालयन्नथ शोणितम् ॥ ४५ ॥

अशुद्धं स्रावयेद्दंशाद्धरिद्रागुळमाक्षिकैः ।
शतधौताज्यपिचवस्ते ते लेपाश्च शीतळाः ॥ ४६ ॥

दुष्टरक्तापगमनात्सद्यो रागरुजां शमः ।
गात्रं बध्वोपरि दृढं रज्वा पट्टेन वाससा ॥ ४७ ॥

स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ।
अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ॥ ४८ ॥

न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ।
प्रच्छानं पिण्डिते रक्ते त्ववगाढे जलौकसः ॥ ४९ ॥

त्वक्स्थेऽलाबुघटीशृङ्गं व्यापके तु सिराव्यधः ।
वातादिधाम वा शृङ्गजलौकालाबुभिः क्रमात् ॥ ५० ॥

स्रुतासृजः प्रदेहाद्यैश्शीतैस्स्याद्वायुकोपतः ।
सतोदकण्डूर्यश्शोफस्सर्पिषोष्णेन सेचयेत् ॥ ५१ ॥

इति हृदयप्रिये रक्तमोक्षकल्पो नाम
त्रयोदशोऽध्यायः ।

---

अथ चतुर्दशोऽध्यायः ।

सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।
छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥

चूषयन्निव संरूढं रोगमुन्मूलयेज्जवात् ।
कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २ ॥

स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ।
लेपो व्यङ्गमशश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥

भगन्दरापचीग्रन्थिदुष्टनाळीव्रणादिषु ।
न तूभयोऽपि योक्तव्यः पित्ते रक्ते चले बले ॥ ४ ॥

ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ ।
तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥

भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ।
अजीर्णेऽन्ने शिशौ वृद्धे धमनीमर्मसन्धिषु ॥ ६ ॥

तरुणास्थिसिरास्नायुसेवनीगळनाभिषु ।
देशेऽल्पमांसे वृषणे मेढ्रे स्रोतोनखान्तरे ॥ ७ ॥

वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ।
काळमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥

अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥

काकजङ्घामपामार्गं साग्निमन्थाग्नितिल्वकान् ।
सार्द्रान् समूलशाखादीन् खण्डशः परिकल्पितान् ॥ १० ॥
कोशातकीश्चतस्रश्च शूकं नाळं यवस्य च ।
निवाते निचयीकृत्य पृथक्तानि शिलातले ॥ ११ ॥

प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलानां कुतळैर्दग्ध्वाग्नौ विगते पृथक् ॥ १२ ॥

कृत्वा सुधाश्मनां भस्म द्रोणन्त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥

गाळयेदर्धभारेण महता वाससा ततः ।
यावत् पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥१४॥
गृहीत्वा क्षारनिष्यन्दं पचेल्लौहीं विघट्टयन् ।
पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥

शुक्तिक्षारपंकशङ्खनाभीश्चाऽऽयसभाजने ।
कृत्वाग्निवर्णं बहुशः क्षारोत्थे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शङ्खदक्षशिखिगृध्रकङ्ककपोतजम् ॥ १७ ॥

चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च ।
परितस्सुतरां चातो दर्व्या तदवघट्टयेत् ॥ १८ ॥

सबाष्पैश्च यदोत्तिष्ठेद् बुद्बुदैर्लेहवत् घनः ।
अवतार्य तदा शीतो यवराशावयोमये ॥ १९ ॥

स्थाप्योऽयम्मध्यमक्षारो, न तु पिष्ट्वा क्षिपेन्मृदौ ।
निर्वाप्यापनयेत्, तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥ २० ॥

तथा लाङ्गलिकादन्तीचित्रकातिविषावचाः ।
स्वर्जिकाकनकक्षीरीहिङ्गुपूतीकपल्लवाः ॥ २१ ॥

तालपत्री विडं चेति सप्तरात्रात् परन्तु सः ।
योज्य,स्तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥

मध्येष्वेष्वेव मध्यो,ऽन्यः पित्तास्रगुदजन्मसु ।
बलार्थं क्षीणपानीये क्षारांबु पुनरावपेत् ॥ २३ ॥

नातितीक्ष्णमृदुः श्लक्ष्णः पिच्छिलश्शीघ्रगस्सितः ।
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥ २४ ॥

रोगानुरूपं क्षारन्तु दद्याद्वैद्यश्शलाकया ।
ततताम् अवगाढत्वं व्याधेरालोच्य कल्पयेत् ॥ २५ ॥

लेपे तनुत्वं घनतां ततताञ्चामयस्य तु ।
स्थानान्न्यूनं मृदुं दद्यादर्धभागे तु मध्यमम् ॥ २६ ॥

तीक्ष्णं मध्यात्रिभागे च तालपत्रघनो घने ।
घ्राणार्बुदादौ सुतनुर्मात्रा धार्या शतं दलम् ॥ २७ ॥

क्षारं प्रमार्जनेनानुपरिमृज्याऽवगम्य च ।
सुदग्धं घृतमध्वक्तं तत् पयोमस्तुकाञ्जिकैः ॥ २८ ॥

निर्वापयेत्ततस्साज्यैः स्वादुशीतैः प्रदेहयेत् ।
अभिष्यन्दीनि योज्यानि भोज्यानि क्लेदनाय च ॥ २९ ॥

यदि च स्थिरमूलत्वात् क्षारदग्धं न शीर्यते ।
धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ॥ ३० ॥

तिलकल्कस्समधुको घृताक्तो व्रणरोपणः ।
पक्वजंब्वसितं सन्नं सम्यग्दग्धे विपर्यये ॥ ३१ ॥

ताम्रतातोदकण्ड्वाद्यं दुर्दग्धं तत् पुनर्दहेत् ।
अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादयः ॥ ३२ ॥

गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।
पुंस्त्वोपघातो मृत्युर्वा गुदस्य शतनाद् ध्रुवम् ॥ ३३ ॥
नासायां नासिकावंशदरणाकुञ्चनोद्भवः ।
भवेच्च विषयाज्ञानं तद्वच्छ्रोत्रादिकेष्वपि ॥ ३४ ॥
विशेषादत्र सेकोऽम्लैर्लेपो मधुघृतं तिलाः ।
वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३५ ॥
अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ।
यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३६ ॥
अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात् ।
भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ३७ ॥
त्वचि मांससिरास्नायुसन्ध्यस्थिषु स योज्यते ।
मशाङ्गग्लानिमूर्धार्तिचर्मकीलतिलादिषु ॥ ३८ ॥
त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः ।
अर्शोभगन्दरग्रन्थिदुष्टनाडीव्रणादिषु ॥ ३९ ॥
मांसदाहो मधुस्नेहजाम्बवोष्ठगुडादिभिः ।
श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु ॥ ४० ॥
सिरादिदाहस्तैरेव न दहेत् क्षारवारितान् ।
अन्तश्शल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ४१ ॥
सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ।
तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४२ ॥
पक्वतालकपोताभं सुरोहं नातिवेदनम् ।
प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४३ ॥
चतुर्धा तत्र तुत्थेन सह तुत्थस्य लक्षणम् ।
त्वग्विवर्णोप्यतेऽत्यर्थं नच स्फोटसमुद्भवः ॥ ४४ ॥
सस्फोटदाहतीव्रोपं दुर्दग्धमतिदाहतः ।
मांसलम्बनसङ्कोचदाहधूपनवेदनाः ॥ ४५ ॥
सिरादिनाशस्तृण्मूर्च्छाव्रणगाम्भीर्यमृत्यवः ।
तुत्थस्याग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ ४६ ॥

स्त्यानेऽस्रे वेदनात्यर्थं विलीने मन्दता रुजः ।
दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥ ४७ ॥

सम्यग्दग्धे तुकाक्षीरीप्लक्षगैरिकचन्दनैः ।
लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत् क्रिया ॥ ४८ ॥

अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ।
स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ४९ ॥

शास्त्रान्तरैर्बहुविधैरपि कर्मभिर्ये
साध्या भवन्ति न गुदाङ्कुरदुर्व्रणाद्याः ।
रोगास्तु ते द्रुततरं द्रुतमूलबद्धाः
क्षाराग्निकर्म भिदयैव भवन्ति साध्याः ॥ ५० ॥

दोषं दूष्यं बलं कालं देशाग्निप्रकृतीर्वयः ।
सत्त्वं सात्म्यमवस्थाश्च वीक्ष्य कुर्याच्चिकित्सितम् ॥ ५१ ॥

स्नेहं स्वेदं वमिं रेकं वस्तिं काथादिकांश्च वा ।
नस्यादिकमसृङ्मोक्षं क्षारं चाग्निं सुखप्रदम् ॥ ५२ ॥

इति हृदयप्रिये प्रथमखण्डे क्षाराग्निकल्पो नाम
चतुर्दशोऽध्यायः ॥

---

अथ पञ्चदशोऽध्यायः ।

वस्तिक्षाराग्निकर्मादौ स्याद्यन्त्रं क्षिप्रसाधनम् ।
अनेकरूपकार्यत्वाद्यन्त्राणि विविधानि च ॥ १ ॥

वस्तिनेत्रं तु हेमादिधातुदार्वस्थिवेणुजम् ।
गोपुच्छाकारमच्छिद्रं श्लक्ष्णं गुलिकामुखम् ॥ २ ॥

ऊनेऽब्दे पञ्चपूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट् ।
सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव ॥ ३ ॥

द्वादशैव परं विंशाद्वीक्ष्य वर्षान्तरेषु च ।
वयोबलशरीराणि प्रमाणमभिवर्धयेत् ॥ ४ ॥

स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ।
पूर्णेऽब्दे ऽङ्गुलमादाय तदर्धार्धप्रवर्धितम् ॥ ५ ॥

त्र्यङ्गुलं परमं छिद्रं मूलेऽग्रे वहते तु यत् ।
मुद्गं माषं कळायं तत् क्लिन्नं कर्कन्धुकं क्रमात् ॥ ६ ॥

मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ।
वर्त्याग्रे पिहितं मूले यथास्वं द्व्यङ्गुलान्तरम् ॥ ७ ॥

कर्णिकाद्वितयं नेत्रे कुर्यात्तत्र च योजयेत् ।
अजाविमहिषादीनां वस्तिमन्याङ्कचर्म वा ॥ ८ ॥

तनुं सुदृढमच्छिद्रं सूत्रबद्धं सुसक्रियम् ।
तथैवोत्तरबस्तौ च नराणां द्वादशाङ्गुलम् ॥ ९ ॥

रोग्यङ्गुलप्रमाणेन कुन्दवृन्तोपमं दृढम् ।
सिद्धार्थकप्रवेशाग्रं मूलमध्यस्थकर्णिकम् ॥ १० ॥

मृदुवस्तिंसुबद्धं च तद्वत् स्त्रीणां दशाङ्गुलम् ।
कुर्यान्मुद्गप्रवेशाग्रं मूले तद्द्विगुणं मतम् ॥ ११ ॥

अपत्यमार्गे योज्यं स्याद्यन्त्राग्रं चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रसरणौ बालानान्त्वेकमङ्गुलम् ॥ १२ ॥

वस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजुम् ।
मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ॥ १३ ॥

तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ।
अङ्गुलानां क्रमात् पातुः प्रमाणेनाष्टकानि तत् ॥ १४ ।

नस्ये तु द्विमुखा नाळी कळायास्या षडङ्गुला ।
हेमादिधातुभिः कार्या नाळी मूत्रप्रवर्तिनी ॥ १५ ॥

षोडशाङ्गुलदीर्घा सा वक्राग्रे चतुरङ्कुले ।
मुद्गवृत्ता दलच्छिद्रा शलाकाक्रान्तमूलखा ॥ १६ ॥

अग्रपार्श्वे सूक्ष्मरन्ध्रा पुंसां स्त्रीणां तु दैर्घ्यतः ।
अष्टाङ्कुला धनुर्वक्रा स्थौल्येन द्विगुणा तथा ॥ १७ ॥

दशाङ्गुलार्धनाहा च द्व्येकच्छिद्रा तया गळे ।
पोत्थकीशुण्डिकादीनां दर्शनं कर्म चेष्यते ॥ १८ ॥

अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ।
नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम् ॥ १९ ॥
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि ।
मध्येऽस्य त्र्यङ्गुलच्छिद्रमङ्गुष्ठोदरविस्तृतम् ॥ २० ॥
अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं च तदूर्ध्वतः ।
शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीडने ॥ २१ ॥
सर्वथापनयेदोष्ठं छिद्रादूर्ध्वं यदन्तरं ।
घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया ॥ २२ ॥
प्रदेशिनीपरीणाहा स्याद् भगन्दरयन्त्रणे ।
अङ्गुलीत्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम् ॥ २३ ॥
द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् ।
योनिव्रणेक्षणं तद्वद् द्विमुखं षोडशाङ्गुलम् ॥ २४ ॥
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम् ।
चतुश्शलाकमाक्रान्तम्मूले तद्विकसन्मुखं ॥ २५ ॥
यन्त्रे नाळीव्रणाभ्यङ्गक्षालनाय षडङ्गुले ।
वस्तियन्त्राकृती मूले मुखेऽङ्गुष्ठकळायके ॥ २६ ॥
अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ।
द्विद्वारा नळिका पिञ्छनळिका वा दकोदरे ॥ २७ ॥
त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम् ।
अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २८ ॥
स्याद् द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः ।
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तःश्लेष्मरक्तहृत् ॥ २९ ॥
तद्वत् घटी हिता गुल्मविलयोन्नमने च सा ।
शलाका विविधाकाराः स्युः प्रयोगसुखावहाः ॥ ३० ॥
एषणे वृत्तवदना दीर्घेणाष्टाङ्गुला पुनः ।
स्यान्मसूरदलास्या च शोधनाय नवाङ्गुला ॥ ३१ ॥
शङ्कवष्षडुभौ तेषां षोडशद्वादशाङ्गुलौ ।
व्यूहनेऽहिफणावक्त्रौ द्वौ दशद्वादशाङ्गुलौ ॥ ३२ ॥

चालने शरपुङ्खास्यावाहार्ये बडिशाकृती ।
नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः ॥ ३३ ॥

अष्टादशाङ्गुलस्तेन मूढगर्भं हरेत् स्त्रियाः ।
अश्मर्याहरणे सर्पफणाबद्वक्रमग्रतः ॥ ३४ ॥

कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ।
कार्पासविहितोष्णीषाश्शलाकाः स्युः प्रमार्जने ॥ ३५ ॥

अञ्जनार्थं तथान्याश्च क्षाराग्न्यादौ नताननाः ।
कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ॥ ३६ ॥

द्विमुखी लिङ्गनाशे तु ताम्री कुरवकानना ।
संदंशो मूलबद्धः स्याद् द्विदलो विवृताननः ॥ ३७ ॥

षडङ्गुलो निर्हरणे सूक्ष्मशल्योपपक्ष्मणाम् ।
विद्यात्स्वस्तिकयन्त्राणि कङ्काद्यास्यसमानि च ॥ ३८ ॥

कौटिल्यार्जवदैर्घ्यादावेषां साध्यं नियामकम् ।
दशाङ्गुलः प्रदंशः स्यान्न तेषां विवृताननः ॥ ३९ ॥

संवृतास्योऽपरस्ताभ्यां दन्तान् शल्यानि चाहरेत् ।
मुचुटी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ॥ ४० ॥

गम्भीरव्रणमांसादिच्छिन्नाशिष्टार्मं चैतया ।
रुचकाग्रं गर्भहृतौ द्विगुणद्वादशाङ्गुलम् ॥ ४१ ॥

दशाङ्गुलं परं कीलात् वक्रं वृश्चिकशृङ्गवत् ।
अनुयन्त्राण्यश्मरज्जुहस्तपादनखादि च ॥ ४२ ॥

शस्त्राणि रोमवाहीनि सुग्रहाणि च कारयेत् ।
स्वोन्मानाष्टांशकफलान्यभिधानाकृतीनि च ॥ ४३ ॥

षडङ्गुलानि प्रायेण दैर्घ्यात्तीक्ष्णोद्भवानि च ।
मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति ॥ ४४ ॥

लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ।
वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ॥ ४५ ॥

ऋज्वग्रमुन्नते शोफे निम्ने पृष्ठनताग्रकम् ।
उत्पलाध्यर्धधाराख्ये दीर्घह्रस्वानने तथा ॥ ४६ ॥
सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले ।
फलेऽध्यर्धाङ्गुलं योज्यं स्यात् सिरोदरयोर्व्यधे ॥ ४७ ॥
व्रीहिवक्त्रं कुठार्यर्धाङ्गुलगोदशनाननम् ।
तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम् ॥ ४८ ॥
मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम् ।
योगतो वृद्धिपत्रेण सममङ्गुलिशस्त्रकम् ॥ ४९ ॥
तत् प्रदेशिन्यग्रपर्वप्रमाणार्पितमुद्रिकम् ।
सूत्रबद्धं गळस्रोतोरोगोच्छेदनभेदने ॥ ५० ॥
ग्रहणे शुण्डिकामांदेर्बळिशस्तु नताननः ।
छेदेऽस्थ्नां खरपत्रन्तु सूक्ष्मदन्तं दशांगुलम् ॥ ५१ ॥
उक्तेषु च यथायोग्यं कुर्यात्सत्सरुबन्धनम् ।
स्नायुसूत्रकचच्छेदे कर्तरी च नवाङ्गुला ॥ ५२ ॥
वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।
सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ॥ ५३ ॥
एकधारं चतुष्कोणं प्रवृद्धाकृति चैकतः ।
दन्तशोधनकं तेन शोधयेद्दन्तशर्कराः ॥ ५४ ॥
सूची त्रिकोणा सुच्छिद्रा मांसळाङ्गेषु सीवने ।
धनुर्वक्रा पुनस्त्वन्या पक्वामाशयमर्मसु ॥ ५५ ॥
ऋजुवृत्तात्मिकान्यत्र त्र्यस्रा त्रिद्व्यङ्गुलायता ।
कूर्चो वृत्तैकपीठस्थसूच्यष्टकविनिर्मितः ॥ ५६ ॥
स योज्यो नीलिकाव्यङ्गकेशशातनकुट्टने ।
अर्धाङ्गुलमुखोद्वृत्तैरष्टाभिः कण्टकैः खजः ॥ ५७ ॥
पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक् ।
आराद्धाङ्गुलवृत्तास्या तत्प्रवेशा तदूर्ध्वतः ॥ ५८ ॥
चतुरश्रा तया विध्येच्छोफं पक्वामसंशये ।
सदा द्वित्राणि गृह्णीयाद्यन्त्रशस्त्राणि कर्मवित् ॥ ५९ ॥

अनुयन्त्राणि च नखक्षाराग्न्यादीनि चिन्तयेत् ।
उक्तं पूर्वोक्तरीत्यैवमन्यान्यपि यथोचितम् ॥ ६० ॥

कुर्यादुपेये नियमो नोपायानामिहास्ति यत् ।
अतः परं शस्त्रकर्म पक्के शोफे प्रदर्श्यते ॥ ६१ ॥

शोफोऽल्परुक् सवर्णश्च सामो रक्ष्यः सपाकतः ।
सुशीतलेपसेकासृङ्मोक्षसंशोधनादिभिः ॥ ६२ ॥

पच्यमानो विवर्णस्तु रागतोदज्वरान्वितः ।
दाहोषास्पृश्यतातृष्णानिद्राहान्यरुचिप्रदः ॥ ६३ ॥

पक्केऽल्या वेदना कण्डूः पाण्डुता वलिसंभवः ।
नामोऽन्तेषून्नतिर्मध्ये स्पृष्टे पूयप्रसर्पणम् ॥ ६४ ॥

शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ।
रागो रक्ताच्च पाकः स्यादतो दोषैस्सशोणितैः ॥ ६५ ॥

अतिपक्के रोमभङ्गः श्यावता मृदुता त्वचि ।
कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ॥ ६६ ॥

पक्कलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।
त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ॥ ६७ ॥

रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ।
बलिनः पाटयेदाशु मर्मसन्ध्यादि वर्जयन् ॥ ६८ ॥
आमच्छेदे सिराव्यापदत्यसृक्स्राववेदनाः ।
अतिपक्को दहेच्छोफस्सिरास्नाय्वसृगामिषम् ॥ ६९ ॥

तस्मादामं न हि छिन्द्यात् पक्कं नैव त्यजेद् बुधः ।
प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ ७० ॥

मद्यपं पाययेन्मद्यं तीक्ष्णमज्ञापकं रुजाम् ।
अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ॥ ७१ ॥
अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ।
सम्मुखो यन्त्रयित्वा तु न्यसेन्मर्माणि वर्जयन् ॥ ७२ ॥

अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ।
सकृदेवाहरेत्तच्च पाके तु सुमहत्यपि ॥ ७३ ॥

पाटयेद्यङ्गुलं सम्यग्द्यङ्गुलत्र्यङ्गुलान्तरम् ।
एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ॥ ७४ ॥
अङ्गुलीवालनाळैर्वा यथादोषं यथाशयम् ।
यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ॥ ७५ ॥
तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ।
आयतं च विशालं च यथा दोषो न तिष्ठति ॥ ७६ ॥
शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथू ।
असम्मोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥ ७७ ॥
तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ।
कुक्षिकक्षाक्षिकूटोष्टकपोलगळवंक्षणे ॥ ७८ ॥
अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ।
शस्त्रेऽवचारिते वाग्भिश्शीताम्भोभिश्च रोगिणम् ॥ ७९ ॥
आश्वास्य परितोऽङ्गुल्या प्रतिपीड्य व्रणं ततः ।
क्षाळयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ॥ ८० ॥
गुल्गुल्वगरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ।
धूपयेत् पटुषड्ग्रन्थानिम्बपत्रैर्घृताप्लुतैः ॥ ८१ ॥
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ।
दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च ताम् ॥ ८२ ॥
घृताक्तैस्सक्तुभिश्चोर्ध्वं घनाङ्कवलिकां ततः ।
निधाय युक्त्या बध्नीयात् पट्टेन सुसमाहितः ॥ ८३ ॥
प्रक्षाळनादि दिवसे द्वितेये कर्म नाचरेत् ।
तृतीयेह्नि पुनः कुर्याद् व्रणे कर्म च पूर्ववत् ॥ ८४ ॥
सपूतिमांसे सोत्सङ्गे सगतौ पूयपूरिते ।
व्रणे विकेशिकान्तस्था शोधयेच्छीघ्रशोधिनी ॥ ८५ ॥
ततः स्नेहविधानोक्तं तस्याचारं समादिशेत् ।
क्षीरेक्षुविकृतीरम्लपटुकद्वासवं त्यजेत् ॥ ८६ ॥
स्त्रीदर्शनादिना शुक्रं चलितं सङ्गदोषदम् ।
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ॥ ८७ ॥

तौ च रुक् च दिवास्वापात् ते च मृत्युश्च मैथुनात् ।
यवषाष्टिकगोधूमतुवरीचणमुद्गकम् ॥ ८८ ॥

बालमूलकवार्ताकजीवन्तीसुनिषण्डकम् ।
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ८९ ॥

सैन्धवं डाडिमं धात्री घृतं तप्तहिमं जलम् ।
अशीतं जीर्णशाल्यन्नं विहितं पथ्यभोजने ॥ ९० ॥

सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान् ।
प्रलम्बिमांसं विच्छिन्नं चलास्थ्यादि निवेश्य च ॥ ९१ ॥

स्थिते रक्ते शनैस्सुष्ठु रोमादीन्यपनीय च ।
सान्त्वयित्वातुरंदिग्धे व्रणे मधुघृतद्रुतैः ॥ ९२ ॥

अञ्जनक्षौमजमषीफलिनीलोध्रयष्टिभिः ।
व्रणं निश्शोणितोष्ठं तु लिखित्वा जातशोणितम् ॥ ९३ ॥

सीव्येद्रक्तं हि सन्धानं विद्धे बन्धादि पूर्ववत् ।
यथाङ्गं सुनिविष्टं स्यात्तथा बन्धंप्रकल्पयेत् ॥ ९४ ॥

बध्नीयाद् गाढमूरुस्फिक्कक्ष्यावंक्षणमूर्धसु ।
मुखोरःपार्श्वे जठरमेढ्रमुष्कादिके समम् ॥ ९५ ॥

श्लथं नेत्रे सन्धिषु च तद्दृढं कफवातजे ।
बन्धः शीते वसन्ते च मोक्षणीयस्त्र्यहात् त्र्यहात् ॥ ९६ ॥

सायंप्रातस्ततो मोक्षो ग्रीष्मे शरदि चेष्यते ।
व्रणक्रियां समालोच्य चिकित्सेच्च यथायथम् ॥ ९७ ॥

इति हृदयप्रिये प्रथमखण्डे यन्त्रशस्त्रादिकल्पो
नाम पञ्चदशोऽध्यायः ॥

---

अथ षोडशोऽध्यायः ।

इतः परन्त्वौषधस्य कल्पनात्र निगद्यते ।
धन्वे साधारणे देशे कुशादिसहिते शुचौ ॥ १ ॥

प्रदक्षिणजले चान्यविरुद्धद्रुमवर्जिते ।
त्यक्ते श्मशानवल्मीकश्वभ्राद्यैरशुभमृत्तिके ॥ २ ॥

सञ्जातमौषधं ग्राह्यं युक्तं वर्णरसादिभिः ।
मूलं जन्तुदवादुष्टमुदीचीं दिशमाश्रितम् ॥ ३ ॥

अथ कल्याणचरितश्श्राद्धश्शुचिरुपोषितः ।
गृह्णीयादौषधं सुस्थं स्थितं काले तु कल्पयेत् ॥ ४ ॥

सक्षीरं तदसंपत्तावनतिक्रान्तवत्सरम् ।
ऋते घृतगुळक्षौद्रधान्यकृष्णाविळंगतः ॥ ५ ॥

पयो बाष्कयणं ग्राह्यं विण्मूत्राद्यं च नीरुजम् ।
स्वरसः कल्कितः क्वाथः शीतोरात्रिं दिवस्थितेः ॥ ६ ॥

सद्योभिषुतपूतत्वात् फाण्डश्चेत्यत्र पञ्चधा ।
*कषायकल्पना द्रव्यैः पूर्वं पूर्वं बलाधिका ॥ ७ ॥

मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशकालौ च युञ्ज्यात्तन्मानकल्पने ॥ ८ ॥

मध्यन्तु मानं निर्दिष्टं स्वरसस्य चतुष्पलम् ।
पेष्यस्य कर्षमालोड्यं द्रवद्रव्यपलत्रये ॥ ९ ॥

क्वाथं द्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितम् ।
शीतं पले पलैष्षड्भिश्चतुर्भिश्च परं द्रवैः ॥ १० ॥

उपरि क्षेपणे दद्यात् कर्षार्धं द्रवचूर्णयोः ।
तत्पादांशं क्षारपट्टगुल्गुल्वश्मोद्भवादिकम् ॥ ११ ॥

स्नेहपाके त्वमानोक्तौ क्वाथः प्रोक्तश्चतुर्गुणः ।
स्नेहे सिध्यति शुद्धाम्बुनिष्क्वाथस्वरसैः क्रमात् ॥ १२ ॥

---

* कषायस्त्वपट्टद्रव्यैः इति पाठभेदः

कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ।
एकद्वित्रिदिनैः पाकः क्षीरे तक्रे रसे क्रमात् ॥ १३ ॥

क्वाथे पञ्चदिनैः प्रोक्तः काञ्जिके तक्रवत्पुनः ।
काथः पञ्चदिनैर्मूले सारे स्यान्नवभिर्दिनैः ॥ १४ ॥

प्रायेण मूलं संग्राह्यं निम्बादीनां पुनस्त्वचः ।
सारो ग्राह्योऽसनादीनां वीर्याधिक्यानुरोधतः ॥ १५ ॥

छिन्नोद्भवामहत्पञ्चमूलाद्यानिस्त्वचः स्मृताः ।
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥ १६ ॥

मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ।
किञ्चित् सीदति कृष्णे च वर्तमाने च पश्चिमः ॥ १७ ॥

लेहस्य तन्तुमत्ताप्सु मज्जनं शरणं न च ।
वर्णादि सम्पच्च यदा तदा द्रागवतारयेत् ॥ १८ ॥

मृदुर्नस्ये खरोऽभ्यङ्गे पाने वस्तौ च चिक्कणः ।
उन्मानं परिमाणं च प्रकृतत्वादिहोच्यते ॥ १९ ॥

सर्षपा द्वादश व्रीहिः ते द्वादश पणं नव ।
शाणं निष्कं द्वादश स्युः द्वे शाणे वटकं स्मृतम् ॥ २० ॥

कर्षं शाणैश्चतुर्भिस्स्याच्छुक्तिः कर्षद्वयं भवेत् ।
पलं कर्षैश्चतुर्भिः स्यात् प्रसृतं तु पलद्वयम् ॥ २१ ॥

तुला पलशतं प्रोक्ता भारः स्याद्विंशतिस्तुलाः ।
वटकस्य तु पर्यायो द्रंक्षुमः कोलमित्यपि ॥ २२ ॥

कर्षस्याक्षं पिचुः पाणितलं च कवळग्रहः ।
सुवर्णं पाणिमानं च विलाळपदतिन्दुके ॥ २३ ॥

शुक्तेरष्टमिका प्रोक्ता पलस्याम्रं चतुर्थिका ।
मुष्टिः प्रकुञ्चो विल्वं च प्रसृतस्याञ्जलिस्तथा ॥ २४ ॥

षट्त्रिंशद्विन्दुभिः शाणं स्यान्नात्यच्छघनद्रवात् ।
द्रवे शाणं पाणितलं मुष्टिं च कुडुवं क्रमात् ॥ २५ ॥

प्रस्थं तथाढकं द्रोणं वहं विद्याच्चतुर्गुणम् ।
आढकस्य तु पर्यायः कंसः पात्रं च भाजनम् ॥ २६ ॥

द्रोणस्य घटपर्यायाः पर्यायाः स्युस्तथार्मणः।
प्रसिद्धान्यत्र मानानि कथितानि स्वनामभिः ॥ २७ ॥

समाप्यते स्थानमिदं वैद्यकर्मप्रबोधकन्।
आयुर्वेदोक्तसाराणां कल्पनात् कल्पसांज्ञितम् ॥ २८ ॥

नित्यं श्रीपरमेश्वरस्य भजता व्याघ्रालयाधीशितुः।
पादाब्जं परमेश्वरेण शिवभूदेवान्वयोद्भूतिना।
संक्षिप्ते हृदयप्रिये प्रकलितः खण्डोत्र कल्पाभिधो
मोदायास्तु गुणेतरो विमृशतां मात्सर्यवर्जं सताम्॥ २९ ॥

इति हृदयप्रिये द्रव्यादिकल्पो नाम
षोडशोऽध्यायः

---

प्रथमखण्डः समाप्तः।

# हृदयप्रियः ।

## अथ द्वितीयखण्डः ।

### प्रथमोऽध्यायः ।

(दूतादिलक्षणम् ।)

अथातो वक्ष्यते स्थानं सनिदानं चिकित्सितम् ।
साध्यासाध्यविभागार्थमादौ दूतादिलक्षणम् ॥ १ ॥

पाषण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ २ ॥

दीनं भीतमनिष्टोक्तिं रक्तमाल्यानुलेपनम् ।
दण्डिनं जटिलम्मुण्डमाह्वयन्तं च दूरतः ॥ ३ ॥

शस्त्रिणं तैलपङ्काङ्कं काष्ठलोष्टादिमर्दिनम् ।
आर्द्रवस्त्रं च जानीयाद्दूतमप्रियसूचकम् ॥ ४ ॥

अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ।
जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ॥ ५ ॥

सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयतेऽथवा ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ६ ॥

तथार्धरात्रे मध्याह्ने सन्ध्ययोः पर्ववासरे ।
षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ॥ ७ ॥

भरणीकृत्तिकाऽऽश्लेषापूर्वाऽऽर्द्रापित्र्यनैर्ऋते ।
दूतस्य स्पर्शनं नाभिनासाकेशनखद्विजे ॥ ८ ॥

गुह्यपृष्ठस्तनग्रीवाजठरेऽप्यशुभप्रदम् ।
दूतालापे निर्गमे च गृहमाप्तौ च रोगिणः ॥ ९ ॥

निमित्तमशुभं पश्यन्न चिकित्सापरो भवेत् ।
रोदनं पतनं पूर्णपात्रादेः क्रूरनिस्वनः ॥ १० ॥

G P. T. 924. 300. 18-6-1105. B

छत्रवस्त्रादिसङ्गो वा पूतिगन्धोद्गमः क्षुतिः ।
पथच्छेदोऽहिमार्जारगोधानकुलवानरैः ॥ ११ ॥

उदश्विच्चर्मलवणतूलतैलायसेन्धनम् ।
मार्जनीशूर्पपरशुभस्मसर्षपकर्दमाः ॥ १२ ॥

विधवाकासरखरपाशदण्डतृणानि च ।
निर्गच्छतोऽभियातानि सूचयन्ति शुभेतरम् ॥ १३ ॥

दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।
यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ १४ ॥

दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्ष्ययोः ।
रत्नेभपूर्णकुम्भानां कन्यायास्स्यन्दनस्य च ॥ १५ ॥

नरस्य वर्धमानस्य देवतानां नृपस्य च ।
शुक्लानां सुमनोवस्त्रचामराम्बरवाजिनाम् ॥ १६ ॥

साधुशङ्खध्वजोष्णीषतोरणस्वस्तिकस्य च ।
भूमेस्समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ १७ ॥

मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वास्सवत्साया बडवायाः स्त्रिया अपि ॥ १८ ॥

बद्धैकधेनोरिष्टस्य मुकुरादेश्च दर्शनम् ।
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ १९ ॥

दध्यक्षतादिकं यच्च पितृकर्मोपयौगिकम् ।
गृहप्रवेशे दृष्टं चेत् तद्भवेन्मृतिसूचकम् ॥ २० ॥

अतः परन्तु विकृतिविज्ञानीयन्निरूप्यते ।
पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ॥ २१ ॥

यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ।
अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ॥ २२ ॥

अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ।
रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ २३ ॥

अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।
विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ २४ ॥

केशरोम निरभ्यङ्गं यस्याभ्यक्तमिवेक्ष्यते ।
यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ २५ ॥

जिह्मविस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी ।
नासिकात्यर्थविवृता संवृता पिटकाचिता ॥ २६ ॥

उच्छूना स्फुटिता म्लाना यस्योष्टं यात्यधोऽधरः ।
ऊर्ध्वं द्वितीयस्स्यातां वा पक्वजम्बूनिभावुभौ ॥ २७ ॥

दन्तास्सशर्कराश्श्यावास्ताम्राः पुष्पितपाङ्किताः ।
सहसैव पतेयुर्वा जिह्वा जिह्मा विसर्पिणी ॥ २८ ॥

शूना शुष्का गुरुश्श्यावा लिप्ता सुप्ता सकण्टका ।
शिरश्शिरोधरां वोढुं पृष्ठं वा भारमात्मनः ॥ २९ ॥

हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।
यस्यानिमित्तमङ्गानि गुरूण्यतिलघूनि वा ॥ ३० ॥

विषदोषादिना यस्य खेभ्यो रक्तं प्रवर्तते ।
उत्सिक्तं मेहनं यस्य वृषणावतिनिस्सृतौ ॥ ३१ ॥

अतोऽन्यथा वा यस्य स्यात्सर्वे ते कालचोदिताः ।
यस्यापूर्वास्सिरा रेखा बालेन्द्वाकृतयोऽपि वा ॥ ३२ ॥

ललाटे वस्तिशीर्षे वा षण्मासं तस्य जीवितम् ।
मूर्ध्नि भ्रुवोर्वा जायन्ते सीमन्तावर्तका नवाः ॥ ३३ ॥

मृत्युः स्वस्थस्य षड्रात्रात् त्रिरात्रादातुरस्य तु ।
जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ ३४ ॥

खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ ३५ ॥

आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।
अकस्माद्युगपद् गात्रे वर्णौ प्राकृतवैकृतौ ॥ ३६ ॥

तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।
यस्य स्फुटेयुरङ्गुल्यो नाकृष्टा न स जीवति ॥ ३७ ॥

क्षयकासादिषु तथा यस्यापूर्वो ध्वनिर्भवेत् ।
ह्रस्वो दीर्घो भवेच्छ्वासः पूतिस्सुरभिरेव वा ॥ ३८ ॥

आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।
मलवस्त्रव्रणादौ वा पर्यन्तं तस्य जीवितम् ॥ ३९ ॥

सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ ४० ॥

उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च स प्रेताधिपगोचरः ॥ ४१ ॥

मूत्रं पुरीषं निष्ठ्यूतं शुक्रं चाप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ ४२ ॥

अरुन्धतीं व्योमगङ्गां यो ध्रुवं च न पश्यति ।
पश्यत्यनेत्ररोगो वा चन्द्रं विकृतरूपिणम् ॥ ४३ ॥

दीपगन्धं न जानाति षण्मासं न स जीवति ।
असतो रूपशब्दादीन् यो जानाति सतो न च ॥ ४४ ॥

गन्धस्पर्शरसादीन् वा मन्यते यो विपर्ययात् ।
जानात्यतीन्द्रियं यश्च तेषाम्मरणमादिशेत् ॥ ४५ ॥

आतपादर्शतोयादौ प्रतिच्छाया शरीरगा ।
छिन्ना व्यङ्गा च विकृता यस्य स्यात् स च मृत्यवे ॥ ४६

वर्णप्रभाश्रया छाया सा विपर्यैति यस्य वा ।
स्वरहानिरयुक्त्या वा विवक्षुर्यश्च मुह्यति ॥ ४७ ॥

अङ्गघातं च नो वेत्ति तेषां मरणमादिशेत् ।
निकर्षन्निव यः पादौ च्युतांसः परिसर्पति ॥ ४८ ॥

हीयते बलतश्शश्वद्योऽन्नमश्नन् हितं बहु ।
दीर्घमुच्छ्वस्य यो ह्रस्वं निश्वस्य परिताम्यति ॥ ४९ ॥

द्रुतप्रचलनाडिं च विषमं स्पन्दते भृशम् ।
शिरो विक्षिपते कृच्छ्राद्योऽञ्जयित्वा प्रपाणिकौ ॥ ५०

यो ललाटात्स्रुतस्वेदः श्लथसन्धानबन्धनः ।
उत्थाप्यमानस्संमुह्येद्यो बली दुर्बलोऽपि वा ॥ ५१ ॥

उत्तान एव स्वपिति यः पादौ विकरोति च ।
शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ ५२ ॥

अहास्यहासी सम्मुह्येत् फूत्कारांश्च करोति यः ।
बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते ॥ ५३ ॥

भिषक्भेषजपानान्नगुरुमित्रद्विषश्च ये ।
वशगास्सर्व एवैते विज्ञेयास्समवर्तिनः ॥ ५४ ॥

भक्तिश्शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ।
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ५५ ॥

मत्तवद् गतिवाक्कम्पमोहा मासान्मरिष्यतः ।
नश्यत्यजानन् षडहात् केशोल्लुञ्छनवेदनाम् ॥ ५६ ॥

अत्याहारोऽप्यनाहारो निर्निद्रो वातिनिद्रकः ।
विकाराणां निवृत्तिर्वा सहसा सम्भवोऽपि वा ॥ ५७ ॥

इष्टाः प्रतीपा यस्य स्युर्विनश्यन्ति च ते जवात् ।
ज्वरो निहन्ति बलवान् क्षीणं शूनं हतानलम् ॥ ५८ ॥

श्वासिनं सक्तवचनं रक्ताक्षं हृदि शूलिनम् ।
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम् ॥ ५९ ॥

रोमकूपोद्गतं पूति भूर्यतीसारशोफवत् ।
यक्ष्मा पार्श्वरुजानाहरक्तछर्दंससतापिनम् ॥ ६० ॥

छर्दिर्विड्पूयरक्ताढ्या महावेगा सचन्द्रका ।
तृष्णान्यरोगग्लपितं बहिर्जिह्वं विचेतनम् ॥ ६१ ॥

मदात्ययोऽतिशीतार्तं क्षीणं तैलनिभाननम् ।
अर्शांसि पाणिपान्नाभिगुदमुष्कास्यशोफिनम् ॥ ६२ ॥

हृत्पार्श्वांसरुजाछर्दिपायुपाकज्वरातुरम् ।
अतीसारो यकृद्खण्डमांसधावनमेचकैः ॥ ६३ ॥

तैलमज्जावसारक्तैर्युक्तोऽनेकविधोऽन्नवान् ।
पार्श्वास्थिशूलिनं क्षीणं सज्वरानाहतृड्वमिम् ॥ ६४ ॥

अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ।
मेहस्तृड्दाहपिटकामांसकोथातिसारिणम् ॥ ६५ ॥

पिटका मर्महृत्पृष्ठस्तनांसगुदमूर्धगाः ।
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥ ६६ ॥

गुल्मस्सिरावृतश्छर्दिहिध्माध्मानरुजाज्वरैः ।
कासपीनसहृल्लासश्वासातीसारशोफवान् ॥ ६७ ॥

विण्मूत्रसंग्रहश्वासशोफहिध्माभ्रमज्वरैः ।
मूर्च्छाछर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ॥ ६८ ॥

शूनाक्षं कुटिलोपस्थं रेकेऽप्यानाहिनं मुहुः ।
पाण्डुरोगश्श्वयथुमान् पीताक्षिनखदर्शनः ॥ ६९ ॥

तन्द्रादाहारुचिछर्दिमूर्च्छाध्मानातिसारवान् ।
अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ७० ॥

नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ।
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ॥ ७१ ॥

दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ।
विसर्पः कासवैवर्ण्यज्वरमूर्च्छाङ्गभङ्गवान् ॥ ७२ ॥

भ्रमास्यशोषहृल्लासदेहदाहातिसारवान् ।
कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम् ॥ ७३ ॥

मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ।
वाताष्ठीलातिसंवृद्धा सतृष्णा हन्ति हृद्गता ॥ ७४ ॥

वातव्याधौ तु नासाया जिह्मता वंक्षणेऽतिरुक् ।
तथा वस्तिशिरोनाभिहृदये क्षीणदेहता ॥ ७५ ॥

तृष्णा भिन्नपुरीषत्वं स्तिमितत्वाततताक्षते ।
ज्वरश्च सन्धिविश्लेषो मुमूर्षोरुपजायते ॥ ७६ ॥

मसूरिका प्रवाळाभा लीनाश्श्वासातिसारदाः ।
अन्तर्वक्त्रा मसूराभाः किणाभाश्च मृतिप्रदाः ॥ ७७ ॥

रुजाविहीना वातोत्थाः पित्तजा दाहवर्जिताः ।
कफाद्व्रणाः पूयहीनाः घ्नन्ति मर्माणि चारुजः ॥ ७८ ॥

विण्मूत्रमारुतवहाः क्रिमिणश्च भगन्दराः ।
घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम् ॥ ७९ ॥

श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके ।
सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ ८० ॥

आननं हस्तपादं च विशेषाद्यस्य शुष्यति ।
शूयते वा विना देहात् स मासाद्यातिपञ्चताम् ॥ ८१ ॥

बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ।
यस्यातुरस्य जायन्ते त्रीन् पक्षान् न स जीवति ॥ ८२ ॥

यमुद्दिश्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ।
यस्य वा बहुशः सिद्धमौषधं च न सिध्यति ॥ ८३ ॥

याम्यैर्विहतवीर्यत्वात् तस्य नास्ति चिकित्सितम् ।
श्वासानामपि चिह्नानि वक्ष्यमाणानि लक्षयेत् ॥ ८४ ॥

कथयेन्न च पृष्टोऽपि दुश्रवं मरणं भिषक् ।
हतासुबन्धुमित्राणान्नचेच्छेत्तं चिकित्सितुम् ॥ ८५ ॥

मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयात् प्रोक्तं विषमापरिहारिणाम् ॥ ८६ ॥

इति हृदयप्रिये द्वितीयखण्डे दूतादिलक्षणं नाम
प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ।

### (ज्वरनिदानम् ।)

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ १ ॥

सर्वेषामेव रोगाणान्निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ २ ॥

अहिता हीनमिथ्यातियोगाः कालार्थकर्मणाम् ।
ज्वरोऽष्टधा पृथग्दोषैः संसर्गात्सन्निपाततः ॥ ३ ॥

आगन्तुश्च मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ।
आमाशयं प्रविश्यामममनुगम्य पिधाय च ॥ ४ ॥

स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ।
सह तेनाभिसर्पन्तस्तपन्तस्सकलं वपुः ॥ ५ ॥

कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते ।
स्रोतोविबन्धात् प्रायेण तत्र स्वेदो न जायते ॥ ६ ॥

तत्र प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ।
आस्यवैरस्यमरुचिर्जृम्भासास्राकुलाक्षता ॥ ७ ॥

तत्र वातान्मूर्धशङ्खपृष्ठपार्श्वोरुसन्धिगाः ।
रुजास्स्युर्मुखवैरस्यं स्वनः कर्णे मलग्रहः ॥ ८ ॥

रूक्षारुणत्वमास्याक्षिनखमूत्रपुरीषता ।
आस्यशोषश्शुष्ककासो रोमदन्ताङ्गहर्षणम् ॥ ९ ॥

आगमापगमक्षोभमृदुता देहलोष्मणाम् ।
अव्यवस्था पादसुप्तिर्भ्रमोऽस्वप्नश्च जायते ॥ १० ॥
युगपद्व्याप्तिरङ्गानां प्रलापः कटुकास्यता ।
नासास्यपाकश्शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ॥ ११ ॥
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ।
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ॥ १२ ॥

स्वेदो निश्वासवैगन्ध्यमतितृष्णा च पित्तजे ।
विशेषादरुचिर्जाल्यं स्रोतोरोधोऽल्पवेगता ॥ १३ ॥

प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ।
हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ॥ १४ ॥

अङ्गेषु शीतपिटकास्तन्द्रोदर्दः कफोद्भवे ।
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥ १५ ॥
यथास्वलिङ्गसंसर्गे ज्वरस्संसर्गजोऽपि च ।

शिरोर्तिमूर्च्छावमिदाहमोह-
कण्ठास्यशोषारतिपर्वभेदाः ।
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वं च चलात् सपित्तात् ॥ १६ ॥

तापहान्यरुचिपर्वशिरोरुक्पीनसश्वसनकासविबन्धाः ।
शीतजाल्यतिमिरभ्रमतन्द्रा श्लेष्मवातजनितज्वरलिङ्गम् ॥ १७ ॥

शीतस्तम्भस्वेददाहाव्यवस्थास्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ।
मोहस्तन्द्रा लिप्ततिक्तास्यता च ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ १८ ॥

सर्वजो लक्षणैस्सर्वैः दाहोऽत्र च मुहुर्मुहुः ।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ १९ ॥

सदा वा नैव वा निद्रा मुहुः स्वेदोऽति नैव वा ।
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २० ॥

तत्रापि तारतम्येन भेदाः प्रोक्तास्त्रयोदश ।
सन्धिकस्तान्द्रिकश्चैव रुग्दाहश्चित्तविभ्रमः ॥ २१ ॥

कण्ठकुब्जः कर्णिकश्च जिह्वकोऽन्तक एव च ।
भुग्ननेत्रश्च रक्ताक्षी शीताङ्गो विप्रलापकः ॥ २२ ॥

क्रमात् पृथक् तैश्चत्वारोऽप्यभिन्यासस्तु साम्यतः ।
शोफो देहविवर्णत्वं श्वासोष्णस्वेददीनताः ॥ २३ ॥

क्षणाद् बलक्षयो वातज्वरचिह्नं च सन्धिके ।
जृम्भा मुखे श्लेष्मबन्धो हरिज्जिह्वा सकण्टका ॥ २४ ॥

हिध्मा श्वासोऽतिसारश्च बाधिर्यमरतिर्वमिः ।
पिपासा कर्णकण्डूतिर्ज्वरवेगश्च तान्द्रिके ॥ २५ ॥

रुग्दाहे कण्ठवक्रत्वं नेत्रातिसदनं भ्रमः ।
रुग्दाहातिप्रवृत्तिश्च यत्नसाध्यश्च स स्मृतः ॥ २६ ॥

वैकल्यं मुखवक्रत्वं गीतं हास्यं मदोष्णता ।
कम्पो रुजा प्रलापश्च घोरेऽस्मिंश्चित्तविभ्रमे ॥ २७ ॥

प्रकम्पः कण्ठकुब्जत्वं प्रलापश्शिरसोऽतिरुक् ।
दुस्सहाश्चान्तररुजा दाहमोहौ हनुग्रहः ॥ २८ ॥

ज्वरार्तिश्श्वासरोधश्च कृच्छ्रे स्युः कण्ठकुब्जके ।
देहे गुरुत्वं बाधिर्यं लाला कण्ठप्रकुञ्चनम् ॥ २९ ॥

ज्वरः कम्पोऽतिदाहश्च कर्णाधश्श्वयथुर्व्रणः ।
ज्वरो रुजा श्वासदुःखं कष्टसाध्ये च कर्णिके ॥ ३० ॥

वागप्रवृत्तिर्बाधिर्यं जिह्वावक्रत्वकण्टकाः ।
कासश्वासौ वेदनाश्च जिह्वके सान्निपातिके ॥ ३१ ॥

औष्ण्यं रुजा दाहमोहौ शिरःकम्पोऽरतिर्भ्रमः ।
हिध्मा च सहसा नाशो वेदनाश्चान्तकाभिधे ॥ ३२ ॥

ज्वरातिवेगश्शोफश्च छर्दिर्लोचननिम्नता ।
बलहानिस्स्वरभ्रंशः प्रलेपो भुग्ननेत्रके ॥ ३३ ॥

रक्तप्रवृत्तिर्नासाया हिध्मातिसरणं वमिः ।
ज्वरोऽरतिर्दाहमोहौ वैवर्ण्यं रक्तष्ठीविके ॥ ३४ ॥

शीताङ्गे शैत्यमङ्गेषु श्वासो हिध्मा स्वरक्षयः ।
प्रसेकोत्क्लेशवमनं पार्श्वशूलोऽतिसारता ॥ ३५ ॥

विप्रलापे विसंज्ञत्वं प्रकम्पोऽतिप्रलापता ।
अभिन्यासे मुखं स्निग्धं पूर्वोक्तानेकलक्षणम् ॥ ३६ ॥

आगन्तुरभिघाताद्यैर्हृत्तापाग्निश्रमादिभिः ।
महच्छापाभिचाराद्यैर्ग्रहौषधिविषादिभिः ॥ ३७ ॥

अभिघाताच्छ्रमाद्वायुः प्रायो रक्तं प्रदूषयन् ।
सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ३८ ॥

शापाभिचारजौ घोरावसह्यौ सन्निपातजौ ।
दाहमूर्च्छाभ्रमस्फोटैः प्रत्यहं वर्धते ज्वरः ॥ ३९ ॥

ग्रहादावपि कोपस्स्यात् प्रायशस्सान्निपातिकः ।
रसादिधातुगमलैः पुनः पञ्चविधो ज्वरः ॥ ४० ॥

सन्ततस्सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।
प्रायस्त्रिदोषजास्ते तु तुल्यदूष्यादिवर्धिताः ॥ ४१ ॥

तत्र दोषास्तु बलिनो विशेषेण रसाश्रिताः ।
सन्ततं निष्प्रतिद्वन्द्वं ज्वरं कुर्युस्सुदुस्सहम् ॥ ४२ ॥

मलान् ज्वरोष्मा धातून्वा स शीघ्रं क्षपयेत्ततः ।
रसादिशुद्ध्यशुद्ध्या वा वातपित्तकफैः क्रमात् ॥ ४३ ॥

चतुर्दशाष्टादश च द्वाविंशतिरुदीरिताः ।
वासरास्त्विह मर्यादा मोक्षाय च वधाय च ॥ ४४ ॥

शुद्ध्यशुध्द्यां ज्वरः कालं दीर्घमप्यनुवर्तते ।
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् ॥ ४५ ॥

सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभाक् ।
स्वे स्वे काले प्रवृत्तिस्स्यात् परकाले निवर्तनम् ॥ ४६ ॥

क्षीणे दोषे ज्वरस्सूक्ष्मो रसादिष्वेव लीयते ।
दोषो रक्ताश्रयः प्रायः करोति सततज्वरम् ॥ ४७ ॥

अहोरात्रस्य स द्विस्स्यात् सकृदन्येद्युराश्रितः ।
तस्मिन् मांसवहा नाडीर्मेदोनाडीस्तृतीयके ॥ ४८ ॥

चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ।
अस्थिमज्जोभयगते चतुर्थकविपर्ययः ॥ ४९ ॥

त्रिधा त्र्यहं ज्वरयति दिनमेकं तु मुञ्चति ।
अन्यच्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ॥ ५० ॥

त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा ।
तद्वद्वातकफौ शीतं दाहादिर्दुस्तरस्तयोः ॥ ५१ ॥

मूर्च्छा तृष्णा च शीतादावन्तेऽन्यत्र वमिक्रमौ ।
सामश्च पच्यमानश्च पक्वश्चेति त्रिधा ज्वरः ॥ ५२ ॥

ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।
न प्रवृत्तिर्न विड् जीर्णा न क्षुत्सामज्वराकृतिः ॥ ५३ ॥

ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५४ ॥

जीर्णताऽऽमविपर्यासात्सप्तरात्रं च लङ्घनात् ।

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ५५ ॥

(ज्वरचिकित्सा ।)

गुळदधिनवनीतस्वादुशीताम्लवर्गान्
पृथुकघृतपयोन्नक्षीरसुरायासवातान् ।
शिशिरसलिलसेवाभ्यङ्गपिष्टासवादीन्
बहुविधफलपक्वान् सन्त्यजेयुर्ज्वरार्ताः ॥ ५६ ॥

वमनं कफसंसृष्टे ज्वरेऽन्यत्र विरेचनम् ॥ ५७ ॥
आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत् ।
विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लङ्घनम् ॥ ५८ ॥
कुर्यादादौ विशुध्यर्हे बलं यत्नेन पालयन् ।
दोषानुरोधादेकाहं त्र्यहं षडहमेव वा ॥ ५९ ॥
लङ्घयेद्वा पुनस्सामे दोषे क्षीणेऽग्निरेधते ।
तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे ॥ ६० ॥
तत् कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ।
उद्रिक्तपित्ते दाहार्त्ते क्षतक्षीणेऽतिसारिणि ॥ ६१ ॥
ज्वरे मद्यविषोत्थे च षडङ्गकथितं पिबेत् ।
अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे ॥ ६२ ॥
न पिबेदौषधं तद्धि भूय एवाममावहेत् ।
सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि ॥ ६३ ॥
वातश्लेष्मात्मके स्वेदः प्रशस्तोऽन्यत्र चेष्यते ।
शुद्धवातज्वरागन्तुजीर्णज्वरिषु लङ्घनम् ॥ ६४ ॥
जातलङ्घितलिङ्गन्तु तं पेयाभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्ज्वरो यावन्मृदुर्भवेत् ॥ ६५ ॥
तस्याग्निर्दीप्यते ताभिस्समिद्भिरिव पावकः ।
प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम् ॥ ६६ ॥
सृष्टविड् बहुमूत्रो वा स शुण्ठी माक्षिकां हिमाम् ।
वस्तिपार्श्वशिरश्शूली व्याघ्रीगोक्षुरसाधिताम् ॥ ६७ ॥
पृश्निपर्णीबलाविल्वनागरोत्पलधान्यकैः ।
सिद्धां ज्वरातिसार्यम्लां क्षीरसैन्धवडाडिमैः ॥ ६८ ॥
ह्रस्वेन पञ्चमूलेन हिध्मारुक्श्वासकासवान् ।
पञ्चमूलेन महता कफार्तो यवसाधिताम् ॥ ६९ ॥
विबद्धवर्चास्सयवां पिप्पल्यामलकैः कृताम् ।
एवं पक्वेषु दोषेषु कषायं शमनं पिबेत् ॥ ७० ॥

धान्याकशुण्ठीद्वितयैकभाग-
सिद्धं जलं दाहतृडग्निमान्द्यैः ।
युक्तं निहन्यात्तरुणज्वरं तत्-
कल्कप्रयुक्ताम्बु तथा घनाद्यैः ॥ ७१ ॥

मुस्तया पर्पटं युक्तं शुण्ठ्या दुस्पर्शकेन वा ।
वाळकोशीरपाठा वा तिक्ता मुस्तामृतौषधम् ॥ ७२ ॥

ज्वरघ्ना दीपनाश्चैते कषाया ज्वरनाशनाः ।
तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः ॥ ७३ ॥

क्काथं मुस्तापर्पटाद्यं पिबेद्वा पाचनामृतम् ।
तोयतोयदपूर्वं वा वाते सैन्धवमिश्रितम् ॥ ७४ ॥

पित्ते क्षौद्रं सिता वाथ कफे दद्याच्च पिप्पलीम् ।
दुरालभाद्यममृतापूर्वं पाठादिकं तथा ॥ ७५ ॥

अमृतामलकक्काथं पिबेन्मुस्तोत्पलादिकम् ।
तथा मृद्वीकनागादि त्रयं वा पित्तजे ज्वरे ॥ ७६ ॥

व्याघ्रीदुरालभाद्यं वा पथ्याकट्फलपूर्वकम् ।
पिबेत्तिक्तानिशापूर्वं त्रितयान्यतमं कफे ॥ ७७ ॥

बाल्यादिकाले वातादिज्वरे सर्वत्र चेष्यते ।
चूर्णिता क्वथिता वापि ससिता कटुरोहणी ॥ ७८ ॥

वाते रास्नायुता वा सा कफे वा नागरान्विता ।
ज्वरे संसर्गजेऽप्युक्तान्योगान्युक्त्यैव योजयेत् ॥ ७९ ॥

गोकण्टकबलादर्भास्ससिता वातपित्तजे ।
ज्वरे श्वदंष्ट्रापूर्वं वा पुनर्वातकफोद्भवे ॥ ८० ॥

जङ्घापर्वास्थिशूलाढ्ये स्वेदश्चापि प्रशस्यते ।
दद्यात् पर्पटकाब्दाद्यं तथा पित्तकफोद्भवे ॥ ८१ ॥

कटुकाविजयाद्यं च कृष्णाव्याघ्र्याद्यमेव वा ।
वृषपुष्पछदरसश्शर्करामाक्षिकान्वितः ॥ ८२ ॥

पित्तश्लेष्मज्वरं हन्ति श्वासासृक्कामिलान्वितम् ।
सन्निपातज्वरे पूर्वं कुर्यादाशु कफापहाम् ॥ ८३ ॥

चिकित्सां श्लेष्मणि क्षीणे नाशयेत् पित्तमारुतौ ।
दारुनागरपूर्वं वा बृहत्यादिगणं तथा ॥ ८४ ॥

व्याघ्र्यादिकं गणं दद्यादमृतोत्तरमेव वा ।
छिन्नोद्भवादिकं वापि दोषौषधविभागवित् ॥ ८५ ॥

उद्रिक्तपित्ते दाहार्ते क्षतक्षीणेऽतिसारिणि ।
ज्वरे मद्यविषोत्थे च षडंगकथितं हितम् ॥ ८६ ॥

सन्निपातज्वरे तीक्ष्णं गण्डूषं कवलं तथा ।
दुरालभादिक्वाथान्वा क्रमाद्दद्यात् त्रयोदश ॥ ८७ ॥

त्रयोदशसु भेदेषु सान्निकादिषु सूक्ष्मधीः ।
अथवा सन्निपातेषु सर्वत्रापि प्रकल्पयेत् ॥ ८८ ॥

त्रायन्त्यादिं कणादिं वा जयादिं वा यथोचितम् ।
लोहिताण्डादितैलेन लेपं सन्धिषु कल्पयेत् ॥ ८९ ॥

जिह्वालेपं मूर्धलेपं धूमभञ्जननावने ।
प्रयोजयेद्यथावस्थं भजेच्च परमेश्वरम् ॥ ९० ॥

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोफस्सञ्जायते तेन कश्चिदेव विमुच्यते ॥ ९१ ॥

रक्तावसेचनैश्शीघ्रं सर्पिष्पानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ॥ ९२ ॥

पक्वे विपाट्य मतिमान् व्रणवत् समुपाचरेत् ।
अभिघातादिरोगार्तौ वातपित्तहराः क्रियाः ॥ ९३ ॥

हृत्तापादौ तु मरुतः क्रियान्येषु त्रिदोषहृत् ।
सन्ततादौ तु विषमे चिकित्साथ निगद्यते ॥ ९४ ॥

पटोलकटुकामुस्ताः प्राणदा मधुकैः कृताः ।
त्रिचतुःपञ्चभिः क्वाथाः विषमज्वरनाशनाः ॥ ९५ ॥

क्रमात् कलिङ्गकादींश्च पञ्चभाङ्ग्यादिकस्तथा ।
अश्वत्थवल्कलक्वाथस्सदाहं विषमज्वरम् ॥ ९६ ॥

हन्याच्चिरोत्थमचिरात्सातिसारं विशेषतः ।
मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम् ॥ ९७ ॥

शीतज्वरस्यागमने पाययेत् कोष्णवारिणा ।
जीरकव्योषलशुनं लशुनं वा सनागरम् ॥ ९८ ॥
क्वाथं कटंकटेर्याद्यं विष्णुक्रान्त्यभयाकृतम् ।
शुण्ठीकट्फलजं वापि दद्याच्छीतादिके ज्वरे ॥ ९९ ॥
आरण्यतुलसीमूलपूर्वं वा शीतिकां हरेत् ।
ग्रन्थिकाद्युद्भवं वापि दद्याद्दोषानुरोधतः ॥ १०० ॥
मरिचं चूर्णितं दध्ना दद्याच्छीतज्वरापहम् ।
पित्तज्वरोचितान् क्वाथान् दाहादौ शीतलान् पिबेत् ॥
पद्मरम्भादले शय्या शीता लेपाश्च मारुताः ।
चान्द्रिकाप्रीणनकथा दाहादिज्वरनाशनाः ॥ १०२ ॥
जीर्णज्वरे घृतं दद्यान्महापट्पलसंज्ञितम् ।
कल्याणकं घृतं तद्वदिन्दुकान्तं च योजयेत् ॥ १०३ ॥
सहदेवीरसोद्भूतं तैलं लाक्षाद्यमेव वा ।
अभ्यङ्गे जीर्णजूर्तीनां फेनोशीरादिकं तथा ॥ १०४ ॥
आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ।
जीर्णज्वरस्य क्षीणस्य क्षीरं स्यादमृतोपमम् ॥ १०५ ॥
अश्वत्थाङ्कुरसंसिद्धं क्षीरं पेयमन्तदाधिकम् ।
सहदेवीखलं दद्यान्निरिबिल्वादिकं खलम् ॥ १०६ ॥
स्नानं ज्वरापहजले क्रमात्तमथ बृंहयेत् ॥ १०७ ॥

इति हृदयप्रिये द्वितीयखण्डे ज्वरचिकित्सितं नाम
द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः ।

### (रक्तपित्तनिदानम्)

भृशोष्णतीक्ष्णकट्वम्ललवणादिविदाहिभिः ।
कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ १ ॥
कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्च्छते ।
ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ २ ॥

प्राग्रूपं तस्य नेत्रादौ पीत[illegible]नीलता ।
शिरोगुरुत्वमरुचिश्शीतेच्छा धूमकोऽम्लकः ॥ ३ ॥
कासश्वासौ भ्रमश्छर्दिर्मुखे रक्तामगन्धता ।
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ४ ॥
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्तते ।
ऊर्ध्वं साध्यमधोयाप्यमसाध्यमुभयाश्रयम् ॥ ५ ॥
ऊर्ध्वं कफादधोवाताद्द्वयादुभयायनम् ।
रोमकूपेषु चोद्भूतमसाध्यं हि त्रिदोषजम् ॥ ६ ॥
रक्तदोषानुगमनं सिरास्र इव लक्षयेत् ।

(रक्तपित्तचिकित्सा)

वर्जयेत् पटुकट्वम्लव्यवायं चिन्तनं श्रमम् ॥ ७ ॥
ऊर्ध्वरक्तं विरेकेण वमनेन त्वधोगतम् ।
शमनैर्बृंहणैश्चान्यच्चिकित्सेदाशु युक्तितः ॥ ८ ॥
ऊर्ध्वप्रवृत्ते शमनौ रसौ तिक्तकषायकौ ।
उपवासश्च निश्शुण्ठीषडङ्गोदकपायिनः ॥ ९ ॥
अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ।
फलयुक्तेन वमनं त्रिवृद्युक्तं विरेचनम् ॥ १० ॥
त्रिवृत्समसितां दद्यात् पिप्पलीपादसंयुताम् ।
विरेकायाविपत्तिं वा त्रिवृद्द्विगुणसंयुताम् ॥ ११ ॥
आरग्वधेन धात्र्या वा त्रिवृता पथ्ययाथवा ।
विरेचनं प्रयोक्तव्यं शर्करामाक्षिकोत्तरम् ॥ १२ ॥
शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा ।
वृषस्सद्यो जयत्यस्रं स ह्यस्य परमौषधम् ॥ १३ ॥
दुरालभायाः क्वाथस्तु रक्तपित्तविनाशनः ।
आटरूषकपूर्वो वा द्राक्षाद्यश्चोर्ध्वगे हितः ॥ १४ ॥
वाशाद्यश्चन्दनाद्यश्च शतावर्यादिकं तथा ।
ह्रस्वेन पञ्चमूलेन बलयाभीरुणाथवा ॥ १५ ॥

सिद्धं क्षीरं प्रशमयेत् पित्तासृङ्मूत्रमार्गगम् ।
शङ्खगैरिकयोः कल्कौ धातक्या मधुकस्य वा ॥ १६ ॥

घ्राणात्स्रुतेऽसृजि प्रोक्तं नारीक्षीरेण नावनम् ।
नस्यं डाडिमपुष्पोत्थै रसैर्दूर्वोद्भवैश्च वा ॥ १७ ॥

लिह्याच्चन्दनकल्कं च नवनीतेन संयुतम् ।
वटाङ्कुरं क्षीरपक्वं पिष्टं वा नवनीतवत् ॥ १८ ॥

दूर्वारसं सधारोष्णं क्षीरं वाशाशृतं पिबेत् ।
पारन्तीपुष्पचूर्णं च लिह्याद्वा मधुमिश्रितम् ॥ १९ ॥

पेयं वृषघृतं चापि घृतं नीलोत्पलादिकम् ।
मोदकत्वक्कृतं तैलं यथावस्थं प्रयोजयेत् ॥ २० ॥

शालिषष्टिकनीवारकोरदूषप्रियङ्गवः ।
भक्ष्याः पित्तासृजि हिमैर्लेपाभ्यङ्गश्च शस्यते ॥ २१ ॥

क्वाथपेयादिकं रक्ते क्षीरेभाजेन कल्पयेत् ।
नित्यं रक्तप्रशान्त्यर्थं गणेशं च प्रपूजयेत् ॥ २२ ॥

(असृग्दरनिदानम्)

शोकोपवासादतिमैथुनाच्च विदाहिभिश्चान्नमतीव दुष्टम् ।
प्रवर्तते योन्ययनादकालेऽप्यसृग्दरं तं प्रदरं च विद्यात् ॥२३॥

वातात्सशूलं रुधिरं पित्तान्नीलं ज्वरान्वितम् ।
कफाच्छ्वेतं त्रिलिङ्गं तु त्याज्यं मूर्च्छाज्वरान्वितम् ॥ २४ ॥

(असृग्दरचिकित्सा)

तच्छान्त्यै पयसः पानं शृतस्य ससितामधु ।
नालिकेरप्रसूनैर्वा जपया बलयापि वा ॥ २५ ॥

प्रसाधितमिदं वारि वारयेत् प्रदराद्भयम् ।
खदिराद्यं पिबेत्क्वाथं समधुक्षीरिवत्कजम् ॥ २६ ॥

तद्वन्मुस्तामृताद्यं वा चूर्णं सौवर्चलादिकम् ।
धात्र्यादिकं घृतं माषघृतं जम्बूघृतं पिबेत् ॥ २७ ॥

पारन्तीजपयोः पुष्पस्वरसं मधुना पिबेत् ।
श्वेतदेवीरसं दद्यात् केरीपुष्परसं तथा ॥ २८ ॥
तिलं रात्रौ जले मग्नं क्षीरे पिष्ट्वा पिबेत् प्रगे ।
चूर्णं सरसिजाद्यं वा तीक्ष्णोष्णादि च वर्जयेत् ॥ २९ ॥

(अस्थिस्रावचिकित्सा)

अस्थिस्रावे निदानं स्यादसृग्धरानिरूपितम् ।
तत्र वातेऽतिशूलं स्यात् पित्ते पीतं सशोणितम् ॥ ३० ॥
कफे घनं तन्तुमच्च मिश्रं स्याद्दोषमिश्रणात् ।
मुसलिं मुस्तया पिष्ट्वा धारोष्णेन पिबेत् प्रगे ॥ ३१ ॥
बलामुसल्योः पेयां च सक्षीरां पाययेत् प्रगे ।
मुसल्याद्युद्भवं क्वाथं पारन्तीपुष्पजं खळम् ॥ ३२ ॥
मत्स्याक्ष्युत्थं खळं वाद्यादभ्यज्याच्चानुवासरम् ।
असृग्दरोदितं सर्वमस्थिस्रावेऽपि शस्यते ॥ ३३ ॥

(कासनिदानम्)

पञ्चकासाः स्मृता वातपित्तश्लेष्मक्षतक्षयात् ।
क्षयायोपेक्षितास्सर्वे बलिनश्चोत्तरोत्तरम् ॥ ३४ ॥
तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ।
शूकपूर्णाभकण्ठत्वं तत्राधो विहतोऽनिलः ॥ ३५ ॥
ऊर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसजन् ।
शिरःस्रोतांसि संपूर्य याति वक्त्रात्सघुर्घुरम् ॥ ३६ ॥
कुपितो वातलैर्वायुश्शुष्कोरःकण्ठवक्त्रताम् ।
हृत्पार्श्वोरश्शिरश्शूलमोहक्षोभस्वरक्षयान् ॥ ३७ ॥
करोति शुष्कं कासं च शाम्येत् कृच्छ्रात्त्यजन् कफम् ।
पित्तात् पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥ ३८ ॥
पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमकोऽम्लकः ।
प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ ३९ ॥

कफादुरोऽल्परुङ्मूर्ध्नि हृदयं स्तिमितं गुरु ।
कण्ठोपलेपः सदनं पीनसच्छर्द्यरोचकाः ॥ ४० ॥

रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम् ।
युद्धाद्यैस्साहसैस्तैस्तैः सेवितैरयथाबलम् ॥ ४१ ॥

उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली ।
कुपितः कुरुते कासं कफं तेन सशोणितम् ॥ ४२ ॥

शुष्कं बहु विवर्णं च ष्ठीवेद्रक्षोगदार्तिमान् ।
पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ॥ ४३ ॥

पार्श्वशूली च तेनास्य रुचिवह्निबलक्षयः ।
क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः ॥ ४४ ॥

वायुप्रधाना दोषास्तु कुपिता यक्ष्महेतुभिः ।
कुर्वन्ति कासं क्षयिणः ष्ठीवेत्तेन कफं मुहुः ॥ ४५ ॥

विस्रं पूयोपमं पूति बहुवर्णं च दुर्बलः ।
लुञ्च्येते इव पार्श्वे च हृदयं पततीव च ॥ ४६ ॥

अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ।
स्निग्धप्रसन्नवक्त्रत्वं क्षयोक्ताखिललक्षणम् ॥ ४७ ॥

कासौ क्षतक्षयोद्भूतावसाध्यौ दुर्बलस्य हि ।
साध्यावन्यस्य सानाध्यात्साध्या दोषैः पृथक् त्रयः ॥

मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च ।
कासाच्छ्वासक्षयच्छार्दिस्वरसादादयो गदाः ॥ ४९ ॥

भवन्त्युपेक्षिता यस्मात्तस्मात्तं त्वरया जयेत् ।

(कासचिकित्सा)

केवलानिलजं कासं स्नेहैरादावुपाचरेत् ॥ ५० ॥

वातघ्नैः स्वेदनाभ्यङ्गैः पेयायूपरसादिभिः ।
सपित्तं तु घृतैरौर्ध्वभक्तिकैः पयसा पुनः ॥ ५१ ॥

जयेच्च सकफं स्नेहविरेकाद्यैः कफापहैः ।
गुळूच्यादिघृतं वाते क्षाराद्यं वापि पाययेत् ॥ ५२ ॥

विदार्याद्यं च रास्नाद्यं यथावस्थं प्रकल्पयेत् ।
दशमूलरसे पेयां पञ्चकोलगुळान्विताम् ॥ ५३ ॥

पिबेत् समतिलां पेयां क्षैरेयीं वा ससैन्धवाम् ।
शर्कराद्यैर्घृतं पित्ते चूर्णं क्वाथं च तैः पिबेत् ॥ ५४ ॥

लेहः पित्ते सिताद्राक्षाधात्रीक्षौद्रहिमोत्पलैः ।
सकफे साब्दमरिचः सघृतस्सानिले हितः ॥ ५५ ॥

द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले ।
क्षीरं वा तेन पेयां वा पिबेत् समधुशर्कराम् ॥ ५६ ॥

कफकासी पिबेदार्द्रां सुरकाष्ठात् प्रदीपिताम् ।
स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ॥ ५७ ॥

मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ।
पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ॥ ५८ ॥

कासघ्नस्य च वाशाया भाङ्ग्याश्च सुरसस्य च ।
उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ॥ ५९ ॥

इक्ष्वाळिकाविसग्रन्थिपद्मकेसरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ ६० ॥

गुलिकां च मधूकाद्यां कूश्माण्डकरसायनम् ।
रसायनमथागस्त्यमाजं क्षीरं च शीलयेत् ॥ ६१ ॥

विधिश्च यक्ष्मपित्तास्रविहितश्शस्यते क्षते ।
क्षतकासहितं सर्वं क्षयकासेऽपि योजयेत् ॥ ६२ ॥

शम्याकेन तृघृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन वा ॥ ६३ ॥

सर्पिस्सिद्धं पिबेद्युक्त्या क्षीणदेहो विशुद्धये ।
कुण्डलीमूलमरिचपथ्यासिद्धं जलं पिबेत् ॥ ६४ ॥

पञ्चकासाग्निसदनश्वासहृत्पार्श्वपीडितः ।
वृषौषधाभ्यां वृषपिप्पलीभ्यां वृषोषणाभ्यां च कृताः कषायाः ।
क्रमेण वातादिसमुद्भवेषु कासेषु भैषज्यमुदाहरन्ति ॥ ६५ ॥

दशभिर्मरिचैः पथ्यामेकां कोष्णोदके पिबेत् ।
हरीतक्यादिगुलिकां कर्पूराद्यं च चूर्णितम् ॥ ६६ ॥
तालीसाद्यं मोदकं च लिह्याद्वा पद्मकादिकम् ।
कफेन रुद्धहृत्कोष्ठो कासी धूमानिमान् पिबेत् ॥ ६७ ॥
मनश्शिलापलाशाश्वगन्धात्वक्षीरिनागरैः ।
वर्तिं कृत्वा पिबेत् धूमं जीवनीयानुपः क्षती ॥ ६८ ॥
पिष्ट्वा मनश्शिलां तुल्यामार्द्रया वटभृङ्गया ।
ससर्पिष्कं पिबेत् धूमं पूर्ववत् क्षतकासवान् ॥ ६९ ॥
मनश्शिलाद्यं धूमं च सर्वकासहरं पिबेत् ।
कार्पासास्थ्यादिपद्मस्थाश्चत्वारो वर्तयो हिताः ।
निर्गुण्डीरसजं तैलं तेकराजोद्भवं पिबेत् ॥ ७० ॥
अष्टपत्रोद्भवं चापि पुनरभ्यङ्गकर्मणि ।
दद्याद् बलाश्वगन्धाद्यं तैलं प्रह्लादनाभिधम् ॥ ७१ ॥

इति हृदयप्रिये द्वितीयखण्डे रक्तपित्तप्रदरास्थिस्रावकासचिकित्सितं नाम तृतीयोऽध्यायः ॥

---

अथ चतुर्थोऽध्यायः ।

(श्वासहिध्मानिदानम्)

कासवृध्या भवेच्छ्वासः ज्वरपाण्डूदरादिभिः ।
वातादिकोपनैर्वापि मर्मघाताद्विषादपि ॥ १ ॥
क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः ।
कफोपरुद्धगमनः पवनो विष्वगास्थितः ॥ २ ॥
प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ।
उरस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ ३ ॥
प्राग्रूपं प्राणवैगुण्यमानाहं पार्श्वहृद्रुजाः ।
तत्रायासोद्भवो क्षुद्रस्त्वयं संशमनो मरुत् ॥ ४ ॥
प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।
शिरोग्रीवामुरःपार्श्वे पीडयन श्वासमीरयन् ॥ ५ ॥

सनादं तीव्रवेगं च पीनसारुचितृड्युतः ।
प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ॥ ६ ॥

कृच्छ्राच्छयानश्श्वसिति निषण्णस्स्वास्थ्यमृच्छति ।
शीतैर्वातैः श्लेष्मळैश्च वर्धते तमकस्तु सः ॥ ७ ॥

स एव ज्वरमूर्च्छावान् शाम्येत् प्रतमको हिमैः ।
छिन्नाच्छ्वसिति विच्छिन्नं मर्मभेदरुजार्दितः ॥ ८ ॥

सस्वेदमूर्च्छस्सानाहो बस्तिदाहनिरोधवान् ।
अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः ॥ ९ ॥

शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः ।
महता तु महानादो दीर्घं श्वसिति नष्टधीः ॥ १० ॥

निश्चेष्टो बद्धविण्मूत्रो विभ्रान्तनयनाननः ।
वक्षस्समाक्षिपन् शुष्ककण्ठो मुह्यन् पुनः पुनः ॥ ११ ॥

दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोताश्चोर्ध्वदृङ्मर्मपीडितः ॥ १२ ॥

एते सिध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम् ।
श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रयाः ॥ १३ ॥

हिध्मा भक्तोद्भवा क्षुद्रा यमळा महतीति च ।
गम्भीरा चात्र रूक्षाद्यैरन्नैर्वातोद्भवान्नजा ॥ १४ ॥

सात्म्यान्नपानैश्शाम्येच्च श्रमाज्जत्रूद्भवा पुनः ।
क्षुद्रा श्रमादेधते च भुक्ते याति च मार्दवम् ॥ १५ ॥

यमळा यमळैर्वेगैश्चिरादायाति वर्धते ।
अन्ने जीर्यति जीर्णे च शिरो ग्रीवां च कम्पयन् ॥ १६ ॥

आध्मानच्छर्द्यतीसारनेत्रविप्लुतिजृम्भिणः ।
महती स्यान्महावेगा महाशब्दा महाबला ॥ १७ ॥

ध्वस्तभ्रूशङ्खयुग्मस्य सास्रविप्लुतचक्षुषः ।
वाग्देहस्तम्भनं तत्र मर्मपीडा विसंज्ञिता ॥ १८ ॥

पृष्ठतो नमनं चैव गम्भीरा स्यात्तथापि तु ।
गम्भीरेणानुनादेन नाभिपक्वाशयोद्भवा ॥ १९ ॥

अङ्गप्रसारणं जृम्भां कुर्वती तासु साधयेत् ।
आद्ये द्वे वर्जयेदन्त्ये सर्वलिङ्गां च वेगिनीम् ॥ २० ॥
हिध्माश्वासौ नृणां प्रायो मृत्युकाले कृतालयौ ।

(श्वासहिध्माचिकित्सा)

अथ कुर्यात्तयोराशु चिकित्सां साधु साध्ययोः ॥ २१ ॥
हेत्वादीनां समानत्वाच्चिकित्सायाश्च तुल्यता ।
स्निग्धं लवणतैलेन पूर्वं स्वेदैरुपाचरेत् ॥ २२ ॥
स्रोतस्सुग्रथितं स्वेदात् द्रुतं कोष्ठगतं कफम् ।
निर्हरेच्च सुखं तेन चरत्यविहतोऽनिलः ॥ २३ ॥
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।
तस्मात्तन्मार्गशुध्यर्थमूर्ध्वाधश्शोधनं हितम् ॥ २४ ॥
अशान्तौ शुद्धदेहस्य धूमैर्लीनं मलं हरेत् ।
मधूच्छिष्टं सर्जरसं शृङ्गं वागुरुचन्दनम् ॥ २५ ॥
गुल्गुलुं वा मनोह्वां वा घृतैर्धूमाय कल्पयेत् ।
हरिद्रादिकवर्तिं वा स्वेदायोग्यमपि क्षणम् ॥ २६ ॥
स्वेदयेत् ससिताक्षीरसुखोष्णस्नेहसेचनैः ।
उत्कारिकोपनाहैश्च कषायाद्यांश्च पाययेत् ॥ २७ ॥
क्वाथं भार्ङ्गीकणाद्यं च बलाजीरकपूर्वकम् ।
अभयाव्योषपूर्वं वा दशमूलादिकं तथा ॥ २८ ॥
शुण्ठीलशुननिर्यूहं हिङ्गुसैन्धवचूर्णितम् ।
हिध्माश्वासप्रतिश्यायशूलवातामयी पिबेत् ॥ २९ ॥
पिप्पल्यादिकषायं च दशमूलादिकं पयः ।
चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवां मषीम् ॥ ३० ॥
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्बणः ।
अर्धांशेन पिबेत् सर्पिः क्षारेण पटुनाऽथवा ॥ ३१ ॥
अजाविण्मूत्रमाघ्राय हिध्मावान् सुखमाप्नुयात् ।
अपामार्गपलाच्चूर्णं लिह्याद्वा मधुनाऽथवा ॥ ३२ ॥

जीवन्त्याद्युद्भवं चूर्णं द्रोणपुष्पयुतं पयः ।
जीरकं द्रोणपुष्पी च बिल्वमूलं च तैः शृतम् ॥ ३३ ॥

क्षीरं सितायुतं द्राक्षाद्विकायन्तु मुहुर्मुहुः ।
बलात्रयादिक्वाथं वा श्वासहिध्मादिनाशनम् ॥ ३४ ॥

कर्शनं बृंहणं चापि विदधीतान्तरान्तरा ।
जेतुं बलासं वातं च श्वासहिध्माप्रपीडिते ॥ ३५ ॥

इति हृदयप्रिये द्वितीयखण्डे श्वासहिध्माचिकित्सितं नाम
चतुर्थोऽध्यायः ॥

---

अथ पञ्चमोऽध्यायः ।

(राजयक्ष्मनिदानम्)

अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजवद्राजयक्ष्मा स्याद्देहभेषजहानिकृत् ॥ १ ॥

साहसं वेगसंरोधश्शुक्रौजःस्नेहसंक्षयः ।
अन्नपानविधिस्त्यागश्चत्वारस्तस्य हेतवः ॥ २ ॥

तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।
शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥ ३ ॥

मुखानि स्रोतसां रुध्वा तथैवातिविवृत्य वा ।
सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद् गदान् ॥ ४ ॥

रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।
प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ५ ॥

हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।
पादशोफोऽक्षिशुक्लत्वं नखरोमाभिवर्धनम् ॥ ६ ॥

स्त्रीसक्तिश्चाथ जायन्ते रूपाण्येकादशास्य च ।
पीनसश्वासकासांसमूर्धस्वररुजोऽरुचिः ॥ ७ ॥

ऊर्ध्वं स्रंसो विशश्शोषो वाधश्छर्दिश्च कोष्ठगे ।
तिर्यक्स्थे पार्श्वरुग्दोपे सन्धिगे भवति ज्वरः ॥ ८ ॥

तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम् ।
कण्ठोध्वंसस्स्वरभ्रंशः पित्तात् पादास्यपाणिषु ॥ ९ ॥

दाहोऽतिसारस्तृड्छर्दिर्मुखगन्धो ज्वरो मदः।
कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम् ॥ १० ॥
प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता।
अल्पवह्नितया तस्य धातूष्माल्पतयापिच ॥ ११ ॥
पच्यते कोष्ठ एवान्नं नैवालं धातुपुष्टये।
अवष्टब्धस्ससशकृता केवलं वर्तते क्षयी ॥ १२ ॥
लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम्।
वर्जयेत्साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ १३ ॥

(राजयक्ष्मचिकित्सा)

बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम्।
ऊर्ध्वाधो यक्ष्मिणः कुर्यात् सस्नेहं यन्न कर्शनम् ॥ १४ ॥
पयसा फलयुक्तेन मधुरेण रसेन वा।
सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ १५ ॥
वमेद्विरेचनं दद्यात्त्रिवृच्छयामानृपद्रुमान्।
शर्करामधुसर्पिर्भिः पयसा चाथ बृंहणम् ॥ १६ ॥
लघु हृद्यं दीपनं च षाष्टिकाद्यं प्रकल्पयेत्।
अन्नपानं तथा क्षीरमाजं मांसं च शोपजित् ॥ १७ ॥
कणातामलकीवह्निसिद्धः क्वाथो घृतान्वितः।
वह्निकृत् पीनसहरः क्षतक्षयहरः परम् ॥ १८ ॥
क्वाथं पुनर्नवाद्यं वा पिबेदेलादिकं तथा।
सपिप्पलीकं सयवं सकुलस्थं सनागरम् ॥ १९ ॥
सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत्।
तेन षड् विनिवर्तन्ते विकाराः पीनसादयः ॥ २० ॥
कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान्।
मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भवः ॥ २१ ॥
शर्करामधुसंयुक्तं नवनीतं लिहेत् क्षयी।
क्षीराशी लभते पुष्टिमतुल्यं वाज्यमाक्षिके ॥ २२ ॥

दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तच्छ्वासादिहरं परम् ॥ २३ ॥

पञ्चभिः पञ्चमूलैर्वा सिद्धं क्षीरं पिबेत् क्षयी ।
सर्पिश्च तत्पयोजातं सर्पिस्तत्क्वाथसाधितम् ॥ २४ ॥

पिबेदेलादिकं सर्पिरश्वगन्धादिकं तथा ।
लिह्याच्छुण्ठ्यादिकं चूर्णं हितं चास्य क्षयोदितम् ॥ २५ ॥

पीतं नागबलासर्पिरागस्त्यं वा रसायनम् ।
अजादिमांसं तद्युक्तविविधौषधसंस्कृतम् ॥ २६ ॥

सर्पिश्च शीलयन्युक्त्या जयेद्धीरश्चिरात् क्षयम् ।
क्षतोक्ततैलैरभ्यक्तं जीवन्त्याद्यैस्सुचूर्णितैः ॥ २७ ॥

उद्वर्त्य जीवनीयादिसिद्धैः स्नायात् सुखोदकैः ।

(स्वरसादनिदानम्)

दोषैर्व्यस्तैस्समस्तैश्च क्षयात् षष्ठश्च मेदसा ॥ २८ ॥

स्वरसादो भवेत्तत्र क्षामोरूक्षश्चलस्स्वरः ।
शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात् ॥ २९ ॥

पित्तात्तालुगळे दाहः शोष उक्तावसूयनम् ।
लिम्पन्निव कफात् कण्ठं मन्दः खुरखुरायते ॥ ३० ॥

स्वरो विबद्धस्सर्वैस्तु सर्वलिङ्गः क्षयात् कषेत् ।
धूमायतीव चात्यर्थं मेदसा श्लेष्मलक्षणः ॥ ३१ ॥

कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्यं च वर्जयेत् ।

(स्वरसादचिकित्सा)

स्वरसादे विशेषेण नस्यधूमादि योजयेत् ॥ ३२ ॥

तत्रापि वातजे कोष्णं पिबेदौत्तरभक्तिकम् ।
कासमर्दकवार्ताकीमार्कवस्वरसे घृतम् ॥ ३३ ॥

साधितं कासजित् स्वर्यं सिद्धमार्तगळेन वा ।
तैलं च मधुकद्राक्षापिप्पलीकृमिजित्फलैः ॥ ३४ ॥

हंसपद्याश्च मूलेन पक्वं नस्तो निषेचयेत् ।
क्षीरवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकम् ॥ ३५ ॥
पित्तोद्भवे हितं सर्पिः शृतशीतं पयोऽपि च ।
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ॥ ३६ ॥
साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परम् ।
द्राक्षाकृष्णावृषैरम्बु पित्तजस्वरसादनुत् ॥ ३७ ॥
पिबेत् कटूनि मूत्रेण कफजे रूक्षभोजनः ।
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ॥ ३८ ॥
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा ।
त्वगेलापिप्पली क्षीरिशर्कराद्विगुणाः क्रमात् ॥ ३९ ॥
चूर्णिता भक्षिताः क्षौद्रसर्पिषा वावलेहिताः ।
स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥ ४० ॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ।
सर्वजे क्षयजे वापि प्रत्याख्यायाचरेत् क्रियाम् ॥ ४१ ॥
फलत्रयादिभिः क्वाथः सर्वजस्वरसादजित् ।
श्वासकासोदिताः सर्वाः क्रियाश्शस्ताः स्वरक्षये ॥ ४२ ॥
स्निग्धाननुभयतश्शुद्धान् नस्यधूमादि योजयेत् ।

(अरोचकनिदानम्)

अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रितैः ॥ ४३ ॥
सन्निपातेन मनसस्सन्तापेन च पञ्चमः ।
कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ॥ ४४ ॥
सर्वोत्थे विरसं शोकक्रोधादिषु यथामलम् ।

(अरोचकचिकित्सा)

विचित्रमन्नमरुचौ हितैरुपहितं हितम् ॥ ४५ ॥
बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ।
कालद्वये दन्तशौचं कवलं धूमनावनम् ॥ ४६ ॥

छर्दयेद्वा वचांभोभिः पित्ते तु गुळवारिभिः ।
तालीसाद्यं तत्र चूर्णं सकर्पूरसितोपलाः ॥ ४७ ॥
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम् ।
आम्रपल्लववृन्तादिक्वाथोऽरोचकनाशनः ॥ ४८ ॥
सैन्धवाढ्यं दधि हितं वातारोचकपीडिते ।
पयस्सशर्करं पित्ते तक्रं व्योषयुतं कफे ॥ ४९ ॥
कर्पूरादिकमेलाद्यं यवान्याद्यं च भक्षयेत् ।
क्षाळनैः कबळैश्चापि यथाकालमुपाचरेत् ॥ ५० ॥

इति हृदयप्रिये द्वितीयखण्डे यक्ष्मास्वरसादारोचकचिकित्सितं नाम पञ्चमोऽध्यायः ॥

---

अथ षष्ठोऽध्यायः ।

(छर्दिनिदानम्)

छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पञ्चमी ।
उदानो विकृतो वायुः सर्वानप्यूर्ध्वमस्यति ॥ १ ॥
तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः ।
नाभिं पृष्ठं रुजन् वायुः पार्श्वे चाहारमुत्क्षिपेत् ॥ २ ॥
ततोऽल्पाल्पं कषायं च वेगोद्गारयुतं वमेत् ।
पित्तात् क्षारोदकनिभं सास्रं हरितपीतकम् ॥ ३ ॥
कफाच्छ्वेतं घनं शीतं श्लेष्मतन्तुगवाक्षितम् ।
सर्वलिङ्गं मलैस्सर्वै रिष्टोक्ता या च तां त्यजेत् ॥ ४ ॥
पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ।
तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ॥ ५ ॥

(छर्दिचिकित्सा)

आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः ।
लङ्घनं प्रागृते वायोर्यो वमेत् प्रततं बहु ॥ ६ ॥
बहुदोषो बली तन्तु वामयेच्च पुनः क्रमात् ।
द्राक्षाम्बुभिर्वा क्षीरैर्वा हृद्यैर्मद्यैर्विरेचयेत् ॥ ७ ॥

उपवासः प्रियं सात्म्यमन्नं लघु च शस्यते ।
लेह्या रसाः कवलिका रागषाडवपानकाः ॥ ८ ॥
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ।
स्नानं सुगन्धिवस्त्राणि हितान्यत्र हितानि च ॥ ९ ॥
हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम् ।
स्निग्धं च भोजनं शुण्ठीदधिदाडिमसाधितम् ॥ १० ॥
कोष्णं सलवणं चात्र हितं स्नेहविरेचनम् ।
महौषधादिकं दद्यादजाजीधान्यकादिकम् ॥ ११ ॥
पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ।
पिबेन्मन्थं यवागूं वा लाजैस्समधुशर्करम् ॥ १२ ॥
मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ।
धात्रीरसेन शीतं वा तथा मुद्गदलाम्बु वा ॥ १३ ॥
क्वाथं जम्ब्वादिकं वान्यद्रक्तपित्तोदितं हितम् ।
कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः ॥ १४ ॥
युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ।
लीढं मनश्शिलाकृष्णामरिचं वीजपूरकात् ॥ १५ ॥
स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत् ।
सन्निपाते तथा मिश्रैरेतैश्छर्दिं निवारयेत् ॥ १६ ॥
हृद्यैर्मनोज्ञैर्मधुरैः छर्दिं द्विष्टार्थजां जयेत् ।
क्वाथः केवलविल्वोत्थश्शुण्ठीविल्वोद्भवोऽपि वा ॥ १७ ॥
लाजशुण्ठीविल्वभवः प्रसेकच्छार्दिनाशनः ।
विल्वधान्यादिकं क्वाथं कार्पासास्थ्यादिचूर्णितम् ॥ १८ ॥
लेहं विल्वादिजं वापि लिह्याद्वैलादिचूर्णितम् ।
एलाकल्कन्तु धान्याम्लसंयुक्तं नस्यमुत्तमम् ॥ १९ ॥
चन्दनागरुलाजानां धूमं च सघृतं पिबेत् ।
गर्भामकृमिजातायां छर्द्यां दोषानुरोधतः ॥ २० ॥

चिकित्सेत् कृमिजां विद्यात् कृमिहृद्रोगलक्षणैः ।

(हृद्रोगनिदानम्)

वातादिभिः पृथक् सर्वैः कृमिदोषाच्च पञ्चधा ॥ २१ ॥

हृद्रोगस्तत्रवातेन हृच्छून्यं विविधार्तिमत् ।
श्रमश्शब्दासहिष्णुत्वं श्वासरोधोऽल्पनिद्रता ॥ २२ ॥

पित्तात्तृष्णाम्लकः स्वेदो धूमकः पीतता ज्वरः ।
श्लेष्मणा साश्मगर्भाभं हृदयं ष्ठीवनारुचीः ॥ २३ ॥

सर्वलिङ्गं त्रिभिर्दोषैः कृमिभिः श्याननेत्रता ।
तमःप्रवेशोहृल्लासश्शोफः कण्डूः कफस्रुतिः ॥ २४ ॥

हृदयं प्रततं चात्र क्रकचेनेव दार्यते ।
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ॥ २५ ॥

(हृद्रोगचिकित्सा)

हृद्रोगे वातिके वान्तः पिप्पलीसितसर्षपैः ।
पिबेत् प्रातर्यवक्षारं सर्पींषि लवणानि वा ॥ २६ ॥

त्रिभिः स्नेहैः पिबेद्वापि डाडिमाद्यं च चूर्णितम् ।
विल्वादिकं हितं सर्पिस्तथा सौवर्चलादिकम् ॥ २७ ॥

स्निग्धोष्णैः पानभोज्यैश्च हृद्रोगं वातिकं जयेत् ।
सुकुमारं बलातैलमैरण्डं सपयोऽपि वा ॥ २८ ॥

पैत्ते द्राक्षेक्षुनिर्यासासिताक्षौद्रपरूषकैः ।
युक्तो विरेको हृद्यस्स्यात् क्रमश्शुद्धे च पित्तहा ॥ २९ ॥

लघुशीताशनो द्राक्षापरूषकरसं पिबेत् ।
क्वाथं धान्याकशुण्ठ्याद्यं प्रियङ्ग्वाद्यं तथा पिबेत् ॥ ३० ॥

क्षतपित्तज्वरोक्तं च बाह्यान्तः परिमार्जनम् ।
हृद्रोगे कफजे वान्तः क्षाराम्बुलवणोदकैः ॥ ३१ ॥

वचानिम्बाम्भसा वापि कुलस्थयवभोजनः ।
लिह्याद्वचादिचूर्णं वा पुष्कराह्वादिकं तथा ॥ ३२ ॥

श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान् पिबेत् ।
कृमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ॥ ३३ ॥
दध्युपेतं त्र्यहं पश्चात् साधु चैनं विरेचयेत् ।
कृमिघ्नमौषधं सर्वं दद्यादपि यथोचितम् ॥ ३४ ॥
वल्लभाख्यं घृतं दद्यात्तैलं धान्वन्तरं तथा ।
क्वाथं धान्याकशुण्ठ्याद्यं दशमूलादिकं तथा ॥ ३५ ॥
सौवर्चलादिचूर्णं च यथाकालं प्रयोजयेत् ।

(तृष्णानिदानम्)

वातात् पित्तात् कफात्तृष्णा सन्निपाताद्रसक्षयात् ॥ ३६ ॥
षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणम् ।
सर्वासु तत्प्रकोपो हि सौम्यधातुविशोषणात् ॥ ३७ ॥
सर्वदेहभ्रमोत्कम्पतापहृद्दाहमोहकृत् ।
जिह्वामूलगलक्लोमतालुतोयवहास्सिराः ॥ ३८ ॥
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ।
मुखशोषो जलातृप्तिरन्नद्वेषस्स्वरक्षयः ॥ ३९ ॥
कण्ठोष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रामणं क्लमः ।
मारुतादास्यवैरस्यं शङ्खतोदः शिरोभ्रमः ॥ ४० ॥
शीताम्बुपानाद्वृद्धिश्च श्रुतिनिद्राबलक्षयः ।
पित्तान्मूर्च्छास्यतिक्तत्वं शोषो दाहोऽतिधूमकः ॥ ४१ ॥
कफात्सशूककण्ठत्वमाध्मानछर्द्यरोचकाः ।
निद्रा मधुरवक्त्रत्वं सर्वैः स्यात् सर्वलक्षणा ॥ ४२ ॥
तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ।
शोपमोहज्वराद्यन्यरोगोत्थातूपसर्गजा ॥ ४३ ॥

(तृष्णाचिकित्सा)

तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ।
सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनम् ॥ ४४ ॥
दिव्याम्बु शीतं सक्षौद्रं तद्वद् भौमं च तद्गुणम् ।
निर्वापितं तप्तलोष्टकपालसिकतादिभिः ॥ ४५ ॥

सलाजशर्करं ह्रस्वपञ्चमूलजलं पिबेत् ।
शीतेन शीतवीर्यैश्च द्रव्यैस्सिद्धेन भोजनम् ॥ ४६ ॥

हिमाम्बुपरिषिक्तस्य पयसा ससितामधु ।
मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ॥ ४७ ॥

नस्यं क्षीरं घृतं सिद्धं शीतैरिक्षो रसैस्तथा ।
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥ ४८ ॥

महासरिद्ध्रदादीनां दर्शनश्रवणानि च ।
तृष्णायां पवनोत्थायां सगुळं दधि शस्यते ॥ ४९ ॥

बलांशुमतिमृद्वीकाशारिवापिप्पलीजलम् ।
पुनर्नवादिक्वाथं वा विदार्याद्युद्भवं पिबेत् ॥ ५० ॥

पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः ।
तत्क्वाथो वा हितश्शीतश्शारिवादिगणाम्बु वा ॥ ५१ ।

द्राक्षाद्यं पञ्चसाराम्बु धान्याकादिकमेव वा ।
कफोद्भवायां वमनं निम्बप्रसववारिणा ॥ ५२ ॥

बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम् ।
जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम् ॥ ५३ ॥

पञ्चकोलाम्ब्वतिविषाशुण्ठीभ्यां वा कफान्वये ।
क्वाथं धान्याकधात्र्याद्यं सन्निपातोद्भवां तृषम् ॥ ५४ ।

जयेद्विमिश्रितैरुक्तैः कुस्तुम्बर्यादि वा पिबेत् ।
गूळूच्यादिगणक्वाथं दद्याद्वा शारिवादिकम् ॥ ५५ ॥

क्षयजायां क्षयहितं छागं क्षीरं रसं तथा ।
तत्तद्रोगोपसृष्टायां दद्यात्तदनुरोधतः ॥ ५६ ॥

तक्रं च जीवनीयेन सिद्धं शीतं च माहिषम् ।
नस्यार्थं मधुकं द्राक्षा स्तन्यमिक्षुरसं हितम् ॥ ५७ ॥

चन्दनाद्यं तथा तैलं तृष्णार्तस्य प्रकल्पयेत् ॥ ५७½ ॥

इति हृदयप्रिये द्वितीयखण्डे छर्दिहृद्रोगतृष्णाचिकित्सितं नाम
षष्ठोऽध्यायः ॥

---

अथ सप्तमोऽध्यायः।

(मदात्ययनिदानम्)

तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।
विकाषि विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ १ ॥
तीक्ष्णादयो विषेऽपि स्युरुत्कर्षात्ते हि मृत्युदाः ।
तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ॥ २ ॥
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ।
अतस्त्यजन्ति सन्तस्तद् बुद्धिर्हि सकलेष्टदा ॥ ३ ॥
नातिमाद्यन्ति बलिनो भुक्तास्नेहवयोयुताः ।
मेदःकफाधिकाः स्निग्धा मद्यनित्या दृढाग्नयः ॥ ४ ॥
विपर्ययेऽतिमाद्यन्ति चत्वारस्स्युर्मदात्ययाः ।
दोषैः पृथक् समस्तैश्च मोहस्सामान्यलक्षणम् ॥ ५ ॥
विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात् ।
पित्ताद्दाहज्वरस्वेदमोहातिसारतृड्भ्रमाः ॥ ६ ॥
श्लेष्मणा छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम् ।
सर्वजे सर्वलिङ्गत्वं वक्ष्ये तेषां चिकित्सितम् ॥ ७ ॥

(मदात्ययचिकित्सा)

यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।
पित्तवाताधिकः प्रायो मदव्याधिर्भवेद्यतः ॥ ८ ॥
क्रियां तदुदितां कुर्यादन्यदोषाविरोधिनीम् ।
हीनमिथ्यातियोगेन यो व्याधिरुपजायते ॥ ९ ॥
समपीतेन तेनैव स मद्येनोपशाम्यति ।
यथा विषस्य नाशस्स्याद्यौगिकेन विषेण हि ॥ १० ॥
तत्र वातोद्भवे दद्यान्मद्यं पिष्टकृतं युतम् ।
बीजपूरकवृक्षाम्लकोलडाडिमदीप्यकैः ॥ ११ ॥
यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ।
गोधूममाषविकृतीर्दद्यात् स्निग्धान् रसांस्तथा ॥ १२ ॥

स्वरसं डाडिमात् क्वाथः पञ्चमूलात् कनीयसः ।
अभ्यङ्गोद्वर्तनस्नानमुष्णं प्रावरणं हितम् ॥ १३ ॥
पित्तोल्बणे बहुजलं शार्करं मधु वा युतम् ।
रसैर्दाडिमखर्जूरभव्यद्राक्षापरूषजैः ॥ १४ ॥
सुशीतं सासितासक्तु योज्यं तादृक् च पानकम् ।
स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ॥ १५ ॥
तृष्यते चातिबलवद्वातपित्ते समुद्धते ।
दद्याद् द्राक्षारसं पाने मद्यं वापि बहूदकम् ॥ १६ ॥
मुस्तडाडिमलाजाम्बु जलं वा पर्णिनीशृतम् ।
उल्लेखनोपवासाभ्यां जयेत् श्लेष्मोल्बणं पिबेत् ॥ १७ ॥
शीतं शुण्ठीस्थिरोदीच्यदुस्पर्शान्यतमोदकम् ।

(मदादित्रयनिदानम्)

रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः ॥ १८ ॥
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।
मदमूर्च्छायसन्यासा यथोत्तरबलोत्तराः ॥ १९ ॥
मदोऽत्र दोषैस्सर्वैश्च रक्तमद्यविषैरपि ।
रूक्षः श्यावोऽरुणो वातात् सक्तानल्पक्रियावचाः ॥ २० ॥
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ।
स्वल्पासम्बद्धवाक् पाण्डुः कफाद् ध्यानपरोऽलसः ॥ २१ ॥
सर्वात्मा सन्निपातेन रक्तात् स्तब्धाङ्गदृष्टिता ।
पित्तलिङ्गं च मद्येन विकृतेहास्वराङ्गता ॥ २२ ॥
विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्याधिकश्च सः ।
कार्श्यश्यावारुणाक्षित्वं मूर्च्छाये मारुतात्मके ॥ २३ ॥
पित्तेन तृष्णादाहाढ्यस्सस्वेदः पीतलोचनः ।
कफात् स्तिमितगुर्वङ्गः सहृल्लासप्रसेकवान् ॥ २४ ॥
नीलारुणं पीतरक्तं नीलाभं च नभः क्रमात् ।
पश्यन् मूर्च्छायमाप्नोति त्रिभिस्सर्वाकृतिः पुनः ॥ २५ ॥
अपस्मार इवापात्य कुर्यान्निश्चेष्टितं च तम् ।
दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ॥ २६ ॥

स्वयमेव च शाम्यन्ति सन्यासो नौषधैर्विना ।
प्राणायतनाश्रितैर्दोषैः बलिभिर्नष्टचेष्टितः ॥ २७ ॥
मृतवत् कफपूर्णास्यः सन्यासान्निपतेन्नरः ।

(मदादित्रयचिकित्सा)

मदेषु वातपित्तघ्नः प्रायो मूर्च्छासु चेष्यते ॥ २८ ॥
सर्वत्रापि विशेषेण पित्तमेवोपलक्षयेत् ।
शीताः प्रदेहा मणयस्सेको व्यजनमारुताः ॥ २९ ॥
सिताद्राक्षेक्षुखर्जूरकाश्मर्यस्वरसं पयः ।
सिद्धं मधुरवर्गेण रसा यूषास्सदाडिमाः ॥ ३० ॥
प्रसक्तवेगेषु हितं मुखनासावरोधनम् ।
पिबेद्वा मानुषीक्षीरं तेन दद्याच्च नावनम् ॥ ३१ ॥
दुरालभां वरां मुस्तां दद्यात् क्षौद्रेण वा जले ।
पिबेन्मरिचकोलास्थिमज्जोशीराहिकेसरम् ॥ ३२ ॥
धात्रीफलरसे सिद्धं पथ्याक्काथेन वा घृतम् ।
पञ्चकर्माणि शस्तानि तथा रक्तावसेचनम् ॥ ३३ ॥
मृद्वीकादिं मृणालादिं पिबेत् क्काथं सितायुतम् ।
कल्याणकं महातिक्तं षट्पलं वा घृतं पिबेत् ॥ ३४ ॥
पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः ।
त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्करा ॥ ३५ ॥
त्रयो दोषाः सन्निपत्य प्राणायतनसंश्रयाः ।
सन्यासं मारकं कुर्युः तं जवाद्विनिवर्तयेत् ॥ ३६ ॥
आशु प्रयोज्यं सन्यासे सुतीक्ष्णं नस्यमञ्जनम् ।
धूमः प्रधमनं तोदस्सूचीभिश्च नखान्तरे ॥ ३७ ॥
केशानां लुञ्छनं दाहो दंशो दशनवृश्चिकैः ।
कट्वम्लगाळनं वक्त्रे कपिकच्छ्ववघर्षणम् ॥ ३८ ॥
उत्थितो लब्धसंज्ञश्च लशुनस्वरसं पिबेत् ।
खादेत्सव्योपलवणं बीजपूररसं पिबेत् ॥ ३९ ॥

---

१. 'वा रास्नां वा' इति पाठभेदः

लघ्वन्नं कटुतीक्ष्णोष्णमद्यात्स्रोतोविशुद्धये ।
उपाचरेत्तोषकरैः प्रियश्रवणदर्शनैः ॥ ४० ॥

(अर्शोरोगनिदानम्)

दोषास्त्वङ्मांसमेदांसि प्रदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ ४१ ॥
सहजन्मोत्तरोत्थानभेदाद् द्वेधा समासतः ।
शुष्कार्द्रभेदतश्चात्र सहजानि त्रिदोषतः ॥ ४२ ॥
षोढान्यानि पृथग्दोषैस्संसर्गान्निचयास्रतः ।
शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ॥ ४३ ॥
गुदे वलित्रययुते यानि चाभ्यन्तरे वलौ ।
स्थितानि च त्रिदोषाणि सहजान्यप्यसाध्यताम् ॥ ४४ ॥
यान्ति मध्यवलीस्थानि कृच्छ्राणि द्वन्द्वजानि च ।
बाह्यायान्तु वलौ जातान्येकदोषोद्भवानि च ॥ ४५ ॥
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ।
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ॥ ४६ ॥
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ।
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ॥ ४७ ॥
कीलोपमं स्थिरतरं चर्मकीलं तु तं विदुः ।
तत्र हेतुस्तु कठिनाद्यासनं शीतलांबुभिः ॥ ४८ ॥
संस्पर्शोऽतिव्यवायश्च शकृन्मूत्रादिधारणम् ।
ज्वरगुल्मातिसारादि कर्शनं विषमासनम् ॥ ४९ ॥
एतैरपानः कुपितो मदं गुदवलीषु तु ।
सन्धत्ते तास्तथ क्लिन्नास्त्वर्शांसि प्रभवन्ति हि ॥ ५० ॥
पूर्वरूपं च विष्टंभो मन्दाग्नित्वं शकृद्ग्रहः ।
भेदोषाकूजनं चान्त्रे मलाल्पत्वातिमूत्रते । ५१ ॥
आशङ्का ग्रहणीशोफपाण्डुगुल्मोदरेषु च ।
गुदांकुरास्तेन नानान् शुष्काऽऽभावाऽरुणाः खराः ॥ ५२ ॥

वक्रा मिथो विसदृशास्तीक्ष्णा विस्फुटिताननाः ।
शिरःपार्श्वांसकट्यूरुवंक्षणाभ्यधिकव्यथाः ॥ ५३ ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्राः सोष्माणो मृदवः श्लथाः ॥ ५४ ॥
दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदाः ।
श्लेष्मोद्भवा महामूला घना मन्दरुजास्सिताः ॥ ५५ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
वङ्क्षणानाहहृल्लासमेहशीतज्वरप्रदाः ॥ ५६ ॥
संसृष्टलिंगास्संसर्गे निचयात्सर्वलक्षणाः ।
रक्तोद्भवाः पित्तसमा दुष्टास्रस्राविणोऽपि च ॥ ५७ ॥
रक्तक्षयाद्धीनवर्णबलौजा दुःखितो भवेत् ।

(अर्शश्चिकित्सा)

अर्शांसि शस्त्रक्षाराग्निलेपाभ्यङ्गैरुपाचरेत् ॥ ५८ ॥
दृश्यान्यदृश्यानि पुनस्सदान्तः परिमार्जनैः ।
अथ साधारणे काले नातिदुर्बलमर्शसम् ॥ ५९ ॥
विशुद्धकोष्ठं लघ्वन्नमनुलोमनमाशितम् ।
शुचिं कृतस्वस्त्ययनं कृतनिरभ्रमव्यथम् ॥ ६० ॥
शयने फलके वान्यनरोत्सङ्गेऽभ्युपाश्रितम् ।
पूर्वेण कायेनोत्तानं प्रत्यादित्यगुदं समे ॥ ६१ ॥
समुन्नतकटीदेशमथ यन्त्रणवाससा ।
सक्थ्नोश्शिरोधरायां च परिक्षिप्त ऋजुस्थितम् ॥ ६२ ॥
आलम्बितं परिचरैस्सर्पिषाभ्यक्तपायवे ।
ततोऽस्मै सर्पिषाभ्यक्तं निदध्यादृजुयन्त्रकम् ॥ ६३ ॥
शनैरनु सुखं पायौ ततो दृष्ट्वा प्रवाहणात् ।
यन्त्रे प्रविष्टं दुर्नाम प्लोतकुण्ठितयानु च ॥ ६४ ॥
शलाकयोत्पीड्य भिषग्यथोक्तविधिना दहेत् ।
क्षारेणैवार्द्रमिसृग्त् क्षारेण ज्वलनेन वा ॥ ६५ ॥

महद्वा बलिनश्छित्त्वा वीतयन्त्रमथातुरम् ।
स्वभ्यक्तपायुजघनमवगाहे निधापयेत् ॥ ६६ ॥

निवातमन्दिरस्थस्य ततोऽस्याचारमादिशेत् ।
एकैकमिति सप्ताहात् सप्ताहात्समुपाचरेत् ॥ ६७ ॥

प्रागृदक्षिणं ततो वाममर्शः पृष्ठाग्रजं ततः ।
बह्वर्शसस्सुदग्धस्य स्याद्वायोरनुलोमता ॥ ६८ ॥

रुचिरन्नेऽग्निपटुता स्वास्थ्यं वर्णबलोदयः ।
वस्तिशूले त्वधोनाभेर्लेपयेच्छ्लक्ष्णकल्कितैः ॥ ६९ ॥

वर्षाभूकुष्ठसुरभिमिसिलोहामराह्वयैः ।
शकृन्मूत्रप्रतीघाते परिषेकावगाहयोः ॥ ७० ॥

वरणालंबुसैरण्डगोकण्टकपुनर्नवैः ।
सुषवीसुरभीभ्यां च क्वाथमुष्णं प्रयोजयेत् ॥ ७१ ॥

सस्नेहमथवा क्षीरं तैलं वा वातनाशनम् ।
अथाप्रयोज्यदाहादेरभ्यज्य गुदकीलकान् ॥ ७२ ॥

बिल्वमूलाग्निकक्षारकुष्ठैस्सिद्धेन सेचयेत् ।
तैलेनाहिविलाळोष्ट्रवराहवसयाथवा ॥ ७३ ॥

स्वेदयेदनु पिण्डेन द्रवैर्वा सक्तुभिश्च वा ।
रास्नाया हपुषाया वा पिण्डैर्वा कार्ष्णगन्धिकैः ॥ ७४ ॥

अर्कमूलं शमीपत्रं नृकेशास्सर्पकञ्चुकम् ।
मार्जारचर्म सर्पिश्च धूपनं श्रेष्ठमर्शसाम् ॥ ७५ ॥

स्नुक्क्षीरार्कनिशालेपः सुरागोमूत्रकल्कितः ।
कृकवाकुशकृत्कृष्णानिशागुञ्जाफलैस्तथा ॥ ७६ ॥

गोमूत्रपिष्टैर्वा दन्तीचित्रकस्वर्जिकादिभिः ।
तुत्थं बदरचर्व्ये च हरिद्रा चित्रकं गुळम् ॥ ७७ ॥

पिप्पल्यः कुक्कुटशकृत् घृतं चार्शःप्रलेपनम् ।
शिरीषबीजसम्मिश्रां लाङ्गलीं परिलेपयेत् ॥ ७८ ॥

आर्कं पयस्सुधाकाण्डं कटुकालाबुपल्लवा ।
करञ्जं बस्तमूत्रं च लेपनं हितमर्शसाम् ॥ ७९ ॥

धान्याम्लपिष्टैर्जीमूतबीजैस्तज्जालकं मृदु ।
लेपितं छायया शुष्कं वर्तिर्गुदजनाशिनी ॥ ८० ॥

सजालमूलजीमूतलेहे वा क्षारसंयुते ।
गुञ्जासूरणकूश्माण्डबीजैर्वर्तिस्तथागुणा ॥ ८१ ॥

उच्छूनकठिनेभ्यश्च जङ्घकामिर्हेऽन्दस्रुक् ।
सैन्धवं च वा वित्रकाथं हन्याद्गुदाङ्कुरान् ॥ ८२ ॥

हरीतकयादिकं क्वाथं पथ्याबिल्वादिकं तथा ।
दुस्पर्शनाद्यं विरिविल्वाद्यं पूतीकपूर्विकम् ॥ ८३ ॥

यो जातो गोरसः क्षीराद्वह्निमूलात्रचूर्णितात् ।
पिबंस्तमेव तेनैव भुञ्जानो गुदजान् जयेत् ॥ ८४ ॥

तक्रेण वा पिबेत् पथ्यावेल्लाग्निकुटजत्वचः ।
कलिङ्गमगधाज्योतिस्सूरणान् वा गवर्धितान् ॥ ८५ ॥

कोष्णाम्बुना वा त्रिपटुव्योषहिंग्वम्लवेतसान् ।
युक्तं विल्वकपित्थाभ्यां महौषधविडेन वा ॥ ८६ ॥

आरुष्करैर्यवान्या वा प्रदद्यात्तक्रतर्पणम् ।
पिबेदहरहस्तक्रं निरन्नो वा प्रकामतः ॥ ८७ ॥

परमग्निकरं चैतदर्शसामपि नाशनम् ।
त्वचाश्चित्रकमूलस्य कल्कं कुम्भे प्रलेपयेत् ॥ ८८ ॥

तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ।
मथितं भाजने क्षुद्रबृहतीफललेपिते ॥ ८९ ॥

निशां पर्युषितं पेयमिच्छद्भिर्गुदजक्षयम् ।
तक्रारिष्टं पिबेत्तद्वत् पाठातक्रं च शीलयेत् ॥ ९० ॥

कुटजादिगणं तद्वद् बहुधापि प्रयोजयेत् ।
पथ्याचूर्णं विडांशाढ्यं नित्यं तक्रेण यः पिबेत् ॥ ९१ ॥

भुक्तान्ते तस्य नश्यन्ति गुदजास्सहजा अपि ।
चूर्णं हुतभुगाद्यं च तक्रे वा सूरणादिकम् ॥ ९२ ॥

भार्गीपाठामृतापञ्चकोलेष्वप्येष संविधिः ।
पथ्याशतद्वयं मूत्रद्रोणेनामूत्रसंक्षयात् ॥ ९३ ॥

पक्त्वा खादेत्सहमधू द्वे द्वे हन्ति कफोद्भवान् ।
दुर्नामकुष्ठश्वयथुगुल्ममेहोदरक्रिमीन् ॥ ९४ ॥

ग्रन्थ्यर्बुदापचीस्थौल्यपाण्डुरोगाढ्यमारुतान् ।
करञ्जपल्लवान् खादेद्वा वर्चोऽनुलोमनान् ॥ ९५ ॥

गोमूत्राध्युषितामद्यात्सगुडां वा हरीतकीम् ।
लेहं काङ्कायनं वापि जीमूताद्यं च शीलयेत् ॥ ९६ ॥

पिप्पल्याद्यं घृतं वापि व्योषाद्यं सर्पिरेव वा ।
पलाशक्षारसर्पिर्वा पञ्चकोलादिकं तथा ॥ ९७ ॥

पिप्पल्यादिप्रतीवापं चित्रकक्वाथसाधितम् ।
घृतमर्शोहरं श्रेष्ठं दीपनं शोधनं परम् ॥ ९८ ॥

ग्रहणीवत् क्रियां कुर्यादर्शसां भिन्नवर्चसाम् ।
अर्शांसि बद्धवर्चांसि तूदावर्तवदाचरेत् ॥ ९९ ॥

अतिप्रवृत्तरक्तानि रक्तपित्तातिसारवत् ।
रक्तार्शांसि द्विधा वायोः श्लेष्मणश्चानुबन्धतः ॥ १०० ॥

दुष्टास्रलक्षणं तत्र पूर्वोक्तेनैव लक्षयेत् ।
दुष्टेऽस्रे शोधनं कार्यं रक्तस्याथ च लङ्घनम् ॥ १०१ ॥

पुनः पाकाय दोषाणां हितस्तिक्तोऽग्निदीप्तये ।
यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते ॥ १०२ ॥

स्तम्भनीयं तदेकान्तान्नचेद्वातकफानुगम् ।
सकफेऽस्रे पिबेत् पाक्यं शुण्ठीकुटजवल्कलम् ॥ १०३ ॥

किराततिक्तकं शुण्ठीधन्वयासं कुचन्दनम् ।
दार्वीत्वङ्निम्बसेव्यानि पिबेद्वा दाडिमत्वचम् ॥ १०४ ॥

रक्तापामार्गजलदक्वाथं रक्तार्शसः पिबेत् ।
चन्दनाद्यमुशीराद्यं कौटजं फाणितं तथा ॥ १०५ ॥

कुटजादिघृतं पेयं चूर्णो लाक्षादिको हितः ।

जयत्यत्युद्धणं रक्तं मारुतं च प्रयोजितः ।
रक्तार्शसां प्रशमने क्षीरमाजं च शस्यते ॥ १०७ ॥

(उदावर्तनिदानम् )

रूक्षैस्संग्राहिभिश्चान्नैः स्वे स्थाने कुपितोऽनिलः ।
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥ १०८ ॥
पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम् ।
तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वबस्तिगाः ॥ १०९ ॥
पवनस्योर्ध्वगामित्वं ततः छर्द्यरुचिज्वराः ।
बाधिर्यतिमिराद्याश्च जायन्तेऽन्ये च वातजाः ॥ ११० ॥
दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।
वाताभिभूतकोष्ठानां तैर्विनापि स जायते ॥ १११ ॥
उद्रिक्तशूलं स्रस्ताक्षं विड्वमन्तं परित्यजेत् ।

(उदावर्तचिकित्सा)

उदावर्तार्तमभ्यज्य तैलैः शीतज्वरापहैः ॥ ११२ ॥
सुस्निग्धं स्वेदयेत् पिण्डैः वर्तिं दद्याद् गुदे ततः ।
भूयोऽनुबन्धे वातघ्नैर्विरेच्यः स्नेहरेचनैः ॥ ११३ ॥
दद्यात्क्वाथं कुलत्थाद्यं श्यामाद्यं त्रिवृदादिकम् ।
निकुम्भाद्यं तथान्यच्च मलवातानुलोमनम् ॥ ११४ ॥

इति हृदयप्रिये द्वितीयखण्डे मदात्ययार्शउदावर्तचिकित्सितं नाम
सप्तमोऽध्यायः ॥

---

अथाष्टमोऽध्यायः ।

(अतिसारनिदानम् )

दोषैर्व्यस्तैस्समस्तैश्च भयाच्छोकाच्च षड्विधः ।
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ १ ॥
रूक्षासात्म्यातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ।
कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ॥ २ ॥

विस्रंसयत्यधोऽब्धातुं हत्वाग्निं द्रावयन् शकृत् ।
प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः ॥ ३ ॥

तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ।
आध्मानमविपाकश्च तत्र वातेन विड्जलम् ॥ ४ ॥

अल्पाल्पं शब्दशूलाढ्यं विबन्धमुपवेश्यते ।
पित्तेन पीतमसितं हारिद्रं पूतिरक्तवत् ॥ ५ ॥

सशूलं पायुसन्तापपाकवच्छ्लेष्मणा घनम् ।
पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥ ६ ॥

सर्वात्मा सर्वचिह्नस्स्यात् वातपित्तात्मकोऽन्ययोः ।
अतीसारस्समासेन द्विधा सामो निरामकः ॥ ७ ॥

सासृङ्निरस्रस्तत्रापि चिकित्साथ निरूप्यते ।

(अतिसारचिकित्सा)

अतिसारो हि भूयिष्ठं भवत्यामाशयाश्रितः ॥ ८ ॥

हत्वाग्निं वातजेऽप्यस्मात् प्रागस्मिंल्लङ्घनं हितम् ।
शूलानाहप्रसेकार्तं वामयेदतिसारिणम् ॥ ९ ॥

दोषास्सन्निचिता ये च विदग्धाहारमूर्च्छिताः ।
अतीसाराय कल्पन्ते तेषूपेक्षैव भेषजम् ॥ १० ॥

भृशोत्क्लेशप्रवृत्तेषु स्वयमेव चलात्मसु ।
प्रयोज्यं न तु संग्राहि पूर्वमामातिसारिणे ॥ ११ ॥

विबद्धमामं कुर्याद्यज्ज्वरप्लीहोदरादिकान् ।
अपि चाध्मानगुरुता शूलस्तैमित्यकारिणि ॥ १२ ॥

प्राणदा प्राणदा दोषे विबन्धे संप्रवर्तिनी ।
पूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकी ॥ १३ ॥

अथवा विल्वधनिकामुस्तानागरवालकम् ।
विळपाठावचापथ्याक्रिमिजिन्नागराणि वा ॥ १४ ॥

शुण्ठीघनवचामाद्रीविल्ववत्सकहिङ्गु वा ।
वचाप्रतिविषे वापि मुस्तानागरकेऽथवा ॥ १५ ॥

ह्रीबेरनागरे वापि क्वाथयित्वा पिबेज्जलम् ।
भोज्यानि कल्पयेदस्य ग्राहिदीपनपाचनैः ॥ १६ ॥
विबद्धं दोषबहुलो दीप्ताग्निर्योऽतिसार्यते ।
कृष्णाविळङ्गत्रिफलाकषायैस्तं विरेचयेत् ॥ १७ ॥
पेयां दद्याद्विरिक्तस्य वातघ्नैर्दीपनैः कृताम् ।
सफेनपिच्छं सरुजं सविबन्धं पुनः पुनः ॥ १८ ॥
अल्पाल्पमनले दीप्ते भृशं यस्तूपवेश्यते ।
दधितैलघृतक्षीरैः सशुण्ठीं सगुळां पिबेत् ॥ १९ ॥
पेयां पुनर्गाढवर्चा बहुस्नेहं तथा रसम् ।
खळयूषयवाग्वादौ सानन्तादिं प्रयोजयेत् ॥ २० ॥
लाजैस्तक्रेण पेयां च क्वाथं विल्वादिकं पिबेत् ।
पथ्यादिकं च शुण्ठ्याद्यं पिप्पल्याद्यं च सामके ॥ २१ ॥
पक्वातिसारे तु पुनस्समङ्गादिद्वयं हितम् ।
मुस्ताद्यं वा पिबेत् क्वाथं समङ्गाद्यं जलं तथा ॥ २२ ॥
धन्वयासादिकं क्वाथं कृष्णाद्यं च पिबेत्तथा ।
आजं पयः परं पथ्यं निरामे सास्रकेऽधिकम् ॥ २३ ॥
कल्कास्तिलानां कृष्णानां शर्करापाञ्चभागिकः ।
आजेन पयसा पीतस्सद्यो रक्तं नियच्छति ॥ २४ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना ।
दाहतृष्णाप्रमोहेभ्यो रक्तस्रावाच्च मुच्यते ॥ २५ ॥
जम्ब्वाम्राङ्कुरनिष्क्वाथः सक्षौद्रो रक्तजे हितः ।
क्वाथं पाठाकलिङ्गाद्यं हितं कुटजफाणितम् ॥ २६ ॥
दोषाणां पाचनार्थं च वह्निसन्दीपनाय च ।
सङ्ग्रहाय च रक्तस्य परं तिक्तैरुपाचरेत् ॥ २७ ॥
रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ।
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥ २८ ॥
शर्करार्धांशकं लीढं नवनीतं नवोद्धृतम् ।
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ॥ २९ ॥

नानावर्णमतीसारं पुटपाकैरुपाचरेत् ।
त्वक्पिण्डाद्दीर्घवृन्तस्य श्रीपर्णीपत्रसंवृतात् ॥ ३० ॥

मृल्लिप्तादग्निना स्विन्नाद्रसं निष्पीडितं हिमम् ।
अतीसारे पिबेद्युक्तं मधुना मितयाथवा ॥ ३१ ॥

एवं क्षीरिद्रुमत्वग्भिस्तत्प्ररोहैश्च कल्पयेत् ।
तामलकयब्दशुण्ठीभिः क्वाथस्सर्वातिसाराजित् ॥ ३२ ॥

सौवर्चलाद्यं पाठाद्यं यवान्याद्यं च चूर्णकम् ।
डाडिमाष्टकमप्येवं दद्यात् पाठादिकं घृतम् ॥ ३३ ॥

गुदस्य पाके दाहे वा सेकालेपा हिता हिमाः ।
पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥ ३४ ॥

पिच्छावस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः ।
प्रपुण्डरीकसिद्धेन सर्पिषा वानुवासनम् ॥ ३५ ॥

पल्लवान् जर्जरीकृत्य शिंशपाकच्छुदारयोः ।
पचेद्यवांश्च स क्वाथो घृतक्षीरयुतो हितः ॥ ३६ ॥

पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ।
सन्निपातसमुत्पन्नं सम्मिश्रैस्तैः प्रसाधयेत् ॥ ३७ ॥

भीशोकोत्थं वातहरैर्हर्षणाश्वासनैरपि ।
मुस्तादिकाष्टवर्गश्चाप्यरल्वाद्यं च सर्वजित् ॥ ३८ ॥

(ग्रहणीनिदानम्)

अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ।
तस्य स्याद्वह्निविध्वंसकरैरत्यर्थसेवितैः ॥ ३९ ॥

सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वं तु नैव वा ।
अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ॥ ४० ॥

चिरकृद्ग्रहणीदोषः सञ्ज्ञयाचोपवेश्यते ।
स चतुर्धा पृथग्दोषैस्सन्निपाताच्च जायते ॥ ४१ ॥

प्राग्रूपं तस्य सदनं चिरात्पचनमम्लकः ।
प्रसेको वक्त्रवैरस्यं तृष्णा कर्णान्त्रकूजनम् ॥ ४२ ॥

ज्वरश्शिरोरुक् च श्वयथुः करपादयोः ।
निलात्तालुशोषस्तिमिरं पार्श्ववेदनाः ॥ ४३ ॥
जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ।
राच्छुष्कं द्रवं दुःखं सृजेद्वर्चः पुनः पुनः ॥ ४४ ॥
त्तेन पीतं नीलाभं पूति दाहयुतं द्रवम् ।
फाद्भिन्नामसश्लेष्मगुरुवर्चःप्रवर्तनम् ॥ ४५ ॥
धोदरत्वमरुचिश्छर्दिर्हृल्लासपीनसाः ।
कृशस्यापि दौर्बल्यं सर्वजे सर्वसङ्करः ॥ ४६ ॥

(ग्रहणीचिकित्सा)

हणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
तीसारोक्तविधिना तस्यामं च विपाचयेत् ॥ ४७ ॥
हण्यां पाचनं पूर्वं मध्ये सङ्ग्राहि भेषजम् ।
च दीपनं दद्यादतीसारेऽप्ययं विधिः ॥ ४८ ॥
न्नकाले यवाग्वादि पञ्चकोलादिसाधितम् ।
तरेत् पटुलघ्वन्नं पुनर्योगांश्च दीपनान् ॥ ४९ ॥
तुर्विधग्रहण्यां च तक्रं स्यात् परमं हितम् ।
लडाडिमवृक्षाम्लचाङ्गेरीणां सुयोजितम् ॥ ५० ॥
तुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम् ।
वणानां च चत्वारि शर्करायाः पलाष्टकम् ॥ ५१ ॥
च्चूर्णं शाकसूपान्नरागादिष्ववचारयेत् ।
साजीर्णारुचिश्वासहृत्पाण्ड्वामयशूलनुत् ॥ ५२ ॥
गरातिविषामुस्तं पाक्यमामहरं पिबेत् ।
णाम्बुना वा तत्कल्कं नागरं वाथवाभयाम् ॥ ५३ ॥
कफानिले कोष्ठरुक्करे कोष्णवारिणा ।
लिङ्गहिंग्वतिविषावचासौवर्चलाभयाः ॥ ५४ ॥
र्यां सौवर्चलाजाजीपथ्यातीक्ष्णाः सुखाम्बुना ।
स्ताकरञ्जमूलत्वक्छुण्ठीभिः क्वथितं जलम् ॥ ५५ ॥

पिप्पलीचूर्णसंयुक्तं ग्रहण्यामग्निदीप्तिदम् ।
पाठाद्यं नागराद्यं वा कैडर्याद्यभयादिके ॥ ५६ ॥

पिप्पल्यादिकृतं चूर्णं पथ्यादिगुळिकां तथा ।
तालीसपत्रपूर्वं च वटकं शीलयेत् क्रमात् ॥ ५७ ॥

अथैनं परिपक्वामं मारुतग्रहणीगदम् ।
दीपनीयौषधियुतं पाययेदल्पशो घृतम् ॥ ५८ ॥

पञ्चमूलादिना पक्वमुक्तं वाप्यतिसारके ।
पैत्ते चूर्णं पटोलाद्यं भूनिम्बाद्यं च पाययेत् ॥ ५९ ॥

चन्दनाद्यं घृतं दद्यात् कुष्ठोक्तं तिक्तकं तथा ।
ग्रहण्यां श्लेष्मदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ॥ ६० ॥

कट्वम्ललवणक्षारैः क्रमादग्निं विवर्धयेत् ।
पञ्चकोलाभयाधान्यपाठागन्धपलाशकैः ॥ ६१ ॥

बीजपूरप्रवाळैश्च सिद्धैः पेयादि कल्पयेत् ।
कफे तु मातुलुङ्गाद्यं चूर्णं भूनिम्बपूर्वकम् ॥ ६२ ॥

द्विहरिद्रादिकं क्षारं दद्याद्भुक्तजराभिधम् ।
भल्लातकाज्यं गुल्मोक्तं यक्ष्मोक्तं षट्पलं घृतम् ॥ ६३ ॥

धान्वन्तरघृतं वापि प्रमेहविहितं पिबेत् ।
निचये पञ्चकर्माणि चिकित्सा च यथोचितम् ॥ ६४ ॥

स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते ।
स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥ ६५ ॥

स्नेहासवसुरारिष्टचूर्णक्वाथहिताशनैः ।
सम्यक् प्रयुक्तैर्देहस्य बलमग्निश्च वर्धते ॥ ६६ ॥

नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ।
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥ ६७ ॥

तस्मान्मात्रां च विमृशेद्दद्यादाहारमौषधम् ।
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ॥ ६८ ॥

अर्शांसि ग्रहणीत्यष्टौ महारोगास्सुदुस्तराः ।

(अत्यग्निनिदानम्)

यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम् ॥ ६९ ॥
प्रवृद्धं वर्धयत्यग्निं तदासौ सानिलोऽनलः।
पक्त्वान्नमाशु धातूंश्च सर्वानोजश्च संक्षिपन् ॥ ७० ॥
मारयेत् स्यात् स नास्वस्थो भुक्ते जीर्णे तु ताम्यति।
तृड्दाहश्वासमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः ॥ ७१ ॥

(अत्यग्निचिकित्सा)

तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः।
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ॥ ७२ ॥
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ॥ ७३ ॥
कृसरं पायसं स्निग्धं पैष्टिकं गुडवैकृतम्।
अश्नीयादौदकानूपपिशितानि भृतानि च ॥ ७४ ॥
लक्ष्मीरसविपक्वान्नं दध्नाद्यान्माहिषेन च।
अद्याद्भूकन्दमन्यच्च कूष्माण्डं चाग्निनाशनम् ॥ ७५ ॥
पयस्सहमधूच्छिष्टं घृतं वा तृषितः पिबेत्।
गोधूमचूर्णं पयसा बहुसर्पिःप्लुतं पिबेत् ॥ ७६ ॥
आनूपरसयुक्तान्वा स्नेहांस्तैलविवर्जितान्।
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ॥ ७७ ॥
असकृत्पित्तहरणं पायसप्रतिभोजनम्।
यत् किञ्चिद्गुरु मेध्यं च श्लेष्मकारि च भोजनम् ॥ ७८ ॥
सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा।
आहारमग्निः पचति दोषानाहारवर्जितः ॥ ७९ ॥
धातून् क्षीणेषु दोषेषु जीवितं धातुसंक्षये।
एतत्प्रकृत्यैव विरुद्धमन्नं संयोगसंस्कारवशेन चेदम्।
इत्याद्यविज्ञाय यथेष्टचेष्टाश्चरन्ति ये चाग्निबलस्य शक्तिः ॥ ८० ॥

तस्मादग्निं पालयेत्सर्वयत्नैस्तस्मिन् नष्टे याति ना नाशमेव ।
दोषैर्ग्रस्ते ग्रस्यते रोगसङ्घैर्मुक्ते तु स्यान्नीरुजो दीर्घजीवी ॥ ८१½ ॥

इति हृदयप्रिये द्वितीयखण्डे अतिसारग्रहण्यल्पाग्निचिकित्सितं
नामाष्टमोऽध्यायः ॥

---

अथ नवमोऽध्यायः ।

(मूत्रकृच्छ्रनिदानम्)

जायन्ते वस्तिगैर्दोषैर्मूत्राघातास्तु विंशतिः ।
पृथग् दोषैस्समस्तैश्च मूत्रकृच्छ्रं चतुर्विधम् ॥ १ ॥
वस्तिवंक्षणमेढ्रार्तियुक्तोऽल्पाल्पं मुहुर्मुहुः ।
मूत्रयेद्वातजे कृच्छ्रे पैत्ते पीतं सदाहरुक् ॥ २ ॥
रक्तं वा कफजे वस्तिमेढ्रगौरवशोफवान् ।
सपिच्छं सनिबन्धं वा सर्वैस्सर्वात्मकं मलैः ॥ ३ ॥
यदा वायुर्मुखं वस्तेरावृत्य परिशोषयन् ।
मूत्रं सपित्तं सकफं सशुक्लं वा तदा क्रमात् ॥ ४ ॥
दोषैश्शुक्राच्चतुर्धा स्युरश्मर्यो मूत्रमार्गगाः ।
अश्मरीपूर्वरूपं तु वस्त्याध्मानं रुजाभितः ॥ ५ ॥
मूत्रकृच्छ्रतया मार्गनिरोधो नाभिवस्तिरुक् ।
मूत्रं विशीर्णधारं स्यात्तद्व्यपाये सुखं स्रवेत् ॥ ६ ॥
तत्संक्षोभात् क्षते सास्रमायासाच्चातिरुक् भवेत् ।
तत्र वाताद् भृशार्त्यर्त्तो वस्तिमेहनमर्दकः ॥ ७ ॥
मुञ्चन् शकृत्सानिलं च बिन्दुशो मेहति क्वणन् ।
श्यावा रूक्षाऽश्मरी चास्य स्याच्चिता कण्टकैरिव ॥ ८ ॥
पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान् ।
पीता रक्ता सिता वा स्यादश्मरी श्लेष्मणा गुरुः ॥ ९ ॥
वस्तिर्निस्तोदवान् शीता श्लक्ष्णा स्यादश्मरी सिता ।
स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ १० ॥

शोषयत्युपसंगृह्य शुक्रं तच्छुष्कमश्मरी ।
वस्तिरुङ्मूत्रकृच्छ्रत्वमुष्कश्वयथुकारिणी ॥ ११ ॥
मूत्रसन्धारिणः कुर्याद्रुध्वा वस्तेर्मुखं मरुत् ।
मूत्रसंगं रुजं कण्डूं वस्तिं च स्थूलविप्लुतम् ॥ १२ ॥
बिन्दुशश्च प्रवर्तेत मूत्रं वस्तौ तु पीडिते ।
धारया वा वातवस्तिर्द्वितीयस्तु सुदुस्तरः ॥ १३ ॥
शकृन्मार्गस्य वस्तेर्वा मध्ये दुष्टेन वायुना ।
अष्ठीलाभं घनं ग्रन्थिं विण्मूत्रानिलसङ्गकृत् ॥ १४ ॥
वाताष्ठीला हि सा मूत्रं वस्तावाविध्य मारुतः ।
तीव्ररुक्कुण्डलीभूतो मूत्रमल्पाल्पमुत्सृजेत् ॥ १५ ॥
शकृता सह वा सा तु वातकुण्डलिका मता ।
मूत्रातीतं चिरधृतं मूत्रं चेद्रुद्धमल्परुक् ॥ १६ ॥
वातेन स्यादधो नाभेस्सरुजं वेगधारणात् ।
साध्मानं मूत्रजठरं मलसङ्गाग्निमान्द्यवत् ॥ १७ ॥
आक्षिप्तमल्पं मूत्रं तु वस्तौ नाळेऽथवा मणौ ।
स्थित्वा स्रवेच्छनैः पश्चात् सरुङ्नीरुक् च वायुना ॥ १८ ॥
मूत्रोत्सङ्गः सविच्छिन्नतच्छेषगुरुशेफसः ।
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स वस्तिगः ॥ १९ ॥
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।
स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥ २० ॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।
मूत्रस्रोतोऽनु पर्येति यदा वातेन पिण्डितम् ॥ २१ ॥
शकृत्तदा विड्विघातः सः स्याद्विड्गन्धमूत्रवान् ।
पित्तं वातेरितं वृद्धं वस्त्युपस्थार्तिदाहवत् ॥ २२ ॥
मूत्रं प्रवर्तयेत् पीतं सरक्तं रक्तमेव वा ।
कृच्छ्रेण चोष्णवातः स्याद्वस्तिस्थः पित्तवान्मरुत् ॥ २३ ॥
मूत्रक्षयं सरुग्दाहं कुर्याच्चेत्स तदाह्वयः ।
वाताहताभ्यामन्याभ्यां मूत्रं कृच्छ्राद्यदि स्रवेत् ॥ २४ ॥

नानावर्णं सदाहं च मूत्रसादं वदन्ति तम् ।
विंशतिर्मूत्रकृच्छ्राणि प्रोक्तान्यथ चिकित्सितम् ॥ २५ ॥

(मूत्रकृच्छ्रचिकित्सा)

वातस्थानाश्रयत्वेन मूत्रकृच्छ्रेषु सर्वशः ।
स्नेहपानं यथायोग्यं स्वेदाभ्यङ्गावगाहनम् ॥ २६ ॥

दशमूलबलैरण्डयवाभीरुपुनर्नवैः ।
कुलस्थकोलपत्तूरवृश्चीवोपलभेदकैः ॥ २७ ॥

क्वथितैः कल्कितैर्वापि पीतैस्तैलघृतान्वितैः ।
सपञ्चलवणैः कृच्छ्रे शूलमाशु विनश्यति ॥ २८ ॥

द्रव्याण्येतानि पानेऽन्ने युञ्ज्यात् पिण्डोपनाहने ।
सस्नेहानि फलाम्लानि सस्नेहं च विरेचनम् ॥ २९ ॥

ह्रस्वं च पञ्चमूलं शिवाडिकाभीरुपत्तूरम् ।
क्वथितं गुल्गुलुलुळितं पीतं वातार्तिमुद्धरेन्मूत्रे ॥ ३० ॥

जलप्रसादास्थिकपोतपङ्कशतावरीगोक्षुरसिद्धमम्भः ।
पुरान्वितं हन्त्यनिलोल्बणानि कृच्छ्राणि कृच्छ्रामपि शर्करां च ॥

पैत्ते युञ्जीत शिशिरं सेकालेपावगाहनम् ।
पिबेद्वरीं गोक्षुरकं विदारीं सकशेरुकम् ॥ ३२ ॥

तृणाख्यं पञ्चमूलं च पाक्यं समधुशर्करम् ।
भद्रिकात्रपुसोर्वारुलट्वाबीजानि कुङ्कुमम् ॥ ३३ ॥

लाक्षाम्भोभिः पिबन् सर्वान् मूत्राघातानपोहति ।
उर्वारुबीजयष्ट्याह्वदार्वीर्वा तण्डुलाम्बुना ॥ ३४ ॥

यष्ट्याह्वैलोर्वारुबीजेक्षुकाण्डैः शीतः क्वाथो नाळिकेराम्बुजो वा ।
पैत्तं कृच्छ्रं दाहतृष्णोष्णवातं रक्तस्रावं मूत्रसादं हिनस्ति ॥ ३५ ॥

कफजे वमनं स्वेदं तीक्ष्णोष्णकटुभोजनम् ।
यवानां विकृतीन् क्षारान् काळशेयं च शीलयेत् ॥ ३६ ॥

पिबेन्मद्येन सूक्ष्मैलां धात्रीफलरसेन वा ।
गोकण्डगुन्द्रावसुकपत्तूराश्मभिदां रसः ॥ ३७ ॥

समधुस्स्यात्सुखाल्पान्नः कृच्छ्राश्मनि सुखप्रदः ।
सन्निपाते तु सम्मिश्रं वातवस्त्यादिकेऽपि च ॥ ३८ ॥

यथा दोषोदयं प्रोक्तं प्रकुर्वीत क्रियाक्रमम् ।
बृहत्यादिगणैस्सिद्धं द्विगुणीकृतगोक्षुरम् ॥ ३९ ॥

तोयं पयो वा सर्पिर्वा सर्वमूत्रविकारजित् ।
देवदारु घनं मूर्वां यष्टीमधुहरीतकीम् ॥ ४० ॥

मूत्राघातेषु सर्वेषु सुराक्षीरजलैः पिबेत् ।
दुग्धे मूलं गोक्षुरस्यानिलोत्थे पित्तास्रोत्थे मूत्रकृच्छ्रे तु यष्टिम् ।
मद्यैरेलां पाययेत् श्लेष्मजाते पद्मामूलं मस्तुना सर्वकृच्छ्रे ॥
गोकण्टमूलद्विपलप्रसिद्धं जलं पयश्शिष्टमिदं प्रपीतम् ।
मूत्राप्रवृत्त्युत्थगदानशेषान् भिन्द्यात् प्रवृद्धाश्मरिशर्करां च ॥ ४२ ॥

व्याघ्र्याद्यं क्वाथमेलाद्यं क्वाथं चूर्णं च शीलयेत् ।
वस्त्यामयान्तकघृतं पिबेत्त्रैकण्टकादिकम् ॥ ४३ ॥

अश्मरी दारुणो व्याधिस्साध्यते भेषजैर्नवः ।
वृद्धस्तु यन्त्रैश्शस्त्रैर्वा तस्मादादौ जयेज्जवात् ॥ ४४ ॥

सिन्दुवारनिशावारि दारयेन्मेढ्रशर्कराम् ।
नालिकेराम्बुना पीतस्तयोः कल्कश्च तद्गुणः ॥ ४५ ॥

नृत्यत्कोरण्डबीजानां चूर्णं माक्षिकसंयुतम् ।
अविक्षीरेण सप्ताहं पीतमश्मरिपातनम् ॥ ४६ ॥

कृष्णनिर्गुण्डिकामूलं नालिकेरजलेन वा ।
यः पिबेद्रजनीं सम्यक् सगुडां तुषवारिणा ॥ ४७ ॥

तस्याशु चिररूढापि यात्यस्तं मेढ्रशर्करा ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मनिपातनः ॥ ४८ ॥

तिलापामार्गकदलीपलाशयवसम्भवः ।
क्षारः पेयोऽविमूत्रेण शर्करास्वश्मरीषु च ॥ ४९ ॥

कपोतवङ्कामूलं वा पिबेदेकं सुरादिभिः ।
तत्सिद्धं वा पिबेत् क्षीरं वेदनाभिरुपद्रुतः ॥ ५० ॥

नीलमेहेन नीलाभं कालमेही मषीनिभम् ।
हारिद्रमेही कटुकं हरिद्रासन्निभं दहन् ॥ १० ॥
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ।
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ॥ ११ ॥
बसामेही वसामिश्रं वसां वा मेहयेन्मुहुः ।
मज्जाभं मज्जमिश्रं वा मज्जामेही मुहुर्मुहुः ॥ १२ ॥
बेगहीनं लसीकाढ्यमजस्रं हस्तिमेहतः ।
मधुमेही मधुसमं जायते स किल द्विधा ॥ १३ ॥
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ।
कालेनोपेक्षितास्सर्वे ते यान्ति मधुमेहताम् ॥ १४ ॥
अविपाकोऽरुचिश्छर्दिर्निद्रा कासस्सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १५ ॥
वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाम्लको मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १६ ॥
वातजानामुदावर्तकम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥ १७ ॥

स्वेदोऽङ्गगन्धश्शिथिलत्वमङ्गे शय्यासनस्वप्नसुखाभिषङ्गः ।
हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखाभिवृद्धिः ॥ १८ ॥
शीतप्रियत्वं गळतालुशोषो माधुर्यमास्ये करपाददाहः ।
भविष्यतो मेहगणस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥

सपूर्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि नातिदुष्टम् ॥ २० ॥

शराविका कच्छपिका जालिनी विनतालजी ।
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २१ ॥
विद्रधिश्चेति पिटका प्रमेहोपेक्षया दश ।
सन्धिमर्मसु जायन्ते मांसळेषु च धामसु ॥ २२ ॥

अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।
शरावमानसंस्थाना पिटका स्याच्छराविका ॥ २३ ॥

अवगाढार्तिनिस्तोदा महावस्तुपरिग्रहा ।
श्लक्ष्णा कच्छपपृष्ठाभा पिटका कच्छपी मता ॥ २४ ॥

स्तब्धा सिराजालवती स्निग्धा स्रावा महाशया ।
रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ २५ ॥

अवगाढरुजाक्लेदा पृष्ठे वा जठरेऽपि वा ।
महती पिटका नीला विनता विनता स्मृता ॥ २६ ॥

रक्ता कृष्णातितृट्स्फोटदाहमोहज्वरालजी ।
दहन्ती त्वचमुत्थाने भृशं कष्टा विसर्पिणी ॥ २७ ॥

मानसंस्थानयोस्तुल्या मसूरेण मसूरिका ।
सर्षपामानसंस्थाना क्षिप्रपाका महारुजा ॥ २८ ॥

सर्षपा सर्षपातुल्यपिटकापरिवारिता ।
पुत्रिणी महती भूरिसुसूक्ष्मपिटकावृता ॥ २९ ॥

विदारीकन्दवद्वृत्ता कठिना च विदारिका ।
विद्रधिर्वक्ष्यतेऽन्यत्र तत्राद्यं पिटकात्रयम् ॥ ३० ॥

पुत्रिणी च विदारी च दुस्सहा बहुमेदसः ।
सह्याः पित्तोद्भणास्त्वन्यास्सम्भवन्त्यल्पमेदसाम् ॥ ३१ ॥

तासु मेहवशाच्च स्याद्दोषोद्रेको यथायथम् ।
प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः ॥ ३२ ॥

चिरारब्धाश्च न ज्ञेयाः स्थानमाप्तेः पुरा तु ताः ।

प्रमेहचिकित्सा ।

मेहिनो बलिनः कुर्यादादौ वमनरेचने ॥ ३३ ॥

यथास्वं साधितैस्तैलैः स्निग्धस्य बलकालवित् ।
कफजे मुस्तदेवाह्वनागरप्रतिवापवत् ॥ ३४ ॥

सुरसादेः कषायेण दद्यादास्थापनं ततः ।
न्यग्रोधादेस्तु पित्तार्ते रसैश्शुद्धं च तर्पयेत् ॥ ३५ ॥

मूत्रग्रहरुजागुल्मक्षयाद्या ह्यपतर्पणात् ।
असंशोध्यस्य मेहेषु शमनानि प्रयोजयेत् ॥ ३६ ॥

अमेदोमूत्रलैर्बल्यैर्दीपनैरपि भेषजैः ।
धात्रीरसप्लुतां प्राह्णे हरिद्रां मधुना पिबेत् ॥ ३७॥

दार्वीसुराह्वत्रिफलां मुस्तां वा क्वथितां जले ।
चित्रकत्रिफलादार्वीकलिङ्गान्वा समाक्षिकान् ॥ ४८ ॥

लोध्राभयातोयदकट्फलानां पाठाविलङ्गार्जुनधन्वनानाम् ।
गायत्रिदार्वीकृमिजिद्वचानां कफे त्रयः क्षौद्रयुताः कषायाः ॥

उशीरलोध्रार्जुनचन्दनानां पटोलनिम्बामलकामृतानाम् ।
लोध्राम्बुकालेयकधातकीनां पित्ते त्रयः क्षौद्रयुताः कषायाः ॥

यथास्वमेभिः पानान्नं यवगोधूमभावनम् ।
वातोल्बणेषु स्नेहांश्च प्रमेहेषु प्रकल्पयेत् ॥ ४१ ॥

बलाधात्र्याद्यमभ्यङ्गे निशाद्यममृतादिकम् ।
अग्निमन्थस्य निष्क्वाथो वातमेहहरः परम् ॥ ४२ ॥

त्रिकण्टकादिभिस्सिद्धं तैलं वातकफे पिबेत् ।
पित्ते घृतं च तैरेव सिद्धं मिश्रे तु मिश्रकम् ॥ ४३ ॥
अमृताचित्रकक्वाथे पाठां कटुकरोहणीम् ।
चूर्णयन् कुटचं कुष्ठं सुरामेहातुरः पिबेत् ॥ ४४ ॥

हस्तिपोत्रिखरोष्ट्रास्थिक्षारं मधुयुतं लिहेत् ।
हस्तिमेहेऽपि खदिरखर्ज्जूरक्काथमेव वा ॥ ४५ ॥
कतकाद्यं जलं दद्यात् आकुल्यब्दादिकं तथा ।
शुण्ठीहीनं षडङ्गं च वर्याकुल्यर्धभागिकम् ॥ ४६ ॥
क्षीरिद्रुजम्ब्वर्ज्जुनवल्कलानां
क्वाथो निशाक्षौद्रयुतः प्रशस्तः ।

गुळूच्यामलकक्वाथो मध्वाढ्यो मेहनुत्परम् ।
श्वेतगुञ्जाफलानिशाशिलाजत्वाकुलीफलम् ॥ ४७ ॥

क्रमवृद्धमिदं चूर्णं मधुना सर्वमेहनुत् ।
अमृतासारकतकनिशाखादिरवैरिभिः ॥ ४८ ॥

धात्रीफलान्वितैर्बीजमाकुल्यास्तुल्यकल्पितम् ।
सुचूर्णितं प्रगे तक्रे पीतं मेहहरं परम् ॥ ४९ ॥

अयस्कृतिं च लोध्राद्यं घृतं धान्वन्तरं पिबेत् ।
रूक्षमुद्धर्तनं गाढं व्यायामो निशि जागरः ॥ ५० ॥

यश्चान्यच्छ्लेष्ममेदोघ्नं बहिरन्तश्च तद्धितम् ।
अधनश्छत्रपादत्ररहितो मुनिवर्तनः ॥ ५१ ॥

योजनानां शतं यायात् खनेद्वा सलिलाशयान् ।
शराविकाद्याः पिटकाः शोफवत् समुपाचरेत् ॥ ५२ ॥

अपक्वा व्रणवत्पक्वास्तासां प्राग्रूप एव च ।
क्षीरिवृक्षाम्बु वा पेयं क्वाथं निम्बाद्यमेव वा ॥ ५३ ॥

उभयं मिळितं वापि जीवन्त्याद्यं च शस्यते ।
लेपयेच्च मृणालाद्यैश्शतधौतैस्सदाहके ॥ ५४ ॥

अन्यैश्च शीतळैः स्निग्धैः लेपसेकादि कल्पयेत् ।
पक्वे व्रणस्य शुध्यर्थं न्यग्रोधाद्येन सेचयेत् ॥ ५५ ॥

क्वाथेऽस्मिन् कल्कमेलाद्यं दत्वा जात्यादिसंयुतम् ।
तैलं घृतं द्वयं वापि साधयेद् व्रणरोपणम् ॥ ५६ ॥

उद्वर्तने कषायन्तु वर्गेणारग्वधादिना ।
परिषेकोऽसनाद्येन पानेऽन्ने वत्सकादिना ॥ ५७ ॥

अमेदोमूत्रळैः स्नेहलेपाद्यैश्चाथ बृंहयेत् ।

इति हृदयप्रिये द्वितीयखण्डे प्रमेहचिकित्सितं नाम
दशमोऽध्यायः ॥

---

अथैकादशोऽध्यायः ।

(विद्रधिनिदानम्)

अन्नैर्विदाहितीक्ष्णोष्णैर्जिह्मशय्याविचेष्टितैः ।
दुष्टत्वङ्मांसमेदोस्थिस्नावासृक्कण्डराश्रयः ॥ १ ॥

यश्शोफो बहिरन्तर्वा महामूलो महारुजः ।
वृत्तः स्यादायतो वापि स्मृतष्षोढा स विद्रधिः ॥ २ ॥

दोषैः पृथक् समुदितैः शोणितेन क्षतेन च ।
बाह्योऽत्र तत्र तत्राङ्गे दारुणो ग्रथितोन्नतः ॥ ३ ॥
आन्तरो दारुणतरो गम्भीरो गुल्मवद् घनः ।
वल्मीकवत् समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत् ॥ ४ ॥
नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवङ्क्षणे ।
स्याद् वृक्कयोरपाने वा वातात्तत्रातितीव्ररुक् ॥ ५ ॥
श्यावारुणश्चिरोत्थानपाको विविधवेदनः ।
रक्तताम्रासितःपित्तात्तृण्मोहज्वरदाहवान् ॥ ६ ॥
क्षिप्रोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात् ।
सोत्क्लेशशीतरुक्स्तम्भजृम्भारोचकगौरवः ॥ ७ ॥
चिरोत्थानप्रपाकश्च सङ्कीर्णस्सन्निपाततः ।
रक्तेन पित्तलिङ्गस्स्यात् कृष्णस्फोटातिदाहवान् ॥ ८ ॥
स्त्रीणामेवान्तरो रक्तात् क्षते पित्तास्रलक्षणः ।
तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ ९ ॥
नाभ्यां हिध्मा भवेद्बस्तौ मूत्रं कृच्छ्रेण पूति च ।
श्वासो यकृति रोधश्च प्लीह्न्युच्छ्वासस्य तृड्भ्रमाः ॥ १०॥
गळग्रहश्च क्लोम्नि स्यात् सर्वाङ्गप्रग्रहो हृदि ।
प्रमोहस्तमकः कासो हृदयोद्घट्टनव्यथा ॥ ११ ॥
कुक्षिपार्श्वान्तरांसार्तिः कुक्षावाटोपजन्म च ।
सक्थ्नोर्ग्रहो वङ्क्षणयोर्वृक्कयोः कटिपृष्ठयोः ॥ १२ ॥
पार्श्वयोश्च व्यथा पायौ पवनस्यानुरोधनम् ।
आमपक्वविदग्धत्वं तेषां शोफवदादिशेत् ॥ १३ ॥
नाभेरूर्ध्वं मुखात् पक्वाः प्रस्रवन्त्यधरे गुदात् ।
गुदास्यान्नाभिजे तत्र विवर्ज्यस्सान्निपातिकः ॥ १४ ॥
भिन्नो हृन्नाभिबस्तिस्थः क्षीणस्योपद्रवान्वितः ।
एवमेव स्तनसिरा विवृताः प्राप्य योषिताम् ॥ १५ ॥
श्वयथुस्स्याद् घनस्तत्र बाह्यविद्रधिलक्षणः ।

(विद्रधिचिकित्सा)

विद्रधिं सर्वमेवामं शोफवत् समुपाचरेत् ॥ १६ ॥

प्रततं च हरेद्रक्तं पक्वे तु व्रणवत् क्रिया ।
शिग्रुमूलभवः कल्को वसातैलघृताप्लुतः ॥ १७ ॥
सुखोष्णो बहुळो लेपः प्रयोज्यो वातविद्रधौ ।
पुनर्नवाया वरणाद्बल्वेश्चापि करञ्जकात् ॥ १८ ॥
मूलैर्वचाश्वगन्धाभ्यां गुल्गुल्वा च यथायथम् ।
मूत्रतक्रारनाळादिपिष्टैः पक्वैः प्रलेपयेत् ॥ १९ ॥
उपनाहं च वा दद्यात् कृसरैः पायसैस्तथा ।
अलाब्वा वा जळौकाभिश्शोणितं निर्हरेदपि ॥ २० ॥
एवं कृतेऽपि पाकाय प्रवृत्तां विद्रधिं पुनः ।
गोधूमपायसाद्येन नवनीतयुतेन च ॥ २१ ॥
बध्वा सुपक्वां शस्त्रेण वृद्धिपत्रेण पाटयेत् ।
पञ्चमूलजलैर्धौतं वातिकं लवणोत्तरैः ॥ २२ ॥
भद्रादिवर्गयष्ट्याह्वतैलैरालेपयेद्व्रणम् ।
वैरेचनिकयुक्तेन तृवृतेन विशोध्य च ॥ २३ ॥
विदारीवर्गसिद्धेन तृवृतेनैव रोपयेत् ।
क्षाळितं क्षीरितोयेन लिंपेद्यष्ट्यमृतातिलैः ॥ २४ ॥
पैत्तं घृतेन सिद्धेन मञ्जिष्ठोशीरपद्मकैः ।
पयस्याशारिबाश्रेष्ठायष्टीदुग्धैश्च रोपयेत् ॥ २५ ॥
न्यग्रोधादिप्रवाळत्वक्फलैर्वा कफजं पुनः ।
आरग्वधादिना सिक्तं सक्तुकुम्भनिशातिलैः ॥ २६ ॥
लिम्पेत् कुलस्थिकादन्तीनृपश्यामाग्नितिल्वकैः ।
ससैन्धवैस्सगोमूत्रैस्तैलं कुर्वीत रोपणम् ॥ २७ ॥
रक्तागन्तूद्भवे कार्या पित्तविद्रधिवत् क्रिया ।
वरणादिगणक्वाथमपक्वेऽभ्यन्तरास्थिते ॥ २८ ॥
ऊषकादिप्रतीवापं पूर्वाह्णे विद्रधौ पिबेत् ।
घृतं विरेचनद्रव्यैस्सिद्धं ताभ्यां च पाययेत् ॥ २९ ॥
निरूहं स्नेहवस्तिं च ताभ्यामेव प्रकल्पयेत् ।
पानभोजनलेपेषु मधुशिग्रुःप्रयोजितः ॥ ३० ॥

दत्तावापो यथादोषमपक्कं हन्ति विद्रधिम् ।
त्रायन्तीत्रिफलानिम्बकटुकामधुकं समम् ॥ ३१ ॥
त्रिवृत्पटोलमूलाभ्यां चत्वारोंऽशाः पृथक् तथा ।
मसूरान्निस्तुषादष्टौ स क्काथस्सघृतो जयेत् ॥ ३२ ॥
विद्रधिं गुल्मवीसर्पदाहमोहमदज्वरान् ।
तृण्मूर्च्छाछर्दिहृद्रोगपित्तासृक्कुष्ठकामिलाः ॥ ३३ ॥
एतत्तुल्यगुणं दद्यात् त्रायमाणादिकं घृतम् ।
व्याघ्रीवरणतर्कारीशिग्रविश्वपुनर्नवम् ॥ ३४ ॥
श्रपयित्वा पिबेत् तोयं विद्रधावन्तराश्रये ।
फलत्रयादिक्काथं च कासीसाद्यं च वा पिबेत् ॥ ३५ ॥
शाकोटकीयं मधुना कषायं पिबन्ति ये क्षीरभुजः सृजन्ति ।
ते श्लीपदं विद्रधिगुल्ममेहशोफामशूलानपि पाण्डुरोगम् ॥ ३६ ॥
सर्वावस्थासु सर्वासु गुग्गुलुं विद्रधीषु च ।
कषायैर्यौगिकैर्युञ्ज्यात्तैस्तैस्तद्वच्छिलाजतु ॥ ३७ ॥
पाकं च पालयेद्यत्नात् सिद्धिः पक्के हि दैविकी ।
पक्कः स्रोतांसि संक्लेद्य प्रयात्यूर्ध्वमधोऽपि वा ॥ ३८ ॥
स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशिनः ।
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ॥ ३९ ॥
असम्यग्वहति क्लेदे यवागूं वरणादिजाम् ।
पिबेत्तत्सिद्धतोयं वा कुलत्थमपि भक्षयेत् ॥ ४० ॥
तिक्तकाद्यैः कषायैश्च घृताद्यैरथ रोपयेत् ।
सति चालोचयन्मेहे प्रमेहाणां चिकित्सितम् ॥ ४१ ॥
स्तनजे व्रणवत्सर्वं न त्वेनमुपनाहयेत् ।
पाटयेत् पालयंस्तन्यवाहिनीः कृष्णचूचुकम् ॥ ४२ ॥
सर्वास्वामाद्यवस्थासु निर्दुहीत च तत्स्तनम् ।
स्तन्यवृद्धौ तत्क्षयार्थं कपालेन नवेन वा ॥ ४३ ॥
कुलीरोत्थापितमृदा लेपनं च प्रशस्यते ।
उपोदकातिलानन्तायष्ट्याह्वैः क्षीरपेषितैः ॥ ४४ ॥

अपक्वं स्तनजं लिम्पेत्तथोमां क्षीरपेषिताम् ।
द्रोणपुष्पं तिलं दूर्वां केरीफलनवास्थि च ॥ ४५॥

आकुल्याश्च प्रवाळानि यष्टीमधुकमेव वा ।
क्षीरपिष्टं घृतोपेतं लेपनं स्तनविद्रधौ ॥ ४६ ॥

कुटचत्वक्कषायेण तत्कल्केन च साधितम् ।
तैलं तु पुष्कराक्षीणां कुचकुम्भव्रणापहम् ॥ ४७ ॥

(वृद्धिनिदानम्)

क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरश्चरन् ।
मुष्कौ वंक्षणतः प्राप्य फलकोशाभिवाहिनीः ॥ ४८ ॥

प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ।
दोषास्रमेदोमूत्रान्त्रैस्सवृद्धिस्सप्तधा गदः ॥ ४९ ॥

मूत्रान्त्रजावप्यनिलात् हेतुभेदस्तु केवलम् ।
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ ५० ॥

पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ।
कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ॥५१॥

कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्ततः ।
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥ ५२ ॥

मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ॥ ५३ ॥

मूत्रकृच्छ्रमधस्ताच्च वलयः फलकोशयोः ।
वर्धयन् पवनः क्रुद्धः क्षुद्रान्त्रावयवं यदा ॥ ५४ ॥

नयेत् स्वस्थानतोऽधस्तात् ग्रन्थ्याभश्श्वयथुर्भवेत् ।
उपेक्षया मुष्कवृद्धिमाध्मानस्तम्भरुक्करीम् ॥ ५५ ॥

करोति तत्र पवनः पीडितोऽन्तः प्रयाति च ।
प्राध्मापयन् स्वनयुतः पुनर्मुक्तो निरेति च ॥ ५६ ॥

आन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ।
रूक्षकृष्णारुणसिरातन्तुजालगवाक्षितः ॥ ५७ ॥

(वृद्धिचिकित्सा)

स्नेहस्वेदविरेकानुवासनास्थापनं चलात् ।
वृद्धौ प्रलेपा वातघ्नाः पाके भित्वा व्रणक्रिया ।
इन्द्रवल्लीकुलस्थाभ्यां दशमूलं समीकृतम् ॥ ५८ ॥
क्वाथयित्वा पिबेद्वातवृद्धावेरण्डतैलवत् ।
पृश्निपर्णीबलैरण्डनिष्क्राथस्सघृतो जयेत् ॥ ५९ ॥
पित्तरक्तोद्भवां वृद्धिं रक्तस्रावोऽपि शस्यते ।
गोमूत्रेण पिबेन् कल्कं कफजे पीतदारुजम् ॥ ६० ॥
कृष्णानागरसिन्धूत्थहिङ्गुचूर्णसमायुतः ।
मोरटस्य च निष्क्वाथस्सप्तवृद्धिमपोहति ॥ ६१ ॥
यक्षाक्षिबीजमज्जाद्विगुणकुलस्थेन पाचिते तोये ।
घृतपटुहिङ्गुसनाथे पीते वार्ता कुतो वृद्धेः ॥ ६२ ॥
वरारजः कर्षमितं प्रभाते पञ्चाङ्गुलस्नेहयुतं लिहानः ।
जहाति वृद्धिं चिरकालजातामभागधेयं पुरुषं यथर्द्धिः ॥ ६३ ॥
यक्षदृग्बीजचूर्णांशद्विगुणं हपुषारजः ।
चित्रतैलेन लीढश्च सप्तवृद्धिमपोहति ॥ ६४ ॥
घृतं च सुकुमाराख्यं पेयं स्याल्लङ्घनादिकम् ।
पक्वे च पाटिते तैलमिष्यते व्रणशोधनम् ॥ ६५ ॥
सुमनोरुष्करांकोलसप्तपर्णेषु साधितम् ।
पटोलनिंबरजनीविळङ्गकुटचेषु च ॥ ६६ ॥
मेदोजां मूत्रपिष्टेन सुस्विन्नां सरसादिना ।
शिरोविरेकद्रव्यैर्वा वर्जयेत् फलसीवनीम् ॥ ६७ ॥
दारयेद्वृद्धिपत्रेण सम्यङ्मेदसि चोद्धृते ।
व्रणं माक्षिककासीससैन्धवप्रतिसारितम् ॥ ६८ ॥
सीव्येदभ्यञ्जनं चास्य योज्यं मेदोविशुद्धये ।
मनश्शिलैलासुमनोग्रन्थिभल्लातकैः कृतम् ॥ ६९ ॥
तैलमाव्रणसन्धानात् स्नेहस्वेदौ च शीलयेत् ।
मूत्रजां स्वेदितां स्निग्धैर्वस्त्रपट्टेन वेष्टिताम् ॥ ७० ॥

विध्येदधस्तात्सीवन्याः स्रावयेच्च यथोदरम् ।
व्रणं च स्थगिकाबद्धं रोपयेदान्त्रहेतुकम् ॥ ७१ ॥

फलकोशमसंप्राप्ते चिकित्सा वातवृद्धिवत् ॥ ७२ ॥

इति हृदयप्रिये द्वितीयखण्डे विद्रधिवृद्धिचिकित्सितं नाम
एकादशोऽध्यायः ॥

---

अथ द्वादशोऽध्यायः ।

(गुल्मनिदानम्)

गुल्मोऽष्टधा पृथग्दोषैस्संसृष्टैर्निचयं गतैः ।
आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ १ ॥

वातोल्बणा मलास्तैस्तैः पृथक् क्रुद्धा द्विशोऽथवा ।
सर्वे वा रक्तयुक्ता वा महास्रोतोऽनुयायिनः ॥ २ ॥

ऊर्ध्वाधोमार्गमावृत्य कुर्वते शूलपूर्वकम् ।
स्पर्शोपलभ्यं गुल्माख्यमुत्प्लुतं ग्रन्थिरूपिणम् ॥ ३ ॥

पिण्डितत्वादमूर्तोऽपि वायुः स्यान्मूर्तिमानिव ।
वातात् स्तम्भश्शिरश्शूलो व्यथः प्लीहान्त्रकूजनम् ॥ ४ ॥

कृच्छ्रोच्छ्वासो विड्ग्रहश्च कार्श्यं विषमवह्निता ।
वृद्धिक्षयाव्यवस्था च चलनं विविधा रुजः ॥ ५ ॥

पित्ताद्दाहोऽम्लको मूर्च्छा गुल्मश्च स्पर्शनासहः ।
स्वस्थानदाहो विड्भेदः कफेन कठिनो गुरुः ॥ ६ ॥

गुल्मस्स्यात् कसनालस्यहृल्लासारुचिपीनसाः ।
स्वदोषस्थानधामानः स्वे स्वे काले च रुक्कराः ॥ ७ ॥

गुल्मास्त्रयस्तु द्वन्द्वोत्थास्ते स्युः संसृष्टलक्षणाः ।
सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ॥ ८ ॥

सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ।
वातलाहारशीलायाः क्रुद्धो नार्यास्समीरणः ॥ ९ ॥

निरुणध्यार्तवं योन्यां प्रतिमासमवस्थितम् ।
कुक्षिं करोति तद्गर्भलिङ्गमाविष्करोति च ॥ १० ॥

योन्याश्च स्रावदौर्गन्ध्यतोदस्पन्दनवेदनाः ।
शूलं गर्भाशये चान्यद्वातपित्तोत्थगुल्मवत् ॥ ११ ॥
न चास्या वर्धते कुक्षिर्गुल्म एव तु वर्धते ।
गुल्मेऽन्तराश्रये वस्तिकुक्षिहृत्प्लीहवेदनाः ॥ १२ ॥
अग्निवर्णबलभ्रंशो वेगानां चाप्रवर्तनम् ।
अतो विपर्ययो बाह्ये कोष्ठांगेषु तु नातिरुक् ॥ १३ ॥
वैवर्ण्यमवकाशस्य बहिरुन्नतताधिकम् ।
साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ॥ १४ ॥
ऊर्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ।
घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः ॥ १५ ॥
आनाहलिङ्गस्तिर्यक्तु प्रत्यष्ठीला तदाकृतिः ।
पक्वाशयाद् गुदोपस्थं वायुस्तीव्ररुजः प्रयान् ॥ १६ ॥
तुन्युच्यते प्रतितुनी स एवातो विपर्यये ।
उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ।
साटोपमाध्मानमपक्तृशक्तिमासन्नगुल्मस्य वदन्ति चिह्नम् ॥१७॥

(गुल्मचिकित्सा)

सर्वत्र प्रथमं गुल्मे स्नेहस्वेदैरुपाचरेत् ॥ १८ ॥
अस्नेहस्वेदपूर्वा हि क्रिया गुल्मे न सिध्यति ।
आनाहवेदनास्तम्भविबन्धेषु विशेषतः ॥ १९ ॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।
भित्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २० ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ।
पक्वाशयगते वस्तिरुभयं जठराश्रये ॥ २१ ॥
पुनःपुनर्वस्तिकर्म प्रशस्तं गुल्मरोगिणाम् ।
हिङ्गुसौवर्चलव्योषविडाडिमदीप्यकैः ॥ २२ ॥
पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ।
शठीवचाजगन्ध्यैलासुरसैर्दधिसंयुतैः ॥ २३ ॥

शूलानाहहरं सर्पिस्साधयेद्वातगुल्मिनाम् ।
पुनर्नवाद्यं सर्पिश्च हपुषाद्यं च वा पिबेत् ॥ २४ ॥

लशुनादिघृतं तद्वदिन्दुकान्तं च षट्पलम् ।
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि ॥ २५ ॥

हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत्तु तम् ।
सिन्धूत्थपथ्याकणदीप्यकानां चूर्णानि तोयैः पिबतां कवोष्णैः ।
प्रयाति नाशं कफवातजन्मा नाराचनिर्भिन्न इवामयौघः ॥ २६ ॥

त्रिकटुकमजमोजं सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकबळभोज्यस्सर्पिषा चूर्णकोऽयं
जनयति जठराग्निं वातगुल्मं निहन्ति ॥ २७ ॥

चूर्णं हिङ्गुवचाद्यं च शार्दूलाख्यं च शीलयेत् ॥ २८ ॥

लिह्याच्च हिङ्गुत्रिगुणं चूर्णं वैश्वानरं पिबेत् ।
शुण्ठ्याः कर्षं गुळस्य द्वौ धौतात् कृष्णतिलात्पलम् ॥ २९ ॥

खादन्नेकत्र संचूर्ण्य कोष्णक्षीरानुपो जयेत् ।
वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान् ॥ ३० ॥

पिबेदेरण्डतैलं वा वातगुल्मी प्रसन्नया ।
श्लेष्मण्यनुबले वायौ पित्ते तु पयसा सह ॥ ३१ ॥

पित्ते वातानुवृत्ते तु क्षीरेणापि प्रसाधयेत् ।
चित्रकग्रन्थिकैरण्डशुण्ठीक्वाथः परं हितः ॥ ३२ ॥

शूलानाहविबन्धेषु सहिङ्गुविळसैन्धवः ।
पुष्करैरण्डयोर्मूलं यवं धन्वयवासकम् ॥ ३३ ॥

जलेन क्वथितं पीतं कोष्ठदाहरुजापहम् ।
दशमूलादिकं क्वाथं सप्तसारं च पाययेत् ॥ ३४ ॥

पित्तगुल्मे त्रिवृच्चूर्णं प्रापिबेत्त्रिफलान्वितम् ।
द्राक्षां पयस्याम्मधुकं पद्मकं चन्दनं मधु ॥ ३५ ॥

पिबेत्तण्डुलतोयेन पित्तगुल्मोपशान्तये ।
विदाहपूर्वरूपे तु शूले वह्नेश्च मार्दवे ॥ ३६ ॥

बहुशोऽपहरेद्रक्तं पित्तगुल्मे विशेषतः ।
गुल्मे पाकोन्मुखे सर्वाः पित्तविद्रधिवत् क्रियाः ॥ ३७ ॥

श्लेष्मजे वामयेत् पूर्वमवाम्यमुपवासयेत् ।
तिक्तोष्णकटुसंसर्ग्या वह्निं सन्धुक्षयेत्ततः ॥ ३८ ॥

निम्बादिभिश्च द्विगुणक्षारहिङ्ग्वम्लवेतसैः ।
स्थिरमानाहवद्गुल्मं संस्वेद्य विलयेदनु ॥ ३९ ॥

घृतं सक्षारकटुकं पातव्यं कफगुल्मिनाम् ।
व्योषादिकं घृतं पेयं सर्पिर्भल्लातकादिकम् ॥ ४० ॥

कुलस्थविश्ववह्नीनां कफगुल्महरं जलम् ।
विश्वाभयाद्यं शुण्ठ्याद्यं त्रिकट्वाद्यं जलं पिबेत् ॥ ४१ ॥

अर्शोऽश्मरीग्रहण्युक्ताः क्षारा योज्याः कफोद्भवे ।
क्षारागदं वा योज्यं स्यात् कफगुल्मे दृढीकृते ॥ ४२ ॥

घटीयन्त्रेण संगृह्णन् छिन्द्याद्वा तत्प्रमाणवित् ।
दहेद्वा बद्धमूलं तं हृत्वा रक्तं शरादिभिः ॥ ४३ ॥

नाभिवस्त्यान्त्रहृदयं रोमराजिं च वर्जयन् ।
ततोऽग्निवेगे शमिते शीतैर्व्रण इव क्रिया ॥ ४४ ॥

कुर्यादस्रोद्भवे गुल्मे स्नेहस्वेदविरेचनम् ।
तिलक्वाथो घृतगुळव्योषभार्ङ्गीरजोन्वितः ॥ ४५ ॥

पेयो रक्तभवे गुल्मे पुष्पे नष्टे च योषिताम् ।
भार्ङ्गीकृष्णाकरञ्जत्वग्ग्रन्थिकामरदारुजम् ॥ ४६ ॥

चूर्णं तिलानां क्वाथेन पीतं गुल्मरुजापहम् ।
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ॥ ४७ ॥

गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ।
न प्रभिद्येत यद्येवं दद्याद्योनिविरेचनम् ॥ ४८ ॥

क्षारेण युक्तं लवणं सुधाक्षारेण वा ततः ।
ताभ्यां वा भावितान् दद्याद्योनौ कटुकमत्स्यकान् ॥ ४९ ॥

किण्वं वा सगुळक्षीरं दद्याद्योनौ विशुद्धये ।
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ॥ ५० ॥

वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमौलिकम् ।
दद्याद्रक्ते त्वप्रवृत्ते हितं गुल्मप्रभेदनम् ॥ ५१ ॥

रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः ।
क्वाथं कणाशताह्वाद्यं दद्याद्वा लशुनादिकम् ॥ ५२ ॥

चित्रातैलं कुलस्थाद्यैस्सुधाक्षारं च पाययेत् ॥ ५२½ ॥

इति हृदयप्रिये द्वितीयखण्डे गुल्मचिकित्सितं नाम द्वादशोऽध्यायः ॥

---

## अथ त्रयोदशोऽध्यायः ।

### (पाण्डुरोगनिदानम्)

वाताक्षिप्तं यदा पित्तं स्थित्वा हृद्यखिलां तनुम् ।
व्याप्नुवच्छ्लेष्ममांसत्वग्रक्तं सन्दूष्य च त्वचि ॥ १ ॥

हारिद्रहरितोन्मिश्रं पाण्डुत्वं कुरुते तदा ।
पाण्डुः स पञ्चधा दोषैः पृथक् सर्वैर्मृदोऽदनात् ॥ २ ॥

प्राग्रूपं तस्य हृदयस्पन्दनं रूक्षता त्वचि ।
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ॥ ३ ॥

सादः श्रमोऽनिलात्तत्र गात्ररुक् तोदकम्पनम् ।
कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता ॥ ४ ॥

शोफानाहास्यवैरस्यं विट्छोषः पार्श्वमूर्धरुक् ।
पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः ॥ ५ ॥

तृट्स्वेदमूर्च्छाशीतेच्छा दौर्गन्ध्यं कटुवक्त्रता ।
वर्चोभेदोऽम्लको दाहः कफाच्छुक्लसिरादिता ॥ ६ ॥

तन्द्रा लवणवक्त्रत्वं रोमहर्षस्स्वरक्षयः ।
कासः छर्दिश्च निचयान्मिश्रलिङ्गोऽतिदुस्सहः ॥ ७ ॥

भुक्तया तु मृदा स्रोतोगतया पाण्डुरोगवान् ।
उच्छूननाभिपादास्यमेहनः शकृदुत्सृजेत् ॥ ८ ॥

सासृक्कफं क्रिमियुतं भिन्नं वा दुष्टधातुतः ।
यः पाण्डुरोगी सेवेत पित्तलं तस्य कामिलाम् ॥ ९ ॥
कोष्ठशाखाश्रयं पित्तं दग्ध्वासृङ्मांसमावहेत् ।
हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया ॥ १० ॥
दाहाविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ।
भवेत् पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च ॥ ११ ॥
उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामिला ।
वातपित्तात्मके पाण्डौ शोफाढ्यस्तु हलीमकः ॥ १२ ॥

(पाण्डुरोगचिकित्सा)

पाण्डुरोगी पिबेत्सर्पिरादौ कल्याणकाह्वयम् ।
पञ्चगव्यं महातिक्तं शृतमारग्वधादिना ॥ १३ ॥
स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत् ।
पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥ १४ ॥
मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम् ।
स्वर्णक्षीरीत्रिवृद्व्योषश्यामाभद्रदारुमहौषधम् ॥ १५ ॥
गोमूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत् ।
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम् ॥ १६ ॥
मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ १७ ॥
शुद्धश्चोभयतो लिह्यात् पथ्यां मधुघृताप्लुताम् ।
क्वाथं पुनर्नवाद्यं च वाशाद्यं च वरादिकम् ॥ १८ ॥
गुळनागरमण्डूरतिलांशान्मानतस्समान् ।
पिप्पलीद्विगुणां दद्यात् गुळिकां पाण्डुरोगिणे ॥ १९ ॥
व्योषादिगुळिका योज्या मण्डूरवटकास्तथा ।
भल्लातकस्य द्विगुणो गुळस्तद्विगुणास्तिलाः ॥ २० ॥
पिप्पली त्रिफला चैव विळङ्गश्च तिलैस्समाः ।
तल्लीढ्वा मधुसर्पिभ्यां शृङ्गिवेरशृतं पयः ॥ २१ ॥
पिबेदनु पुनर्जीर्णे चाश्नीयात् पयसौदनम् ।
हन्याद्वातोल्बणं पाण्डुश्चायं योगो हलीमकम् ॥ २२ ॥

सनागरं गवां क्षीरं कामिलायां प्रशस्यते ।
निम्बत्वगाद्यं प्रपिबेत् कषायं कामिलार्तिमान् ॥ २३ ॥
कृष्णं पिष्टनिभं यस्तु कामिलायां सृजेन्मलम् ।
कफरुद्धपथस्तस्य पित्तं कफहरैर्जयेत् ॥ २४ ॥
स्नेहप्रायं पवनजे स्निग्धशीतं च पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णं मिश्रं मिश्रे प्रयोजयेत् ॥ २५ ॥
मृदं निर्घातयेत् कायात् तीक्ष्णैस्संशोधनैः पुरः ।
बलाधानाय सर्पींषि शुद्धकोष्ठस्य योजयेत् ॥ २६ ॥
व्योषबिल्वादिकं सर्पिः शस्तं पाण्डौ मृदुद्भवे ।
मृद्द्वेषणाय तल्लौल्ये वितरेद् भावितां मृदम् ॥ २७ ॥
वेल्लेन निम्बप्रसवैः पाठया मूर्वयाथवा ।
कनीयःपञ्चमूलाम्बु शस्यते पानभोजने ॥ २८ ॥
रूक्षशीतगुरुस्वादुव्यायामचलनिग्रहैः ।
कफसम्मूर्च्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥ २९ ॥
हारिद्रमूत्रनेत्रत्वक्श्वेतवर्चास्ततो नरः ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥ ३० ॥
दौर्बल्याल्पाग्निपार्श्वार्तिहिध्माश्वासारुचिज्वरैः ।
रसैस्तं रूक्षकट्वम्लैः कुलस्थोत्थैश्च भोजयेत् ॥ ३१ ॥
भृशाम्लतीक्ष्णकटुकलवणोष्णं च शस्यते ।
सबीजपूरकरसं लिह्याद्व्योषं तथाशयम् ॥ ३२ ॥
स्वं पित्तमेति तेनास्य शकृदप्यनुरज्यते ।
वायुश्च याति प्रशमं पुनः कामिलिको विधिः ॥ ३३ ॥
तैलमभ्यञ्जने देयं भृङ्गाद्यं वामृतादिकम् ।

(शोफनिदानम्)

पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिस्सिराः ॥ ३४ ॥
नीत्वा रुद्धगतिस्तैर्हि कुर्युस्त्वङ्मांससंश्रयम् ।
उत्सेधं संहतं शोफं तमाहुर्निचयादतः ॥ ३५ ॥
सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ।
दोषैः पृथग् द्वयैस्सर्वैरभिघाताद्विषादपि ॥ ३६ ॥

द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् ।
व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम् ॥ ३७ ॥

अतिमात्रं हे[illegible]रत्नं गुर्वम्लस्निग्धशीतलम् ।
लवणक्षारतीक्ष्णोष्णशाकाम्बुस्वप्नजागराः ॥ ३८ ॥

पाण्डुवीसर्पगर्भाद्या मिथ्याचारास्तथापरे ।
ऊर्ध्वं कुर्वन्ति वक्षस्था दोषा वस्तिगतास्त्वधः ॥ ३९ ॥

शोफं मध्ये तु मध्यस्थास्सर्वैकाङ्गेषु तत्स्थिताः ।
तत्पूर्वरूपं दवथुस्सिरायामोऽङ्गगौरवम् ॥ ४० ॥

वाताच्छोफश्चलो रूक्षः खररोमारुणासितः ।
सङ्कोचस्पन्दहर्षार्तितोदभेदप्रसुप्तिमान् ॥ ४१ ॥

क्षिप्रोत्थानशमश्शीघ्रमुन्नमेत् पीडितस्तनुम् ।
स्निग्धोष्णमर्दनैश्शाम्येद्रात्रावल्पो दिवा महान् ॥ ४२ ॥

पीतरक्तासिताभासः पित्तादाताम्ररोमकृत् ।
शीघ्रानुसारप्रशमस्तृड्दाहज्वरवान् मृदुः ॥ ४३ ॥

कण्डूमान् पाण्डुरोमत्वक्कठिनश्शीतळो गुरुः ।
स्निग्धः स्थिरो रात्रिबलः चिरजन्मशमो हिमः ॥ ४४ ॥

आक्रान्तो नोन्नमेदाशु कफात्स्युर्द्वन्द्वजास्त्रयः ।
सङ्कराद्दोषलिङ्गानां निचयान्निचयात्मकः ॥ ४५ ॥

अभिघातेन शस्त्रादिपाताद्भल्लातकादिभिः ।
स्पर्शात्तीक्ष्णानिलावेशाच्छोफस्स्यात् पित्तलक्षणः ॥ ४६ ॥

विषजस्सविषप्राणिपरिसर्पणमूत्रणात् ।
विषवृक्षानिलस्पर्शान्नखदंष्ट्रानिपातनात् ॥ ४७ ॥

मृदुश्चलोऽवलम्बी च शीघ्रदाहरुजाकरः ।
नवोऽनुपद्रवश्शोफस्साध्योऽसाध्यः पुरेरितः ॥ ४८ ॥

(शोफचिकित्सा)

शोफे सर्वाङ्गगे सामे लघु भुक्त्वाम्भसा पिबेत् ।
कोष्णेन विजयाशुण्ठीशोफघ्नीदारुचूर्णितम् ॥ ४९ ॥

नागरातिविषादारुविळङ्गेन्द्रयवोषणम् ।
नवायसं वा दोषाढ्यः शुध्यै मूत्रहरीतकीम् ॥ ५० ॥

वराक्काथेन कटुकाकुम्भायस्त्र्यूषणानि वा ।
निरामो बद्धशमलः पिबेच्छ्वयथुपीडितः ॥ ५१ ॥

त्रिकटुत्रिवृतादन्तीचित्रकैस्साधितं पयः ।
शुण्ठ्यादिकं च पथ्याद्यं क्काथं वा नागरोद्भवम् ॥ ५२ ॥

हितं कृष्णादिकं चूर्णं सर्पिरार्द्रकसाधितम् ।
घृतं यवानिकाद्यं वा यथावस्थं प्रयोजयेत् ॥ ५३ ॥

पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम् ।
अल्पमल्पपटुस्नेहं भोजनं श्वयथोर्हितम् ॥ ५४ ॥

क्षारव्योषान्विता मौद्गाः कौलस्थाश्च रसा हिताः ।
दशमूलादिकं तैलमभ्यङ्गाय प्रयोजयेत् ॥ ५५ ॥

शैलेयादिगणो लेपे तैले स्नानजले हितः ।
पुनर्नवरसैस्तैलं मुस्ताकल्कं विपाचितम् ॥ ५६ ॥

तक्रयुक्तमथाभ्यङ्गात् पाण्डुशोफाविनाशनम् ।
अथाऽनिलोत्थे श्वयथौ मासार्धं त्रिवृतं पिबेत् ॥ ५७ ॥

तैलं वैरण्डजं वातविड्विबन्धे पयोयुतम् ।
स्वेदाभ्यङ्गान् समीरघ्नान् लेपमेकाङ्गजे पुनः ॥ ५८ ॥

मातुलुङ्गाग्निमन्थेन शुण्ठीहिंस्रामराह्वयैः ।
पैत्ते तिक्तं पिबेत् सर्पिर्न्यग्रोधाद्येन वा शृतम् ॥ ५९ ॥

क्षीरं तृड्दाहमोहेषु लेपाभ्यङ्गाश्च शीतळाः ।
आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ॥ ६० ॥

क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ।
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः ॥ ६१ ॥

प्रलेपा मर्दने युंज्यात्सुखोष्णा मूत्रकल्किताः ।
यथादोषं यथासन्नं शुद्धिरक्तावसेचने ॥ ६२ ॥

कुर्वीत मिश्रदोषेषु दोषोद्रेकवशात् क्रियाम् ।
अमृताद्यमजाज्याद्यं पिबेच्च क्षतजे पुनः ॥ ६३ ॥

शोधनं रक्तमोक्षं च लेपाद्याः सघृता हिमाः।
शोफे विषभवे सर्वं विषहारि च योजयेत्॥ ६४॥

गौडं दधि च पिष्टान्नं गुर्वसात्म्यं विदाहि च।
दिवास्वप्नं मैथुनं च मरुत्सेवां विवर्जयेत्॥ ६५॥

इति हृदयप्रिये द्वितीयखण्डे पाण्डुशोफचिकित्सितं नाम
त्रयोदशोऽध्यायः॥

---

## अथ चतुर्दशोऽध्यायः।

### (उदरनिदानम्।)

रोगास्सर्वेऽपि मन्देऽग्नौ नितरामुदराणि तु।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात्॥ १॥

ऊर्ध्वाधो धातवो रुध्वा वाहिनीरम्बुवाहिनीः।
प्राणाग्न्यपानान् सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः॥ २॥

आध्माप्य कुक्षिमुदरमष्टधा तच्च भिद्यते।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः॥ ३॥

तेनार्ताः शुष्कताल्वोष्ठाश्शूनपादकराननाः।
नष्टचेष्टाबलाहाराः कृशाः प्राध्मातकुक्षयः॥ ४॥

स्युः प्रेतरूपाः पुरुषा भाविनस्तस्य लक्षणम्।
क्षुद्विनाशो विदाहश्च जीर्णाजीर्णानभिज्ञता॥ ५॥

अल्पेऽपि चेष्टिते श्वासो विड्वृद्धिश्चाप्रवर्तनम्।
सर्वोदरेषु चाध्मानं शोफोऽन्ते चाम्बुसम्भवः॥ ६॥

मारुतो हृत्कटीनाभिपायुवंक्षणवेदनः।
सशब्दो निश्चरेन्मूत्रमल्पं स्याद्विरसं मुखम्॥ ७॥

तत्र वातोदरे शोफः पाणिपान्मुष्ककुक्षिषु।
पार्श्वोदरकटीपृष्ठनाभिरुक्पर्वभेदनम्॥ ८॥

शुष्ककासोऽङ्गमर्दोऽधोगुरुतातिमलग्रहः।
श्यावारुणत्वगादित्वमकस्माद्वृद्धिहानयः॥ ९॥

कृष्णारुणसिराव्याप्तिः काठिन्यं विविधा रुजः।
पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट्कटुकास्यताः॥ १०॥

भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ।
पीतताम्रसिरानद्धं सस्वेदं मृदु सोष्म च ॥ ११ ॥

श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम् ।
निद्रोत्क्लेशारुचिश्वासकासशुक्लत्वगादिता ॥ १२ ॥

उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ।
चिराभिवृद्धिः कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १३ ॥

मिश्रलिङ्गं त्रिदोषैस्स्यात् क्रूरं मूर्च्छाभ्रमान्वितम् ।
बाधते तच्च नितरां शीतवाताभ्रदर्शनैः ॥ १४ ॥

कर्शनातिव्यवायाद्यैः स्थानभ्रष्टो विवर्धते ।
प्लीहा यदा प्रवृद्धेन शोणितेनापि वा तदा ॥ १५ ॥

सोऽष्ठीलिवातिकठिनः प्रोन्नतः कूर्मपृष्ठवत् ।
क्रमेण वर्धमानश्च कुक्षावुदरमावहेत् ॥ १६ ॥

यकृतापि तथा विद्याद्विवर्णं चारुणं च वा ।
उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः ॥ १७ ॥

गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ।
पक्ष्मबालैस्सहान्नेन भुक्तैर्बद्धायने गुदे ॥ १८ ॥

अर्शोऽभिर्वाप्युदावर्तात् क्रुद्धोऽपानः करोति च ।
जठरं मूढवाताढ्यं पार्श्वहृन्नाभिरुक्करम् ॥ १९ ॥

भुक्तैरस्थ्यादिभिः शल्यैः सान्नैरत्यशनेन वा ।
भिद्यते पच्यते चान्त्रं तच्छिद्रैश्च स्रवेद्बहिः ॥ २० ॥

जलं शेषं च जठरे पूर्णं जठरमावहेत् ।
वर्धते तदधो नाभेराशु चैति जलात्मताम् ॥ २१ ॥

श्वासतृड्भ्रमसंयुक्तं प्राहुः छिद्रोदरं हि तत् ।
प्रवृत्तस्नेहपानादेस्सहसामांबुपायिनः ॥ २२ ॥

अत्यम्बुपानान्मन्दाग्नेः क्रुद्धः कफयुतो मरुत् ।
तदेव वर्धयेत्तोयं तेन स्यादुदरं महत् ॥ २३ ॥

कासश्वासारुचियुतं गुदस्रुतिरुजान्वितम् ।
तोयपूर्णदृतिस्पर्शं नानावर्णसिराततम् ॥ २४ ॥

जलोदरं महत्स्निग्धं स्थिरमावृत्तनाभि तत् ।
उपेक्षया च सर्वेषु सन्धिस्रोतोमुखान्यपि ॥ २५ ॥
दोषाः पक्त्वा द्रवीकुर्युस्तेन स्याच्च जलात्मकः ।
वातपित्तकफप्लीहसन्निपातदकोदरम् ॥ २६ ॥
कृच्छ्रं यथोत्तरं पक्षात् परं प्रायोऽपरे हतः ।
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ॥ २७ ॥
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ।

(उदरचिकित्सा)

दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ॥ २८ ॥
सम्भवत्युदरं तस्मान्नित्यं तत्र विरेचयेत् ।
पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा ॥ २९ ॥
मासं द्वौ वाथवा गव्यं मूत्रं माहिषमेव वा ।
दाहमूर्च्छाभितापे तु गोक्षीरेणाशनं हितम् ॥ ३० ॥
रूक्षे वातोत्तरे सर्पिर्ज्जठरघ्नं च योजयेत् ।
षट्पलं दशमूलाम्बु मस्त्वर्धाढकसाधितम् ॥ ३१ ॥
यद्वा मस्त्वाढके सिद्धं *नागरं त्रिफलायुतम् ।
प्रस्थं तैलघृताद्वातकफगुल्मोदरापहम् ॥ ३२ ॥
स्नेहाल्लब्धे बले शान्ते पवने च विरेचयेत् ।
पटोलमूलं त्रिफलां निशां वेल्लं च कार्षिकम् ॥ ३३ ॥
कम्पिल्यनीलिनीकुम्भभागान् द्वित्रिचतुर्गुणान् ।
पिबेत् संचूर्ण्य मूत्रेण शुद्धोऽद्याल्लघुदीपनम् ॥ ३४ ॥
यूषैरन्नं ततः क्षीरं सव्योषं षडहं पिबेत् ।
एवं पुनः पुनर्युक्तं हन्ति सर्वोदराण्यपि ॥ ३५ ॥
गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेत् कर्कन्धुमृद्वीकाकोलाम्भोमूत्रशीधुभिः ॥ ३६ ॥
चूर्णं नाराचकाख्यं वा कल्पोक्तं वा विरेचनम् ।
हरीतकीघृतं दद्याच्चूर्णं वा तृवृतादिकम् ॥ ३७ ॥
दधिमण्डाढके सिद्धं स्नुक्क्षीरपलकल्पितम् ।
घृतप्रस्थं मात्रया तु पिबेज्जठरशान्तये ॥ ३८ ॥

क्षीरद्रोणात् सुधाक्षीरप्रस्थार्धसहिताद्दधि ।
जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम् ॥ ३९ ॥

क्राथेन कल्केन विरेचनानां
सार्पिः श्रृतं स्नुक्पयसा समेतम् ।
विरेकयोगात् सकलोदराणि
प्रणाशयेज्ज्योतिरिवान्धकारम् ॥ ४० ॥

देवदार्वादिना लेपं वृश्चिकाल्यादि सेचनम् ।
अर्कादिकं च गोमूत्रे हितं लेपे च सेचने ॥ ४१ ॥

विरिक्तं म्लानमुदरं स्वेदितं साल्वलादिभिः ।
वाससा वेष्टयेदेवं वायुर्नाध्मापयेत पुनः ॥ ४२ ॥

आरग्वधप्रकथितः कषायः
सर्वोदरान्तं कुरुते दशाहात् ।
तथाभयांभः कणरेणुमिश्रं
कृष्णाभयैरण्डशिफाश्रृतं च ॥ ४३ ॥

पिप्पलीकल्कमेकं वा पिबेत् प्रातः सुखाम्बुना ।
जठराणां निवृत्त्यर्थं क्षीराशी वा शिलाजतु ॥ ४४ ॥

इति सामान्यतः प्रोक्तमथ वातोत्तरोदरे ।
स्निग्धस्विन्नविरिक्तस्य वातघ्ना वस्तयो हिताः ॥ ४५ ॥

अविरेच्यस्य शमना वस्तिक्षीरघृतादयः ।
पित्ते तु स्वादुवर्गेण सिद्धं स्यात् स्नेहने घृतम् ॥ ४६ ॥

त्रिफलात्रिवृताश्यामापक्वं सर्पिर्विरेचने ।
पित्तघ्ना वस्तयोऽपीष्टा जठराग्निबले सति ॥ ४७ ॥

वत्सकादिविपक्वेन कफे संस्नेह्य सर्पिषा ।
स्विन्नं स्नुक्क्षीरसिद्धेन बलवन्तं विरेचयेत् ॥ ४८ ॥

मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हितम् ।
मुष्ककादिविपक्वेन स्नेहेनान्वासयेदपि ॥ ४९ ॥

भोजनं व्योषसिद्धेन कौलत्थेन रसेन वा ।
क्षारं हिङ्ग्वादिकं दद्यात् कफस्त्यानस्थिरोदरे ॥ ५० ॥

उपनाह्य समिद्धार्थकिण्वैर्वीजैश्च मूलकान् ।
कल्कितैरुदरस्वेदमभीक्ष्णं चास्य योजयेत् ॥ ५१ ॥

सन्निपातोदरं कुर्यान्नातिक्षीणबलानले ।
दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥ ५२ ॥

क्रियातिवृत्ते जठरे त्रिदोषे तु विशेषतः ।
दद्यादापृच्छ्य तज्ज्ञातीन् पातुं मद्येन कल्कितम् ॥ ५३ ॥

मूलं काकादनीगुञ्जाकरवीरकसम्भवम् ।
पानभोजनसंयुक्तं दद्याद्वा स्थावरं विषम् ॥ ५४ ॥

तेनास्यदोषसङ्घातः स्थिरो लीनो विमार्गगः ।
बहिः प्रवर्तते भिन्नो विषेणाशु प्रमाथिना ॥ ५५ ॥

तथा व्रजत्यगदतां शरीरान्तरमेव वा ।
हृतदोषन्तु शीताम्बुस्नातं तं पाययेत् पयः ॥ ५६ ॥

वास्तुकादिविपक्वेन मांसं पेयादि कल्पयेत् ।
प्लीहोदरे तु पूर्वोक्तं प्लीहरोगचिकित्सितम् ॥ ५७ ॥

स्निग्धस्विन्नस्य भुक्तस्य वामे बाहौ सिराव्यधम् ।
प्रयुञ्जीत भिषक् पश्चाद्यथादोषं यथाबलम् ॥ ५८ ॥

पिप्पलीनागराद्यं च दद्याद्रौहीतकाभयम् ।
रौहीतकादिसर्पिश्च क्षारसर्पिश्च योजयेत् ॥ ५९ ॥

अशान्तौ गुल्मविधिना योजयेदग्निकर्म च ।
तैलाक्लिप्तैः प्रमृदितैः पत्रैर्बदरसम्भवैः ॥ ६० ॥

नद्धोऽनु मुसलेनाथ प्लीहा नश्यति पीडितः ।
अम्लाम्लपिच्छासलिले प्लीह्नि वातकफोल्बणे ॥ ६१ ॥

पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ।
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ॥ ६२ ॥

यकृति प्लीहवत्कर्म दक्षिणे तु भुजे सिराम् ।
स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ॥ ६३ ॥

सतैललवणं दद्यान्निरूहं सानुवासनम् ।
उदावर्तहरं कर्म कुर्याद्बद्धोऽनिलापहम् ॥ ६४ ॥

बद्धोदरनिवृत्त्यर्थमर्शःकर्मविचारयेत् ।
कृष्णालशुनपथ्यानां पाक्यमेरण्डतैलवत् ॥ ६५ ॥

पिबतो विलयं याति प्लीहबद्धोदरं ध्रुवम् ।
छिद्रोदरमृते स्वेदं श्लेष्मोदरवदाचरेत् ॥ ६६ ॥

जातं जातं जलं स्राव्यमेवं तद्यापयेद् भिषक् ।
सौभाञ्जनस्य निष्क्वाथं सर्पिस्सैन्धवसंयुतम् ॥ ६७ ॥

क्षतोदरे प्रयुञ्जीत कर्मान्तर्विद्रधीरितम् ।
अपां दोषहराण्यादौ योजयेदुदकोदरे ॥ ६८ ॥

मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ।
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ॥ ६९ ॥

क्षारादिगुळिकां दद्याद्विशेषेण जलोदरे ।
हितं गोधूममुद्गाद्यमशने पानकल्पने ॥ ७० ॥

तत्तद्दोषापहैस्सिद्धमौषधैश्च विधीयते ।
इत्यशान्तौ तु सजले जठरे तर्जनं हितम् ॥ ७१ ॥

वातघ्नतैलैः स्निग्धस्य स्विन्नस्योष्णाम्बुना भिषक् ।
वस्त्रेण वेष्टिते कुक्षौ नाभितश्चतुरङ्गुलात् ॥ ७२ ॥

वामे पार्श्वे तु जठरं मुक्त्वा भित्वाङ्गुलान्तरम् ।
निधाय नाळीं तत्राधः स्रावयेदर्धमम्भसः ॥ ७३ ॥

अथास्य नाळीमाकृष्य तैलेन लवणेन च ।
व्रणमभ्यज्य बध्वा च वेष्टयेद्वाससोदरम् ॥ ७४ ॥

तृतीयेऽह्नि चतुर्थे वा यावद्वा षोडशं दिनम् ।
तस्य विश्रम्य विश्रम्य स्रावयेदल्पशो जलम् ॥ ७५ ॥

विवेष्टयेत् गाढतरं जठरं च श्लथाश्लथम् ।
निस्स्रुते लङ्घितः पेयामस्नेहलवणां पिबेत् ॥ ७६ ॥

स्यात् क्षीरवृत्तिष्षण्मासान् त्रीन् पेयां पयसा पिबेत् ।
त्रींश्चान्यान् पयसैवाद्यात् जीर्णश्यामाककोद्रवैः ॥ ७७ ॥

हिताहारो जयेद्वर्षात् क्रमेण सलिलोदरम् ।
प्रयोगाणां च सर्वेषामन्ते क्षीरं प्रयोजयेत् ॥ ७८ ॥
क्षीणे शल्यं दोषहरं धातुस्थैर्यकरं च यत् ।

इति हृदयप्रिये द्वितीयखण्डे उदरचिकित्सितं नाम
चतुर्दशोऽध्यायः ॥

---

अथ पञ्चदशोऽध्यायः ।

(विसर्पनिदानम्)

स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत् ।
त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात् ॥ १ ॥
यथोत्तरं च दुस्साधाः तत्र दोषा यथायथम् ।
प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः ॥ २ ॥
देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः ।
बहिस्था द्वितये द्विस्था विद्यात्तत्रान्तराश्रयम् ॥ ३ ॥
मर्मोपतापात् संमोहादयनानां विघट्टनात् ।
तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ॥ ४ ॥
आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात् ।
तत्र वातात् परीसर्पो वातज्वरसमव्यथः ॥ ५ ॥
शोफस्फुरणनिस्तोदभेदाऽऽयामार्तिहर्षवान् ।
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥ ६ ॥
कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ।
स्वदोषलिङ्गैश्चीयेत सर्वः स्फोटैरुपेक्षितः ॥ ७ ॥
ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम् ।
वातपित्ताद् ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ॥ ८ ॥
अस्थिभेदाग्निसदनतमकारोचकैर्युतः ।
शान्ताङ्गारासिताङ्गोऽपि दीप्ताङ्गारावृताङ्गवत् ॥ ९ ॥
अरत्यनिद्रा श्वासाढ्यः सोऽग्निवीसर्प उच्यते ।
वायुः कफं शोणितं वा दूषयित्वा खरात्मनाम् ॥ १० ॥

ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ।
श्वासकासातिसारास्य शोफहिध्मामदभ्रमैः ॥ ११ ॥
युक्तां मूर्च्छाङ्गभङ्गाद्यैर्ग्रन्थिवीसर्पसंज्ञिताम् ।
कफपित्तात् कर्दमाख्यो विसर्पः स्यात् स नातिरुक् ॥१२॥
रक्तपीतासितैर्युक्तः पिटकैस्तीव्रपाकवान् ।
शिरोरुग्ज्वरमूर्च्छार्तैर्युक्तः कुणपगन्धवान् ॥ १३ ॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणम् ।
सर्वलक्षणसंयुक्तं विद्याद्दोषत्रयात्मकम् ॥ १४ ॥
क्षतेन मारुतः क्रुद्धः कुलत्थसदृशैश्चितम् ।
स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ॥ १५ ॥
रक्तं पित्तान्वितः कुर्याद्विद्यात्तं क्षतसंज्ञितम् ।
पृथग् दोषैस्त्रयस्साध्या द्वन्द्वजाश्चानुपद्रवाः ॥ १६ ॥
असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मगाः ।
शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः ॥ १७ ॥

(विसर्पचिकित्सा)

आदावेव विसर्पेषु हितं लङ्घनरूक्षणम् ।
रक्तावसेको वमनं विरेकः स्नेहनं तु न ॥ १८ ॥
प्रच्छर्दनं विसर्पघ्नं सयष्टीन्द्रयवं फलम् ।
पटोलपिप्पलीनिम्बपल्लवैर्वा समन्वितम् ॥ १९ ॥
विरेचनं त्रिवृच्चूर्णं कल्प्यं द्राक्षावरारसैः ।
त्र्यायन्त्याश्च विशुद्धस्य दोषेऽल्पे शमनं हितम् ॥ २० ॥
शीतोत्पलाभ्यां क्वाथस्स्यान्मुस्तानिम्बपटोलकैः ।
धात्रीगोपीसेव्यमुस्तैः पटोलादिगणेन वा ॥ २१ ॥
मुस्तारिष्टादिकं क्वाथं पिबेद्दार्व्यादिमेव वा ।
घृतं तिक्तं महातिक्तं त्रायमाणाघृतं हितम् ॥ २२ ॥
त्रिफलां सामृतासारां नवनीतेन भक्षयेत् ।
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ॥ २३ ॥
अन्तश्शुद्धे हृते रक्ते प्रलेपान् कल्पयेद्बहिः ।
शताह्वामुस्तवाराहीवंशार्तगळधान्यकम् ॥ २४ ॥

सुराह्वं कृष्णगन्धा च कुष्ठं चालेपनं चले।
क्षीरतैलविमिश्रेण वाते सेकश्च सर्पिषा ॥ २५ ॥
न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकः।
शतधौतघृतं योज्यं तथा गोपात्मजादिकम् ॥ २६ ॥
मुक्ताप्रवाळशङ्खश्च शुक्तिगैरिकमाक्षिकम्।
श्लेष्मणि त्रिफलाद्येन धवाद्येन प्रलेपनम् ॥ २७ ॥
वरणाद्यं तथा योज्यं शिरीषकुसुमं तथा।
एभिरेवौषधैः कुर्याद्वायौ लेपं घृताधिकम् ॥ २८ ॥
शतधौतघृतेनाग्निं प्रदिह्यात्केवलेन वा।
सेचयेद् घृतमण्डेन शीतेन मधुकाम्बुना ॥ २९ ॥
शीताम्भसा वा क्षीरेण सेकस्तिक्तघृतेन वा।
ग्रन्थ्याख्ये रक्तपित्तघ्नं कफानिलहरं हितम् ॥ ३० ॥
पिण्डस्वेदोपनाहाश्च दन्त्याद्येन च लेपनत्।
ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति ॥ ३१ ॥
दाहः क्षारादिना योज्यः पक्वे दारणमेव वा।
व्रणे यथायथं योज्यं रोपणं कर्दमे पुनः ॥ ३२ ॥
दूर्वारसघृतं योज्यं लेपे चौदुम्बरादिकः।
अभ्यङ्गे पञ्चवल्काद्यं तैलं दूर्वादिकं तथा ॥ ३३ ॥
शीतं क्षीरित्वगाद्यैश्च प्रसेकादौ जलं हितम्।
विदध्यात् कुष्ठवत् पूर्वं मध्यतो रक्तपित्तवत् ॥ ३४ ॥
तथान्ते व्रणवत् सर्वं विसर्पाणां चिकित्सितम्।

(मसूरिनिदानम्)

मसूराकृतिसंस्थानास्सर्वगात्रसमाश्रिताः ॥ ३५ ॥
मसूरिकेति विज्ञेयाः पिटका ज्वरसंयुताः।
दोषैः पृथक् शोणितेन संसर्गात् सन्निपाततः ॥ ३६ ॥
तत्पूर्वं सन्धिविश्लेषज्वरारुचिशिरोरुजः।
अनवस्थितपाकादिरुजा श्यावा च वातजा ॥ ३७ ॥
सदाहा पित्तजा शीघ्रपाका सर्षपसन्निभा।
चिरपाका च कठिना श्लेष्मजा कण्डुसंयुता ॥ ३८ ॥

रक्तजा रक्तवर्णा स्यात् तीव्रदाहा द्विदोषजाः ।
द्विदोषालिङ्गैः कृच्छ्रा स्यादसाध्या च त्रिदोषजा ॥ ३९ ॥

विदाहकम्पातिरुजातिसारै-
हिक्कातितृष्णारुचिश्वासमोहैः ।
रक्तान्विता हन्ति मसूरिकान्त-
र्मूर्च्छा च बाह्ये किणसन्निभासून् ॥ ४० ॥

(मसूरिकाचिकित्सा)

मसूरिकाप्राग्रूपेषु लङ्घनं वमनं ततः ।
कफाधिके विरेकस्तु सर्वेष्वादौ प्रशस्यते ॥ ४१ ॥
पित्तवीसर्पवच्चात्र चिकित्सापि विधीयते ।
शुण्ठ्याद्यं शारिबाद्यं च चन्दनाद्यं जलं पिबेत् ॥ ४२
तत्तद्रोगानुबन्धे स्यादनुष्णैस्तत्प्रतिक्रिया ।
धात्रीं चन्दनमूर्वारुबीजं गुञ्जाफलं पिबेत् ॥ ४३ ॥
तण्डुलीयकसंयुक्तं नोद्भवन्ति मसूरिकाः ।
ब्राह्मीरसं सितायुक्तं जयेत् सर्वां मसूरिकाम् ॥ ४४ ॥
कदलीकन्दजक्काथो विजयेत मसूरिकाम् ।
व्रणोद्भवे निम्बपत्रैर्निशायुक्तैर्विचूर्णयेत् ॥ ४५ ॥
मसूरिकाप्रशान्त्यर्थं भद्रकालीं च पूजयेत् ।

(विस्फोटनिदानम्)

*विस्फोटाः पित्तसन्दुष्टरसदोषसमुद्भवाः ॥ ४६ ॥

(विस्फोटचिकित्सा)

दाहोषासहिता,स्तेषु पित्तवीसर्पवत् क्रिया ।
हितं कुमारीतैलं च त्रायमाणादिकं जलम् ॥ ४७ ॥

(शीतपित्तनिदानम्)

विस्तीर्णैर्मण्डलैः कोठैर्बहलैः शोणितप्रभैः ।
तनुं पित्तकफौ क्रुद्धौ तनुतः कण्डुसंयुतैः ॥ ४८ ॥
शीतपित्तमिति प्राहुरम्लपित्तं च तं गदम् ।

---

*विस्फोटकास्तु सन्दुष्टरसदोषसमुद्भवाः इति पाठभेदः.

(शीतपित्तचिकित्सा)

यवधात्रीवृषैः क्वाथं पिबेद्वा तिक्तकं तथा ॥ ४९ ॥
अमृताद्यं घृतयुतं लिम्पेत् पित्तकफापहैः ।

(कुष्ठनिदानम्)

पापैरपथ्यैश्च मलास्तिरश्चीनसिराश्रयाः ॥ ५० ॥
त्वग्लसीकामिषादीनि क्रमात् सन्दूष्य कुर्वते ।
त्वग्दोषं कुत्सितं क्रूरं दुष्टाः कुष्ठमुशन्ति तत् ॥ ५१ ॥
कुष्ठानि सप्तधा दोषैः पृथङ्मिश्रैस्समागतैः ।
नाम्ना स्युरष्टादशधा वक्ष्यन्ते तानि च क्रमात् ॥ ५२ ॥
वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात् ।
मण्डलाख्यं विचर्ची च ऋश्याख्यं वातपित्तजम् ॥ ५३ ॥
चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः ।
वातश्लेष्मोत्तराः श्लेष्मपित्ताद्दद्रुशतारुषी ॥ ५४ ॥
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ।
सर्वैस्स्यात् काकनं पूर्वं त्रिकं दद्रु सकाकनम् ॥ ५५ ॥
पुण्डरीकर्श्यजिह्वे च महाकुष्ठानि सप्त तु ।
कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ ५६ ॥
तोदवच्चासमाकारं कापालं शीघ्रसर्पि च ।
पक्वोदुम्बरताम्रत्वक् क्लेददाहरुजान्वितम् ॥ ५७ ॥
आशूत्थानावदरणक्रिमि विद्यादुदुम्बरम् ।
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तं तथोन्नतम् ॥ ५८ ॥
बहुक्रिमिस्रुतियुतं बहुकण्डु च मण्डलम् ।
सकण्डूपिटका श्यामा लसीकाढ्या विचर्चिका ॥ ५९ ॥
रक्तान्तं श्यावमध्यं च तोददाहरुजान्वितम् ।
पिटकैः कठिनैर्व्याप्तमृश्यजिह्वं बहुक्रिमि ॥ ६० ॥
हस्तिचर्मखरस्पर्शं चर्मकुष्ठमुदीरितम् ।
एकाख्यं कृष्णमस्वेदं विस्तीर्णाश्रितमेव च ॥ ६१ ॥

किटिभं किणरूक्षं च कण्डूमत् परुषासितम् ।
सिध्मं रूक्षं तनु श्वेतं घृष्टं तत्तु रजः किरेत् ॥ ६२ ॥

रक्तैरलसकं श्यामं पिटकैः कण्डुसंयुतैः ।
रुजाधिकाः पाणिपाददार्यः प्रोक्ता विपादिकाः ॥ ६३ ॥

रक्तगन्धा सिता दद्रूः कण्डूलोत्सन्नमण्डला ।
स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम् ॥ ६४ ॥

शतारुः क्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च ।
रक्तान्तमन्तरापाण्डु कण्डूदाहरुजान्वितम् ॥ ६५ ॥

सोत्सेधं पुण्डरीकं स्यात् सस्फोटं शीघ्रभेदि च ।
सितारुणैस्तनुत्वग्भिः स्फोटैर्विस्फोटमावृतम् ॥ ६६ ॥

पामास्तु कण्डूरुक्क्लेदैः प्रायः स्फिक्पाणिकोर्परे ।
बह्व्यः कृष्णारुणाः स्फोटाः सस्फोटं स्पर्शनासहम् ॥ ६७ ॥

कण्डूषा तोददाहाढ्यं रक्तं चर्मतलं स्मृतम् ।
नैकवर्णं काकनं स्यात्तीव्ररुक् सर्वलक्षणम् ॥ ६८ ॥

तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ।
स्वेदस्वापश्वयथवः शोणिते पिशिते पुनः ॥ ६९ ॥

पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम् ।
कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि ॥ ७० ॥

नासाभंगोऽस्थिमज्जस्थे नेत्ररागस्स्वरक्षयः ।
क्षते च कृमयः शुक्ले स्वदारापत्यबाधनम् ॥ ७१ ॥

सर्वदोषोद्भवं त्याज्यं शुक्रमज्जास्थिगं च यत् ।
याप्यं मेदोगतं कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ॥ ७२ ॥

अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ।

(कुष्ठचिकित्सा)

कुष्ठिनं स्नेहपानेन पूर्वं सर्वमुपाचरेत् ॥ ७३ ॥

तत्र वातोत्तरे तैलं घृतं वा साधितं हितम् ।
दशमूलामृतैरण्डशार्ङ्गेष्टामेषशृङ्गिभिः ॥ ७४ ॥

आरग्वधस्य मूलेन शतकृत्वश्शृतं घृतम् ।
पिबेत् कुष्ठं जयत्याशु पिबेत् सखदिरं जलम् ॥ ७५ ॥
तिक्तकं च महातिक्तं हितं गुल्गुलुतिक्तकम् ।
तैलं दिनेशवल्याद्यं पञ्चवल्कादिकं तथा ॥ ७६ ॥
तत्तद्दोषहरैस्सिद्धमभ्यङ्गार्थं च योजयेत् ।
स्निग्धस्य शोधनं कार्यं विसर्पविहितौषधैः ॥ ७७ ॥
लेहेन माणिभद्रेण पटोलादिजलेन वा ।
ललाटहस्तपादेषु सिराश्चास्यविमोक्षयेत् ॥ ७८ ॥
प्रच्छानमल्पके कुष्ठे शृङ्गाद्याश्च यथायथम् ।
स्नेहैराप्याययेच्चैनं कुष्ठैर्नरन्तरान्नरा ॥ ७९ ॥
एवं निर्हृतदोषस्य कुष्ठे नष्टप्रतिष्ठके ।
खदिराद्यं जलं दद्यादशनाद्यं यथायथम् ॥ ८० ॥
वज्रकं वा घृतं तद्वन्महावज्रकमेव वा ।
काकोदुम्बरिकावेल्लनिम्बाब्दव्योषकल्कवान् ॥ ८१ ॥
हन्ति वृक्षकनिर्यूहः पानात् सर्वत्वगामयान् ।
वरा विलङ्गकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः ॥ ८२ ॥
कुटचाग्न्यादि पथ्यां वा लिह्याच्चन्द्रकलादिकम् ।
पथ्यागुळतिलैः पिण्डी कुष्ठं सारुष्करैर्जयेत् ॥ ८३ ॥
गुळारुष्करजन्तुघ्नसोमराजीकृवा तथा ।
सितातैलकृमिघ्नाग्निधान्ययोमलपिप्पलीः ॥ ८४ ॥
लिहानस्सर्वकुष्ठानि जयत्यतिगुरूण्यपि ।
रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ॥ ८५ ॥
भल्लातकं वाकुचिकां वह्निमूलं शिलाजतु ।
इत्यान्तरे जिते दोषे प्रलेपान् बहिराचरेत् ॥ ८६ ॥
न चेद्विवर्धते कुष्ठमुत्क्लिष्टं तीक्ष्णलेपनैः ।
कठिनानां स्थिराणां च पोट्टलैः स्वेदनं हितम् ॥ ८७ ॥
स्विन्ने च लिखिते शस्त्रैः कुष्ठे कुर्याच्च लेपनम् ।
स्पर्शेन्द्रियविहीने तु हितः क्षारो हृतेऽसृजि ॥ ८८ ॥

मूलैः शम्याककुटचानिम्बाग्निकरवीरजैः ।
दर्वीप्रलेपी गोमूत्रे क्वाथो लेपेन कुष्ठहा ॥ ८९ ॥
श्वेतादिकैश्च निम्बाद्यैर्मुस्ताद्यैर्लेपनं हितम् ।
गुल्गुल्वाद्यं वज्रकं च महावज्रकमेव वा ॥ ९० ॥
लाक्षाद्यं जलवाप्याद्यं खदिराद्यं च कल्पयेत् ।
शतधौतघृतं तिक्तं कुष्ठे दाहोत्कटे हितम् ॥ ९१ ॥
एवं कार्यः प्रलेपोऽन्यो दोषदूष्यादि पश्यतः ।
मसूरयवगोधूममुद्गाश्शाकं च तिक्तकम् ॥ ९२ ॥
इन्दुराजियुतं तक्रं हितं भोज्येषु कुष्ठिनाम् ।
त्यजेत पट्टुकट्वम्लगुळमाषपयोदधि ॥ ९३ ॥
सूर्यादिदेवसेवां च भजेद्वृत्तिं च सात्त्विकीम् ।
कफविड्रक्तमोक्षं च विदधीतान्तरान्तरा ॥ ९४ ॥

इति हृदयप्रिये द्वितीयखण्डे विसर्पमसूरिकाविस्फोटशीतपित्त-
कुष्ठचिकित्सितं नाम पञ्चदशोऽध्यायः ॥

---

## अथ षोडशोऽध्यायः ।

### (श्वित्रनिदानम्)

कुष्ठैकसम्भवं श्वित्रं त्रिधातूद्भवसंश्रयम् ।
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ॥ १ ॥
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ।
सकण्डु च क्रमाद्रक्तमांसमेदस्सु चादिशेत् ॥ २ ॥
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ।
अशुक्लरोमाबहुळमसंसृष्टं मिथो नवम् ॥ ३ ॥
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ।
गुह्यपाणितलोष्ठेषु जातमप्यचिरन्तनम् ॥ ४ ॥
चरन्ति रोगाः स्पर्शाद्यैर्विशेषात्त्वर्मनेत्रजाः ।

### (श्वित्रचिकित्सा)

यत् कुष्ठादपि बीभत्सं शीघ्रं यात्यप्यसाध्यताम् ॥ ५ ॥

श्वित्रं तस्मात्तज्जयाय त्वरेत तरसा भिषक् ।
श्वित्रे संशोधनं पूर्वं प्रयोज्यं स्याद्विशेषतः ॥ ६ ॥

इष्यते स्रंसनार्थं च सगुळो मलयूरसः ।
पीत्वा तमभ्यक्ततनुर्भजेत सूर्यातपं भृशम् ॥ ७ ॥

विरिक्तश्च त्र्यहं पेयां पिपासुः प्रपिबेदपि ।
श्वित्र्यङ्गे निर्गतान् स्फोटान् प्रभिन्द्यात् कण्टकेन च ॥

निस्सारितेषु स्फोटेषु त्रिदिनं प्रपिबेत् प्रगे ।
मलयूं शतपुष्पां च प्रियङ्गुमसनं जले ॥ ९ ॥

निष्क्वाथ्य लिह्यात् क्षारं वा पालाशं फाणितान्वितम् ।

गव्यं मूत्रं चित्रकव्योषसिद्धं
सर्पिष्कुम्भे स्थापितं क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिणां पेयमेतत्
कार्यं चास्मै कुष्ठदृष्टं विधानम् ॥ १० ॥

मार्कवमथवा खादेद् भ्रष्टं तैलेन लोहपात्रस्थम् ॥ ११ ॥

बीजकशृतं च दुग्धं तदनु पिबेच्छ्वित्रनाशाय ।

काकोदुम्बरिकाद्यं वा पिबेत्क्वाथं मधुद्रुतम् ॥ १२ ॥

मधुसर्पिर्योगतुल्यं पिबेन्नीलीरसं प्रगे ।
क्षीरभुक् पथ्यसेवी च पक्षाच्छ्वित्राणि निर्जयेत् ॥ १३ ॥

निर्गुण्डीस्वरसोऽप्येवं पातव्यश्श्वित्रशान्तये ।
वराचूर्णं निम्बतैले लीढं श्वित्रं विनाशयेत् ॥ १४ ॥

शशाङ्करेखाचूर्णं च धात्रीरसयुतं तथा ।
दुग्धेन भोजनं चापि कुर्याद्देहोष्णसम्भवे ॥ १५ ॥

पूतीकाद्येन योगेन लेपो द्वैप्यादिको हितः ।
रात्रावित्यादिपद्योक्तः सवर्णकरणोऽपि च ॥ १६ ॥

व्योषाद्यं गन्धकाद्यं च क्षारं भल्लातकादिकम् ।
यथावस्थं प्रदद्याच्च लेपनाय किलासिने ॥ १७ ॥

शुध्या शोणितमोक्षैर्विरूक्षणैर्भोजनैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रणश्यति क्षीणपापस्य ॥ १८ ॥

(क्षुद्ररोगनिदानम्)

स्निग्धास्सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।
पिटकाः कफवाताभ्यां बालानामजगल्लिका ॥ १९ ॥

यवप्रख्या यवप्रख्या ताभ्यां मांसाश्रिता घनाः ।
शाल्मलीकण्टकाकाराः पिटकाः सरुजो घनाः ॥ २० ॥

मेदोगर्भा मुखे यूनां ताभ्यां च मुखदूषिकाः ।
ते पद्मकण्टका ज्ञेया यैः पद्ममिव कण्टकैः ॥ २१ ॥

चीयते नीरुजैस्तुल्यैश्शरीरं कफवातजैः।
त्वक्स्थानवेदनान् कृष्णान् तिलाभान् तिलकालकान् ॥

प्राहुर्मशांश्च महतश्चर्मकीलान् महत्तमान् ।
शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ॥ २३ ॥

श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ।
परुषं परुषस्पर्शं व्यङ्गं श्यावं च मारुतात् ॥ २४ ॥

पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात् ।
रक्ताद्रक्तान्तमाताम्रं सोषं चिमिचिमायते ॥ २५ ॥

असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ।
मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च ॥ २६ ॥

उत्कोठाख्यः स कोठस्तु ज्वराद्यनुगतो भवेत् ।
पाणिपादतले सन्धौ जत्रूर्ध्वं वोपचीयते ॥ २७ ॥

वल्मीकवच्छनैर्ग्रन्थिः तद्वद् बह्वणुभिर्मुखैः ।
रुग्दाहकण्डूक्लेदाढ्यैर्वल्मीकोऽसौ समस्तजः ॥ २८ ॥

एते स्युः क्षुद्ररोगाख्या पुनः केचिदथोत्तरे ।
वक्ष्यन्तेऽन्ये केचिदुक्तेष्वन्तर्भावादुपेक्षिताः ॥ २९ ॥

(क्षुद्ररोगचिकित्सा)

विस्रावयेज्जलौकोभिरपक्वामजगल्लिकाम् ।
स्वेदयेच्च यवप्रख्यां उभयत्रापि योजयेत् ॥ ३० ॥

दारुकुष्ठमनोह्वालैः पक्वे तु व्रणवत् क्रिया ।
लोध्रकुस्तुम्बुरुवचां दूषिकायां प्रलेपयेत ॥ ३१ ॥

वटपल्लवयुक्ता वा नाळिकेरोत्थशुक्तयः ।
अशान्तौ वमनं नस्यं ललाटे च सिराव्यधः ॥ ३२ ॥
निम्बाम्बुवान्तो निम्बाम्बुसाधितं पद्मकण्ठके ।
पिबेत् क्षौद्रयुतं सर्पिर्निम्बारग्वधलेपनम् ॥ ३३ ॥
सूर्यकान्तेनाग्निना वा क्षारेण तिलकाळकान् ।
दहेन्मशांश्चर्मकीलान् शस्त्रेणोत्कृत्य वा दहेत् ॥ ३४ ॥
व्यङ्गनीलिकयोः कुर्याद्यथासन्नं सिराव्यधम् ।
लेपयेत् क्षीरपिष्टैश्च क्षीरिवृक्षत्वगङ्कुरैः ॥ ३५ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।
रक्तचन्दनपूर्वेण यवाद्येनापि लेपनम् ॥ ३६ ॥
उत्कोठे कफपित्तोक्तं कोठे सर्वं च कौष्ठिकम् ।
प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ॥ ३७ ॥
वल्मीकं हस्तपादे तु वर्जयेदितरत् पुनः ।
शुद्धस्यास्त्रे हृते लिम्पेत्सपद्मावरेवतामृतैः ॥ ३८ ॥
श्यामाकुलत्थिकामूलदन्तीपललसक्तुभिः ।
पक्वे तु दुष्टमांसानि गतीस्सर्वाश्च शोधयेत् ॥ ३९ ॥
शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ।
पुनर्व्रणोदितं कार्यं यथादोषं चिकित्सितम् ॥ ४० ॥

(क्रिमिनिदानम्)

कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ।
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ॥ ४१ ॥
तिलप्रमाणवर्णास्स्युर्बाह्याः केशाम्बराश्रिताः ।
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥ ४२ ॥
द्विधा ते कोठपिटकाकण्डूगण्डान् प्रकुर्वते ।
कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ॥ ४३ ॥
मधुरान्नगुळक्षीरदधिशुक्तनवोदनैः ।
शकृज्जा बहुविड्धान्यपर्णशाकोलुकादिभिः ॥ ४४ ॥
कफादामाशये जाता वृद्धास्सर्पन्ति सर्वतः ।
पृथुवध्रानिभाः केचित् केचित् गण्डूपदोपमाः ॥ ४५ ॥

रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ।
श्वेतास्ताम्रावभासाश्च प्रवृद्धास्ते च कुर्वते ॥ ४६ ॥

हृल्लासमास्यस्रवणमविपाकमरोचकम् ।
मूर्च्छाछर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ४७ ॥

रक्तवाहिसिरोत्थाना रक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ॥ ४८ ॥

कुष्ठतुल्यक्रियाः प्रोक्ताः पुरीषोत्थाः परे पुनः ।
अधो विसर्पिणः प्रायो यदा वृद्धास्तु ते पुनः ॥ ४९ ॥

आमाशयोन्मुखाः कुर्युरुद्गारश्वासवेदनाः ।

(क्रिमिचिकित्सा)

स्निग्धस्विन्ने गुळक्षीरमत्स्याद्यैः क्रिमिणोदरे ॥ ५० ॥

उत्क्लेशितक्रिमिकफे शर्वरीं तां सुखोषिते ।
सुरसादिगणं मूत्रे क्राथयित्वार्धवारिणि ॥ ५१ ॥

तं कषायं कणागाळाक्रिमिजित्कल्कयोजितम् ।
सतैलं स्वर्जिकाक्षारं युञ्ज्याद्बस्तिं ततोऽहनि ॥ ५२ ॥

तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ।
त्रिवृत्कल्कं फलकणाकषायालुळितं ततः ॥ ५३ ॥

ऊर्ध्वाधश्शोधिते कुर्यात् पञ्चकोलयुतं क्रमम् ।
काले क्रिमिघ्नतैलेन ततस्तमनुवासयेत् ॥ ५४ ॥

शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम् ॥ ५५ ॥

विळङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।
पिबेत् सस्वर्जिकाक्षारैर्यवागूं तक्रसाधिताम् ॥ ५६ ॥

विळङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।
विळङ्गतण्डुलैर्युक्तमर्धांशैरातपस्थितम् ॥ ५७ ॥

दिनमारुष्करं तैलं पाने वस्तौ च योजयेत् ।
कारवल्लीदलरसः सतैलः क्रिमिपाण्डुजित् ॥ ५८ ॥

खदिराद्यं पलाशाद्यं रसोनाद्यं निशाघृतम् ।
पुरीषजेषु सुतरां दद्याद्बस्तिविरेचने ॥ ५९ ॥

शिरोविरेको वमनं शमनं कफजन्मसु ।
रक्तजानां कुष्ठहरं रोमादेष्वैन्द्रलुप्तिकम् ॥ ६० ॥

समासतोऽम्लं मधुरं वर्जयेन क्रिमिरोगवान् ।

इति हृदयप्रिये द्वितीयखण्डे श्वित्रक्षुद्रक्रिमिचिकित्सितं नाम षोडशोऽध्यायः ॥

---

अथ सप्तदशोऽध्यायः ।

(वातरोगनिदानम्)

सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।
अदुष्टदुष्टः पवनश्शरीरस्य विशेषतः ॥ १ ॥

तददुष्टौ प्रयत्नेन यतितव्यमतस्सदा ।
वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन वा ॥ २ ॥

तत्कोपादिह विख्याताः पञ्चविंशतिरामयाः ।
सनिदाना निरूप्यन्ते संक्षेपेण यथायथम् ॥ ३ ॥

यदा तु धमनीस्सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ।
तदङ्गमाक्षिपत्येष व्याधिराक्षेपकस्स्मृतः ॥ ४ ॥

अधः प्रतिहतो वायुर्व्रजन्नूर्ध्वं हृदाश्रिताः ।
नाळीः प्राप्य शिरो हृच्च पीडयन्नाक्षिपन् वपुः ॥ ५ ॥

नामयेच्चापवत्तस्य कृच्छ्राच्छ्वासोऽक्षिमीलनम् ।
विसंज्ञता कूजनं च प्रोक्तोऽसावपतन्त्रकः ॥ ६ ॥

स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।
तदा तदा यदि स्वास्थ्यं गर्भपातोद्भवस्तु सः ॥ ७ ॥

शोणितातिस्रवाज्जातः क्षताच्च दुरुपक्रमः ।
मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा ॥ ८ ॥

व्याप्नोति सकलं देहं जृम्भुरायम्यते तदा ।
अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः ॥ ९ ॥

करोति जृम्भां दशनं दशनानां कफोद्गमम् ।
अन्तरायाम इत्येष बाह्यायामस्तु तद्विधः ॥ १० ॥

देहस्य बहिरायामादुरस्तूत्क्षिप्य तत्र च ।
दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता ॥ ११ ॥

व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ।
व्यायच्छन्ति तनुं दोषास्सर्वामापादमस्तकम् ॥ १२ ॥

तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः ।
जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः ॥ १३ ॥

कुपितो हनुमूलस्थः स्रंसयित्वानिलो हनू ।
करोति विवृतास्यत्वमथवा संवृतास्यताम् ॥ १४ ॥

हनुस्रंसः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ।
वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ॥ १५ ॥

जिह्वास्तम्भस्सतेनान्नपानवाक्येष्वनीशता ।
शिरसा भारभरणादनृजोः क्षुतिजृम्भणात् ॥ १६ ॥

विषमादुपधानाच्च कठिनानां च चर्वणात् ।
वातळैर्वा मरुत् क्रुद्धो वक्त्रार्धं वक्रयत्यतः ॥ १७ ॥

वाक्सङ्गः स्तब्धनेत्रत्वं कम्पो मूर्ध्नः क्षवग्रहः ।
एकाक्षिमीलनं चास्य त्रासस्सुप्तस्य जायते ॥ १८ ॥

जत्रूर्ध्वं वा शरीरार्धे रुजा तीव्रा स्मृतिच्युतिः ।
तमाहुरर्दितं केचिदेकायाममथापरे ॥ १९ ॥

रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ।
रूक्षाः सवेदनाः कृष्णास्सोसाध्यः स्यात् सिराग्रहः ॥ २० ॥

गृहीत्वार्धं तनोर्वायुः सिरास्नायू विशोष्य च ।
पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोचयन् ॥ २१ ॥

कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ।
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ॥ २२ ॥

सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ।
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः ॥ २३ ॥
याप्यस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः ।
आमबद्धायनः कुर्यात् संस्तभ्याङ्गं कफान्वितः ॥ २४ ॥
असाध्यं हतसर्वाङ्गं दण्डवद्दण्डकं मरुत् ।
अंसमूलस्थितो वायुः सिरास्सङ्कोच्य तत्रगाः ॥ २५ ॥
बाहुप्रस्पन्दितहरं जनयत्यपबाहुकम् ।
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ॥ २६ ॥
बाहुचेष्टापहरणी विश्वभी नाम सा स्मृता ।
वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥ २७॥
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि ।
कलायखञ्जस्सयदि गत्यारम्भे प्रकम्पते ॥ २८ ॥
सक्थ्यस्थीनि प्रपूर्यामश्लेष्ममेदोयुतोऽनिलः ।
ऊरू स्तभ्नाति तेनेतौ गुरुशीतावचेतनौ ॥ २९ ॥
स्यातामूरुस्तम्भ एष युक्तश्छर्द्यरुचिज्वरैः ।
वातशोणितजश्शोफो जानुमध्ये महारुजः ॥ ३० ॥
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ।
रुक् पादे विषमन्यस्ते श्रमाद्वा जायते तदा ॥ ३१ ॥
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ।
तलं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता ॥ ३२ ॥
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ।
विश्वभी गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता ॥ ३३ ॥
हृष्येते चरणौ यस्मात् भवेतां च प्रसुप्तवत् ।
पादहर्षस्सविज्ञेयः कफमारुतकोपजः ॥ ३४ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ।
विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत् ॥ ३५ ॥
प्राधान्येनैवमुद्दिष्टा वातरोगा मरुत् पुनः ।
कुर्यात् पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनम् ॥ ३६ ॥

वर्चोमार्शोऽश्मशकृत्सङ्गमधःकाये चलो व्यथाम् ।
आमाशये तृड्वमथुश्वासकासविषूचिकाः ॥ ३७ ॥
कण्ठोपरोधमुद्गारं व्याधीनूर्ध्वं च नाभितः ।
त्वक्स्थः स्वापं वेदनाश्च चलः स्फुटनरूक्षते ॥ ३८ ॥
रक्ते तीव्ररुजां स्वापं तापं रागमरूंषि च ।
मांसमेदोगते ग्रन्थीन् तोदाढ्यानङ्गगौरवम् ॥ ३९ ॥
अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम् ।
मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं सततं रुजाम् ॥ ४० ॥
शुक्रस्थश्शीघ्रमुत्सर्गं सङ्गं वा गर्भवैकृतम् ।
सन्धिगश्चलनाशक्तिं रुजां शोफं च सन्धिषु ॥ ४१ ॥
सिरास्वाध्मानरिक्तत्वे सर्वगस्सर्ववेदनाः ।
पित्तेन श्लेष्मणा तद्वद्रक्ताद्यैर्वा च धातुभिः ॥ ४२ ॥
वायोरावरणं प्रोक्तमन्नेनापि मलादिभिः ।
तत्र वायुप्रदुष्टानां रक्तादीनां हि लक्षणम् ॥ ४३ ॥
*विज्ञेयं योगवाहित्वाद्वायोरवहितात्मना ।

(वातरोगचिकित्सा)

केवलं निरुपस्तम्भं स्नेहैरादावुपाचरेत् ॥ ४४ ॥
वायुं सर्पिर्वसामज्जतैलैः पानप्रलेपनैः ।
स्नेहस्वेदौ निवातं च स्थानं प्रावरणानि च ॥ ४५ ॥
रसाः पयः पायसं च स्वाद्वम्ललवणानि च ।
बृंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम् ॥ ४६ ॥
स्नेहावक्तं स्विन्नमङ्गन्तु स्यात् स्वकर्मकृते क्षमम् ।
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥ ४७ ॥
शक्यं कर्मण्यतां नेतुं किमु गात्राणि जीवताम् ।
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ॥ ४८ ॥
बलमग्निबलं पुष्टिं प्राणांश्चास्याभिवर्धयेत् ।
असकृत्तमतः स्नेहैः स्वेदैश्च प्रतिपालयेत् ॥ ४९ ॥

तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ।
विरेच्यं स्नेहसंयुक्तैर्मृदुभिश्च विशोधयेत् ॥ ५० ॥
पयसैरण्डतैलं वा पिबेद्वा सातलाघृतम् ।
दुर्बलो योऽविरेच्यस्स्यात्तं वस्तिभिरुपाचरेत् ॥ ५१ ॥
अथापतानकेनार्तमस्रस्ताक्षमवेदनम् ।
अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम् ॥ ५२ ॥
अखट्वाघातिनं चैव त्वरितं समुपाचरेत् ।
सुस्निग्धास्विन्नदेहस्य नस्यं स्रोतोविशुद्धये ॥ ५३ ॥

कृष्णाकृमिघ्नोषणशिग्रुबीज-
नस्यं विदध्यादपतन्त्रकार्ते ।
आक्षेपके चाप्यपतानके च
तीक्ष्णैः परैश्चाथ घृताच्छपानम् ॥ ५४ ॥

विदार्यादिगणक्काथं दधिक्षीररसैः पिबेत् ।
कुलत्थयवकोलानि भद्रदार्वादिकं गणम् ॥ ५५ ॥
निष्क्वाथ्यानूपमांसं च तेनाम्लैः पयसापि च ।
स्वादुस्कन्धप्रतीवापं महास्नेहं विपाचयेत् ॥ ५६ ॥
सेकाभ्यङ्गावगाहान्नपानानस्यानुवासनैः ।
स हन्ति वातं तद्वच्च तिल्वकादिघृतं हितम् ॥ ५७ ॥
हिङ्गुसौवर्चलं शुण्ठी डाडिमं साम्लवेतसम् ।
पिबेद्वा श्लेष्मपवनहृद्रोगोक्तं च शस्यते ॥ ५८ ॥
वेगान्तरेषु मूर्धानमसकृच्चास्य रेचयेत् ।
अवपीडैः प्रधमनैस्तीक्ष्णैः संज्ञां तथाप्नुयात् ॥ ५९ ॥
शुद्धेऽपतानेऽपतन्त्रे चाक्षेपे चाप्ययं विधिः ।
संसृष्टदोषे संसृष्टं यथावस्थं प्रयोजयेत् ॥ ६० ॥
आयामयोरर्दितवद्बाह्याभ्यन्तरयोः क्रिया ।
तैलद्रोण्यां च शयनमान्तरोऽत्र सुदुस्तरः ॥ ६१ ॥
विवर्णदन्तवदनस्स्रस्ताङ्गो नष्टचेतनः ।
प्रस्विन्नश्च धनुष्कम्पी दशरात्रं न जीवति ॥ ६२ ॥

मन्दे वेगे तु जीवेच्चेद्विकलाङ्गो भवेदपि ।
हनुस्रंसे हनू स्निग्धस्विन्ने स्वस्थानमानयेत् ॥ ६३ ॥
उन्नामयेच्च कुशलश्चिबुकं विवृते मुखे ।
नामयेत् संवृते शेषमेकायामवदाचरेत् ॥ ६४ ॥
जिह्वास्तम्भे यथावस्थं कार्यं वातचिकित्सितम् ।
अर्दिते नावनं मूर्धतैलं श्रोत्राक्षितर्पणम् ॥ ६५ ॥
सशोफे वमनं दाहरागयुक्ते सिराव्यधम् ।
स्नेहनं स्वेदनं युक्त्या पक्षाघाते विरेचनम् ॥ ६६ ॥
अपबाहौ हितं नस्यं स्नेहश्चौत्तरभक्तिकः ।
ऊरुस्तम्भे तु न स्वेदो नच संशोधनं हितम् ॥ ६७ ॥
श्लेष्मामदोषबाहुल्याद्युक्त्या तत्क्षपणान्यतः ।
कुर्याद्रूक्षोपचारस्य यवश्यामाककोद्रवाः ॥ ६८ ॥
शस्तास्स्युर्वत्सकादिश्च हरिद्रादिस्ससैन्धवः ।
आढ्यवाते सुखाम्भोभिः पेयः षड्धरणोऽथवा ॥ ६९ ॥
लिह्यात् क्षौद्रेण वा श्रेष्ठाचव्यतिक्ताकणाघनान् ।
कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ॥ ७० ॥
मूत्रैर्वा शीलयेत् पथ्यां गुल्गुलुं गिरिसम्भवम् ।
व्योषाग्निमुस्तात्रिफलाविळङ्गैर्गुल्गुलुं समम् ॥ ७१ ॥
खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ।
क्षारमूत्रान्वितान् स्वेदान् सेकानुद्वर्तनानि च ॥ ७२ ॥
कुर्याल्लिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ।
मूलैर्वाप्यर्कतर्कारीनिम्बजैस्सुरसाह्वयैः ॥ ७३ ॥
कफक्षयार्थं व्यायामे सह्ये चैनं प्रवर्तयेत् ।
श्लेष्ममेदःक्षये चात्र स्नेहादीनवचारयेत् ॥ ७४ ॥
स्थानदूष्यादि चालोच्य कुर्याद् शेषेष्वपि क्रियाम् ।
अष्टवर्गकृतं क्वाथं पिबेत्सहचरादिकम् ॥ ७५ ॥
दशमूलबलाद्यं वा रास्नासहचरादिकम् ।
क्वाथं प्रसारणीपूर्वं लशुनाद्यं तथा पिबेत् ॥ ७६ ॥

रास्नादिकं हितं सर्पिस्तथा गुग्गुलुतिक्तकम् ।
मुख्यं प्रसारणीतैलं तैलं धान्वन्तरं तथा ॥ ७७ ॥

बलाशताद्यं तैलं च दद्यात् सहचरादिकम् ।
पञ्चस्नेहं माषतैलं प्रभञ्जनविमर्दनम् ॥ ७८ ॥

कार्पासास्थ्यादिकं तैलं दशमूलादिकं तथा ।
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ॥ ७९ ॥

तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ।
स्नुह्याद्यं लिकुचाद्यं च तैलं नारायणाभिधम् ॥ ८० ॥

लशुनैर्वा कुलत्थैर्वा पोट्टळं वातनुत्परम् ।
पुन्नागाद्यैः पोट्टळं च लेपश्शुण्ठीवचादिकैः ॥ ८१ ॥

मूत्रधान्याम्लसम्पिष्टं मरिचं मारुतार्तिजित् ।
उग्रगन्धोषणात् कल्कस्तथैवानिलनाशनः ॥ ८२ ॥

अर्कमूलस्तथा योज्यो वचासर्षपसंयुतः ।
उक्तैः स्नेहपटूत्कृष्टैः कोष्णैरप्युपनाहयेत् ॥ ८३ ॥

पक्वाशयगते वायौ वस्तिः स्यादवपीडकः ।
आमाशयस्थे वमनं पाने षड्धरणाम्बु वा ॥ ८४ ॥

क्वाथं गन्धर्वहस्ताद्यं दीप्तेऽग्नौ वातिको विधिः ।
कोष्ठगे क्षारचूर्णाद्या हिताः पाचनदीपनाः ॥ ८५ ॥

हृत्स्थे पयः स्थिरासिद्धं शिरोवस्तिश्शिरोगते ।
निवातसंश्रयो नस्यं धूमः श्रोत्रादितर्पणम् ॥ ८६ ॥

स्वेदाभ्यङ्गादि च त्वक्स्थे रक्तस्थे रक्तमोक्षणम् ।
रेकः शीताः प्रदेहाश्च मांसमेदःस्थिते पुनः ॥ ८७ ॥

शमनानि निरूहाश्च स्नेहैर्मज्जास्थिगं जयेत् ।
बलशुक्लकरं चान्नं शुक्लस्थे पवने हितम् ॥ ८८ ॥

स्नावसन्धिसिराप्राप्ते स्नेहदाहोपनाहनम् ।
तैलैः संकुचितेऽभ्यङ्गो माषसैन्धवसाधितैः ॥ ८९ ॥

सर्वगे त्वपतानोक्तं *युक्त्या कुर्यात् क्रियाक्रमम् ।
वायोरावरणं येन कृतं पित्तादिनात्र च ॥ ९० ॥
तस्य वायोश्च विहिता क्रिया कार्या समासतः ॥ ९०½ ॥

(प्राणाद्यन्योन्यश्लेषेऽपि प्रतिकुर्याद्यथोदितम्)

इति हृदयप्रिये द्वितीयखण्डे वातचिकित्सितं नाम
सप्तदशोऽध्यायः ॥

---

अथाष्टादशोऽध्यायः ।

(वातरक्तनिदानम्)

विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम् ।
भजतां विधिहीनं च स्वप्नजागरमैथुनम् ॥ १ ॥
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ।
कुपितो वातलैर्वायुस्तद्रुद्धस्तत् प्रदूषयेत् ॥ २ ॥
वातशोणितमाहुस्तं पूर्वं पादौ स गच्छति ।
कदाचिद्धस्तमूलं वा कृत्स्नं देहं च धावति ॥ ३ ॥
पूर्वरूपं कुष्ठसमं तथा सादः श्लथाङ्गता ।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥ ४ ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ।
श्वयथुं भृशदाहोषं कुर्वन् सन्ध्यस्थिमज्जसु ॥ ५ ॥
भिन्दन्निव चरत्यन्तर्गतिभङ्गं करोति च ।
वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ॥ ६ ॥
शोफस्य रूक्षकृष्णत्वश्यावताष्टृद्धिहानयः ।
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ॥ ७ ॥
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ।
रक्ते शोफेऽतिरुक्तोदः ताम्रश्चिमिचिमायते ॥ ८ ॥
स्निग्धरूक्षैश्शमं नैति कण्डूक्लेदसमन्वितः ।
पित्ते विदाहस्सम्मोहः स्वेदो मूर्च्छामदस्सतृट् ॥ ९ ॥
स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्मता ।
कफेस्तैमित्यगुरुता सुप्तिः स्निग्धत्वशीतता ॥ १० ॥

---

* 'अर्दितोक्तं च कल्पयेदि'ति पाठभेदः.

कण्डूर्मन्दा च रुक् द्वन्द्वसर्वलिङ्गश्च सङ्करे ।
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ॥ ११ ॥
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्बुदकारि च ।

(वातरक्तचिकित्सा)

वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ॥ १२ ॥
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ।
रुग्रागतोददाहेषु जलौकोभिर्विनिर्हरेत् ॥ १३ ॥
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्दूयनान्विते ।
प्रच्छानेन सिराभिर्वा देशाद्देशान्तरं गते ॥ १४ ॥
रूक्षे वाताधिके ग्लानौ न हरेद्यदसृक्क्षयात् ।
कम्पस्नायुसिरारोगशोफाः स्युरनिलक्रुधा ॥ १५ ॥
स्निग्धे विरेचनं दद्यात् पथ्याक्वाथं घृतान्वितम् ।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा ॥ १६ ॥
क्षीरेणैरण्डतैलं वा हरेद्वा क्षीरवस्तिभिः ।
मलं वस्तिसमं नास्ति वातरक्तचिकित्सितम् ॥ १७ ॥
विशेषात् पायुपार्श्वोरुपर्वास्थिजठरार्तिषु ।
बलाशतावरीदारुदशमूलैस्सपीलुभिः ॥ १८ ॥
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः ।
पैत्ते पक्त्वा वरीतिक्तापटोलीत्रिफलामृताः ॥ १९ ॥
पिबेद् घृतं वा क्षीरं वा स्वादुतिक्तकसाधितम् ।
मुस्ताद्राक्षाहरिद्राणां पिबेत् क्वाथं कफोद्धणे ॥ २० ॥
सक्षौद्रं त्रिफलाया वा गुळूच्या वा यथायथम् ।
यथार्हस्नेहपीतं च वामितं मृदु रूक्षयेत् ॥ २१ ॥
कोकिलाक्षकानिर्यूहः पेयस्तच्छाकभोजिना ।
पञ्चमूलस्य धान्या वा रसे लेलीतकीं वसाम् ॥ २२ ॥
खुडं सुरूढमप्यङ्गे ब्रह्मचारी पिबन् जयेत् ।
रास्नादिक्वाथयुग्मं च शतावर्यादिकं पिबेत् ॥ २३ ॥
इत्याभ्यन्तरमुद्दिष्टं कर्म बाह्यमतः परम् ।
पिण्डतैलं चन्दनाद्यञ्चाभ्यङ्गाय प्रयोजयेत् ॥ २४ ॥

बलागुडूच्यादिकं वा मद्यादमृतादिकम् ।
दशमूलशृतं क्षीरं सद्यश्शूलनिवारणम् ॥ २५ ॥
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ।
दाहे तु शीतलैस्तद्वत् पयोभिस्तैलमिश्रितैः ॥ २६ ॥
निःक्वाथैर्जीवनीयानां पञ्चमूलस्य वा लघोः ।
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम् ॥ २७ ॥
सेचने लेपनं कार्यं मसूरोशीरपद्मकैः ।
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः ॥ २८ ॥
रागदाहोत्तरे रक्तं मोक्षयेच्चान्तरान्तरा ।
वातघ्नैस्साधितः स्निग्धः कृसरो मुद्गपायसः ॥ २९ ॥
तिलसर्षपपिण्डाश्च शूलघ्नमुपनाहनम् ।
गृहधूमादिकं शिग्रुबीजधान्याम्लवत्कफे ॥ ३० ॥
वातश्लेष्मोत्तरे कोष्णा लेपाः पित्तानिले पुनः ।
बलातैलं बहिश्चान्तः प्रयुक्तं वातरक्तनुत् ॥ ३१ ॥
मधुयष्ट्यादिकं तैलं वाताशन्याह्वयं तथा ।
रक्तपित्तातिवृध्यास्मिन् पक्के तु व्रणवत् क्रिया ॥ ३२ ॥

(व्रणनिदानम्)

व्रणो द्विधा निजागन्तुदुष्टशुद्धविभेदतः ।
निजो दोषैश्शरीरोत्थैरागन्तुर्बाह्यहेतुजः ॥ ३३ ॥
दोषैरधिष्ठितो दुष्टः शुद्धस्तैरनधिष्ठितः ।
पूतिपूयपरिस्रावः कण्डूरुत्सन्नतातिरुक् ॥ ३४ ॥
दीर्घकालस्थितिः स्नायुछन्नता दुष्टलक्षणम् ।
स पञ्चदशधा दोषैः सरक्तैस्तत्र मारुतात् ॥ ३५ ॥
श्यावकृष्णारुणो भस्मकपोतास्थिनिभोऽपि वा ।
निर्मांसस्तोदभेदाढ्यो मस्तुतुल्याल्पसंस्रुतिः ॥ ३६ ॥
पित्तेन क्षिप्रजः पीतो नीलो रागोष्मपाकवान् ।
क्षारोक्षितव्यथो मूत्रतैलभस्मोदकस्रुतिः ॥ ३७ ॥

कफेन पाण्डुः कण्डूमान् बहुश्वेतघनस्रुतिः ।
स्थूलोष्ठः कठिनः स्नायुसिराजालततोऽल्परुक् ॥ ३८ ॥
प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत् ।
वाजिस्थानसमो गन्धैर्युक्तो लिङ्गैश्च पैत्तिकैः ॥ ३९ ॥
द्वाभ्यां त्रिभिश्च सर्वैश्च विद्याल्लक्षणसङ्करात् ।
जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्ठपिटिकः समः ॥ ४० ॥
किञ्चिदुन्नतमध्यो वा व्रणश्शुद्धोऽनुपद्रवः ।
त्वगामिषसिरास्नायुसन्ध्यस्थीनि व्रणाशयाः ॥ ४१ ॥
कोष्ठो मर्म च तान्यष्टौ दुस्साधान्युत्तरोत्तरम् ।
भगन्दरोऽन्तर्वदनस्तथा कक्ष्यास्थिसंश्रितः ॥ ४२ ॥
मधुमेहे च कुष्ठे च व्रणः कृच्छ्रेण सिध्यति ।
क्षोभादशुद्धकोष्ठत्वात् अतिस्नेहाच्च रूक्षणात् ॥ ४३ ॥
सौहित्यात् कर्शनाच्चापि नैव साध्योऽपि रोहति ।
कपोतवर्णप्रतिमो यस्यान्तः क्लेदवर्जितः ॥ ४४ ॥
स्थिरश्च पिटकावान् यो रोहतीति तमादिशेत् ।

(व्रणचिकित्सा)

अथात्र शोफावस्थायां यथासन्नं विशोधनम् ॥ ४५ ॥
कुर्याच्छीतोपचारं च शोफाग्निस्तेन शाम्यति ।
शोफे व्रणे च कठिने विवर्णे वेदनान्विते ॥ ४६ ॥
विषयुक्ते विशेषेण जलजाद्यैर्हरेदसृक् ।
दुष्टास्रे विगते सद्यः शोफरागरुजां शमः ॥ ४७ ॥
शीतवीर्यैस्तदा पिष्टैः क्षीरेक्षुस्वरसद्रुतैः ।
शतधौतघृतोपेतैर्लिम्पेन्मुहुरशोपिभिः ॥ ४८ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
प्रलेपो भूरिसर्पिर्भिश्शोफनिर्वापणः परम् ॥ ४९ ॥
हृतरक्तोऽपि यः स्तब्धो भवेत् शोफो व्रणोऽपि वा ।
वाताद्वातकफाच्चैनं कोलाद्यैरुपनाहयेत् ॥ ५० ॥

अविदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते ।
सुविपक्वेऽप्यनिर्भिण्णे दारणं क्षार एव वा ॥ ५१ ॥
गुल्गुल्वतसिगोदन्तस्वर्णक्षीरिकपोतविट् ।
क्षारौषधानि क्षारश्च पक्वशोफविदारणः ॥ ५२ ॥
पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि ।
निःस्नेहैः पीडनद्रव्यैर्मुखवर्जं प्रपीडयेत् ॥ ५३ ॥
कळाययवगोधूममाषमुद्गहरेणवः ।
द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडने ॥ ५४ ॥
भृशदुष्टव्रणे योज्यौ मेहकुष्ठव्रणेषु च ।
सुरसारग्वधाद्यौ हि क्षालनाद्येषु सप्तसु ॥ ५५ ॥
अथवा क्षालने क्वाथः पटोलीनिम्बपत्रजः ।
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ५६ ॥
पटोलाद्यैर्हितो लेपो वर्त्या चापि विशोधयेत् ।
वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ॥ ५७ ॥
निर्वापयेत् भृशं शीतैः पित्तरक्तविषोद्भणान् ।
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ५८ ॥
कल्कं संरोपणं कुर्यात् तिलजं मधुसंयुतम् ।
अश्वगन्धामृतालोध्रं कट्फलं मधुयष्टिका ॥ ५९ ॥
समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ।
समानां स्थिरमांसानां त्वक्स्थानां चूर्णमिष्यते ॥ ६० ॥
ककुभोदुम्बराश्वत्थजम्बूकट्फललोध्रजैः ।
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ ६१ ॥
कांक्ष्याद्यैरपि लाक्षाद्यैर्जात्याद्यैरपि रोपयेत् ।
व्रणिनश्शस्त्रकर्मोक्तं पथ्यापथ्यान्नमादिशेत् ॥ ६२ ॥
द्वे पञ्चमूले वर्गश्च वातघ्नो वातिके हितः ।
न्यग्रोधपद्मकाद्यौ तु तद्वत् पित्तप्रदूषिते ॥ ६३ ॥
आरग्वधादिः श्लेष्मघ्नः कफे मिश्रस्तु मिश्रजे ।
एभिः प्रक्षाळनालेपघृततैलरसक्रियाः ॥ ६४ ॥

चूर्णो वर्तिश्च संयोज्यो व्रणे सप्त यथायथम् ।
कालेयकलताम्रास्थिहेमकालारसोत्तमैः ॥ ६५ ॥
लेपस्सगोमयरसः सवर्णकरणः परम् ।

(सद्योव्रणनिदानम् )

सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः ॥ ६६ ॥
घृष्टोऽवकृत्तोऽवलम्बी निपातीति चतुर्विधाः ।
घृष्टं चर्माणि भिन्ने स्यादवकृत्तं तथामिषे ॥ ६७ ॥
प्रायः छिन्नेऽवलम्ब्यस्थ्नि छिन्ने स्याच्च निपातितम् ।

(सद्योव्रणचिकित्सा)

सद्यस्सद्योव्रणं सिञ्चेदथ यष्ट्याह्वसर्पिषा ॥ ६८ ॥
तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ।
कषायशीतमधुरास्निग्धाः लेपाद्यो हिताः ॥ ६९ ॥
तदूष्मशान्तये चाथ सन्धानार्थं प्रयोजयेत् ।
मधुसर्पिश्च संरम्भे प्रततं रक्तमोक्षणम् ॥ ७० ॥
ऊर्ध्वाधश्शोधनं कार्यमुपवासश्च शस्यते ।
क्षतादतिस्रुते रक्ते वायौ क्रुद्धे रुजाकरे ॥ ७१ ॥
स्नेहपानं परीषेकस्वेदलेपोपनाहनम् ।
स्नेहवस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ ७२ ॥
इति साप्ताहिकः प्रोक्तस्सद्योव्रणहितो विधिः ।
सप्ताहात् गतवेगे तु व्रणोक्तं विधिमाचरेत् ॥ ७३ ॥
किं च घृष्टे रुजां जित्वा व्रणे चूर्णानि योजयेत् ।
कल्कादीन्यवकृत्ते तु सीवनं चावलम्बिनि ॥ ७४ ॥
यथास्थानं प्रापयित्वा बध्वा लेपादि योजयेत् ।
निपातिन्यप्येवमत्र भङ्गोक्तश्च विधिर्हितः ॥ ७५ ॥
सद्योव्रणहरं तैलं तालीसाद्यं प्रशस्यते ।
*मूढप्रहाराभिहते पतिते विषमोच्चकैः ॥ ७६ ॥

* गूढप्रहाराभिहत इति पाठान्तरः ।

कार्यं वातास्रजित्तृप्तिमर्दनाभ्यङ्गशोधनम् ।
विश्लिष्टदेहं मथितं क्षीणं मर्मक्षतं हतम् ॥ ७७ ॥
वासयेदातुरं तैलद्रोण्यां मांसरसाशिनम् ।

(भङ्गचिकित्सा)

*पातो घात इति द्वेधा भङ्गः प्रोक्तोत्र चादिमः ॥ ७८ ॥
स्वस्य पाते शिलादौ स्यात् स्वस्मिन्नन्यस्य चापरः ।
सन्धिश्लथत्वशोफाद्या बहुधा स्युरुपद्रवाः ॥ ७९ ॥
आञ्छनोत्पीडनोन्नामचर्मसंक्षेपबन्धनैः ।
सुयुक्त्या स्थापनोपायैस्सम्यक् संस्थाप्य निश्चलम् ॥ ८० ॥
पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ।
कदम्बोदुम्बरोत्थैर्वा वल्कैः खण्डैश्च वांशिकैः ॥ ८१ ॥
पृथुभिस्तनुभिः श्लक्ष्णैः पट्टस्योपरि बन्धनम् ।
कुर्यान्नातिश्लथदृढं मोक्षयेच्च त्र्यहात्त्र्यहात् ॥ ८२ ॥
घर्मे शीते तु सप्ताहात् पञ्चाहादपि चा†न्यदा ।
शिथिलेन हि बन्धेन सन्धेः स्थैर्यं न जायते ॥ ८३ ॥
गाढेनातिरुजादाहपाकश्वयथुसम्भवः ।
विभज्य देशकालौ च वातघ्नौषधसाधितैः ॥ ८४ ॥
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ।
तं पञ्चमूलपक्वेन पयसा वा सवेदनम् ॥ ८५ ॥
यद्वा वातघ्नतैलेन लेपाः सेकाश्च शीतलाः ।
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥ ८६ ॥
प्रातः प्रातः पिबेत् भग्नः शीतकं लाक्षया युतम् ।
व्रणे मधुघृतैर्लेपः शेषो भङ्गोदितः क्रमः ॥ ८७ ॥
धातकीलोध्रजश्चूर्णः परं भङ्गव्रणे हितः ।
कटीजङ्घोरुभग्नानां कीलबन्धं च कल्पयेत् ॥ ८८ ॥

---

* "पातघातादिभिर्द्वेधा भङ्गोऽस्थ्नां सन्ध्यसन्धितः ।
प्रसारणाकुञ्चनयोरशक्तिः सन्धिमुक्तता ॥
इतरस्मिन् भृशं शोफः ................ ।" (इत्यष्टाङ्गहृदयपाठः)

† "साधारणे तु पञ्चाहात्" (शरद्वसन्तादये पञ्चाहान्मोक्षयेदित्यर्थः)

शैलेयादिकृतं तैलं नळदाद्यं च शस्यते ।
एवं चिकित्सितस्थानं सनिदानं निरूपितम् ॥ ८९ ॥

व्याघ्रालयेशचरणं शरणं गुरुं च
यातेन शुद्धहृदयं हृदयप्रियेऽस्मिन् ।
स्पष्टार्थपद्यपरमे परमेश्वरेण
भूयादियं भुवि हिता विहिता चिकित्सा ॥ ९० ॥

इति हृदयप्रिये द्वितीयखण्डे रक्तवातव्रणभङ्गचिकित्सितं नाम
अष्टादशोऽध्यायः ॥

---

द्वितीयखण्डस्समाप्तः ।

---

# हृदयप्रियः ।

## अथ तृतीयखण्डः ।

### प्रथमोऽध्यायः ।

(शिरोरोगनिदानम्)

अथोत्तराभिधं स्थानं संक्षेपेण निगद्यते ।
(शिरःप्रभृति पादान्तप्रत्यङ्गव्याधिगोचरम्)
दोषकोपनिदानाद्यं यदुक्तं प्रायशः स्फुटम् ॥ १ ॥

धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः ।
कृमिभिर्वेगरोधाच्च तथान्यैर्दोषकोपनैः ॥ २ ॥

दुष्टाश्शिरोगता दोषा जनयन्त्यामयान् बहून् ।
तत्र श्रमात् क्रोधतो वा शरीरोष्मा शिरोगतः ॥ ३ ॥

केशान् सदोषः पचति पलितं तत् प्रचक्षते ।
तद्वातात् स्फुटितं रूक्षं पित्तात् पीतं कफात् पुनः ॥ ४ ॥

स्निग्धं विवृद्धिमत्सर्वैर्मिश्रं यात्यप्यसाध्यताम् ।
वयोविपाके जातं च सर्वमन्यत्तु साधयेत् ॥ ५ ॥

रोमकूपानुगं पित्तं च्यावयेद्रोम सानिलम् ।
सास्रेण श्लेष्मणा रोधात् पुनस्तेषामनुद्भवः ॥ ६ ॥

तदिन्द्रलुप्तकं प्राहुर्जन्मैवं खलतेरपि ।
रोमच्युतिः क्रमात्तत्र सदाहां तां नखप्रभाम् ॥ ७ ॥

वर्जयेत् पवनाद्दुष्टात् शोफो मूर्धनि नीरुजः ।
सवर्णो जायते यस्तु तं विद्यादुपशीर्षकम् ॥ ८ ॥

यथा दोषोदयं ब्रूयात् पिटकार्बुदविद्रधीन् ।
कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजन्तुभिः ॥ ९ ॥

कङ्गुसिद्धार्थकनिभाः पिटकास्स्युररूंषिकाः ।
कण्डूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः ॥ १० ॥

सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ।
वातोल्बणाः शिरःकम्पं तत्संज्ञं कुर्वते मलाः ॥ ११ ॥

दोषैस्सरक्तैः कुपितैः शिरस्तापश्शिरोगतैः ।
तत्र वाताच्छङ्खनासाश्रोत्रनेत्रशिरोरुजः ॥ १२ ॥

सिराणां स्फुरणं नासास्रावो ग्रीवाहनुग्रहः ।
शमक्रुधोरव्यवस्था स्नेहस्वेदादिभिश्शमः ॥ १३ ॥

अर्धावभेदकः स्याच्च मूर्ध्नोऽर्धे चेत् स कुप्यति ।
मासात् पक्षाच्च वा शाम्येत् स्वयं श्रोत्राक्षिनाशकृत् ॥

पित्तान्मूर्च्छा ज्वरो दाहो निशि शीतैश्च मार्दवम् ।
कफात् गुरुत्वमरुचिर्वमिश्शूनाक्षिकूटता ॥ १५ ॥

*रुजाल्पत्वं दिवा रक्तात् पित्तवत् सङ्करोऽखिलैः ।
सङ्कीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ॥ १६ ॥

कोपिते सन्निपाते च जायन्ते मूर्ध्नि जन्तवः ।
कुर्वते च पिबन्तोऽस्रं तीव्रा बहुविधा रुजः ॥ १७ ॥

ज्वरः कासस्तालुमूर्ध्नोः कण्डूः शोफः श्रुतिध्वनिः ।
ताम्राच्छसिंघाणकता चित्तभ्रंशश्च तैर्भवेत् ॥ १८ ॥

पित्तप्रधानैर्वाताद्यैः शङ्खे शोफस्सशोणितैः ।
तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ १९ ॥

तिक्तास्यपीतवदनः क्षिप्रकारी स शङ्खकः ।
त्रिरात्राज्जीवितं हन्ति सिध्यत्यप्याशु साधितः ॥ २० ॥

पित्तानुबद्धश्शङ्खाक्षिभ्रूललाटेषु मारुतः ।
अनुसूर्योदयां कुर्यादामध्याह्नविवर्धिनीम् ॥ २१ ॥

---

* रुजाल्पत्वं दिवा तन्द्रा कर्णकण्डूयनं पुनः ।
रक्तात् पित्ताधिकरुजः सर्वैः स्यात् सर्वलक्षणः ॥
(इति पाठभेदः.)

रुजां विशिष्य क्षुधिते सूर्यावर्तस्सकथ्यते ।

(शिरोरोगचिकित्सा)

अल्पे तु पलिते रोमाण्युत्पाट्याशु तदाशये ॥ २२ ॥
देयौ क्षीरे श्लक्ष्णपिष्टौ दुग्धिकाकरवीरकौ ।
तिलास्सामलकाः पद्मकिञ्जल्कं मधुकं मधु ॥ २३ ॥
बृंहयेद्रञ्जयेच्चैतत् केशान् मूर्ध्नः प्रलेपनात् ।
अयोरजो भृङ्गरजास्त्रिफला कृष्णमृत्तिका ॥ २४ ॥
स्थितमिक्षुरसे मासं समूलं पलितं जयेत् ।
यवकोद्रवधान्याम्लयवागूस्त्रिदिनोषिता ॥ २५ ॥
लोहे शुक्तोत्कटे पिष्ट्वा वलाकामपि रञ्जयेत् ।
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ॥ २६ ॥
तैलं धात्रीरसेऽभ्यङ्गात् नस्याच्छौक्ल्यादिरोगजित् ।
इन्द्रलुप्ते यथासन्नं सिरां विध्वा प्रलेपयेत् ॥ २७ ॥
प्रच्छाय गाढं कासीसमनोह्वातुत्थकोषणैः ।
सक्षौद्रक्षुद्रवार्ताकस्वरसेन रसेन वा ॥ २८ ॥
धुर्धूरकस्य लाङ्गल्या भल्लातकरसेन वा ।
अथवा माक्षिकहविस्तिलपुष्पत्रिकण्टकैः ॥ २९ ॥
तैलाक्ता हस्तिदन्तस्य मषी वा चौषधं परम् ।
शुक्लरोमोद्गमे तद्वन्मषी मेषविषाणजा ॥ ३० ॥
वर्जयेद्वारिणा सेकं यावद्रोमसमुद्भवः ।
शुद्धस्य खलतौ नस्यलेपाभ्यङ्गादि शौक्ल्यवत् ॥ ३१ ॥
सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनम् ।
मासं वा निम्बजं तैलं क्षीरभुङ्नावयेद्यतिः ॥ ३२ ॥
नवे जन्मोत्तरे जाते योजयेदुपशीर्षके ।
वातव्याधिक्रियां पक्के कर्म विद्रधिचोदितम् ॥ ३३ ॥
आमपक्के यथायोग्यं विद्रधीपिटकार्बुदे ।
अरूंषिकां जलौकोभिर्हृतास्रां निम्बवारिणा ॥ ३४ ॥

सिक्तां प्रभूतलवणैर्लिम्पेदश्वशकृद्रसैः ।
पटोलनिम्बपत्रैर्वा सहरिद्रैस्सुकल्कितैः ॥ ३५ ॥

गोमूत्रजीर्णपिण्याककुकवाकुमलैरपि ।
धूर्धूरतैलं च हितं मालत्याङ्कोलपूर्वकम् ॥ ३६ ॥

विध्येत् सिरां दारणके ललाट्यां शीलयेन्मृजाम् ।
नावनं मूर्धवस्तिं च लेपयेच्च समाक्षिकैः ॥ ३७ ॥

प्रियाळबीजमधुककुष्ठमाषैस्ससर्षपैः ।
कोरदूषतृणक्षारवारिप्रक्षाळनं हितम् ॥ ३८ ॥

वाताभितापवत्कार्यः कम्पे दाहादिना क्रमः ।
शिरोऽभितापेऽनिलजे वातव्याधिविधिं चरेत् ॥ ३९ ॥

घृतभक्तशिरा रात्रौ पिबेदुष्णपयोऽनुपः ।
माषान् कुलत्थान् मुद्गान्वा तद्वत् खादेत् घृतान्वितान् ॥

तैलं तिलानां कल्कं वा क्षीरेण सह पाययेत् ।
पिण्डोपनाहस्वेदाश्च मांसधान्यकृता हिताः ॥ ४१ ॥

सेकश्च वातजित्क्षीरैर्धूमश्रोत्राक्षितर्पणम् ।
कार्पासबीजत्वङ्मुस्तासुमनःकोरकाणि च ॥ ४२ ॥

नस्यमुष्णांबुपिष्टानि सर्वमूर्धरुजापहम् ।
शर्कराकुङ्कुमभृतं घृतं पित्तासृगन्वये ॥ ४३ ॥

लेपश्च सघृतैः कुष्ठकुटिलोत्पलचन्दनैः ।
न रक्तमोक्षोऽत्र हितः कुर्याद्दाहं चले कफे ॥ ४४ ॥

अर्धावभेदकेऽप्येषा यथादोषोदयं क्रिया ।
शिरोऽभितापे पित्तोत्थे स्निग्धस्य व्यथयेत् सिराम् ॥ ४५ ॥

शीताः शिरोमुखालेपसेकशोधनवस्तयः ।
जीवनीयकृते क्षीरसर्पिषी पाननस्ययोः ॥ ४६ ॥

कर्तव्यं रक्तजेऽप्येतत् कफजे जीर्णसर्पिषा ।
स्निग्धस्तीक्ष्णैर्वमेत् स्वेदप्रलेपाद्याः कफापहैः ॥ ४७ ॥

शस्यते चोपवासोऽत्र निचये मिश्रमाचरेत् ।
कृमिजे शोणितं नस्यं तेन मत्ता हि जन्तवः ॥ ४८ ॥

निर्यान्ति घ्राणवक्त्राभ्यां नस्यधूमैस्ततो हरेत् ।
विळङ्गस्वर्चिकादन्तीहिङ्गुगोमूत्रसाधितम् ॥ ४९ ॥
कटुनिम्बेङ्गुदीतैलं हितं नस्यं पृथक् पृथक् ।
अजामूत्रसुतं नस्यं क्रिमिजित् क्रिमिजित्परम् ॥ ५० ॥
पूतिमत्स्ययुतैः कुर्यात् धूमनावनभेषजैः ।
क्रिमिभिः पीतरक्तत्वाद्रक्तमत्र न निर्हरेत् ॥ ५१ ॥
पित्ताभितापवत् कुर्यात् प्रत्याख्याय तु शङ्खके ।
*सूर्यावर्ते वाततापक्रियात्र तु हेरदसृक् ॥ ५२ ॥

इति हृदयप्रिये तृतीयखण्डे शिरोरोगचिकित्सितं नाम प्रथमोऽध्यायः ॥

---

अथ द्वितीयोऽध्यायः ।

(वर्त्मरोगनिदानम्)

सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।
अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः ॥ १ ॥
सिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः ।
वर्त्म सन्धिं सितं कृष्णं दृष्टिं वा सर्वमाक्षि वा ॥ २ ॥
रोगान् कुर्युश्चलस्तत्र कुरुते वर्त्मसंश्रयः ।
सुप्त्यन्ते सरुजं साश्रु वर्त्मस्तम्भं विमर्दनात् ॥ ३ ॥
शमप्रदं च तं विद्यात् कृच्छ्रोन्मीलं यथार्थकम् ।
अरुङ् निमेषो वातेन निमेषोन्मेषणं मुहुः ॥ ४ ॥
मीलितं मुक्तसन्धित्वात् वर्त्म वातहताभिधम् ।
पित्तेनान्तर्वर्त्म कृष्णाः पिटकाः कुम्भिकाभिधाः ॥ ५ ॥
सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम् ।
पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तत् ॥ ६ ॥
पक्ष्मशातस्तु पक्ष्मस्थात् पित्तात् कण्डूतिदाहवान् ।
कफोत्क्लिष्टं भवेद्वर्त्म †स्तम्भक्लेदोपदेहवत् ॥ ७ ॥

---

* 'सूर्यावर्ते तु तस्मिंस्तु सिरयापहरेदसृक् ।
पेयं सशर्करं सर्पिः सक्षीरलवणादिजम् ॥'
(इति पाठभेदः.)

† 'स्तम्भोषाक्लेददाहवत्' इत्यन्यः पाठः.

कफात्तत्र तथा श्वेताः पोथक्यः सर्षपोपमाः ।
पिटकाः श्लेष्मतो ग्रन्थिर्लगणः कोलसम्मितः ॥ ८ ॥
कण्डूमान् कठिनो रुक् च रक्तेन पिटकाः पुनः ।
उत्सङ्गाख्या रक्ततुल्यास्तथोत्क्लिष्टं सराजि च ॥ ९ ॥
अर्शोऽधिमांसं वर्त्मान्तर्वर्ज्यः स्तब्धं सदाहरुक् ।
रक्तं रक्तेन तत् स्रावि छिन्नं छिन्नं च वर्धते ॥ १० ॥
अञ्जनाख्या च पिटका सकण्डूर्मृदुवत्सरुक् ।
दोषैर्वर्त्म बहिश्शूनं यदन्तस्सूक्ष्मखाचितम् ॥ ११ ॥
सास्रावमन्तरुदकं बिसाभं बिसवर्त्म तत् ।
उत्क्लिष्टवर्त्म दोषैस्स्यात् सास्रैर्वृद्धिक्षयि स्वयम् ॥ १२ ॥
तैरेवाथ श्याववर्त्म श्यावं रुक्क्लेदशोफवत् ।
श्लिष्टाख्यं वर्त्मनी श्लिष्टे कण्डूश्वयथुरागिणी ॥ १३ ॥
वर्त्मनोऽन्तः खरा रूक्षाः पिटकास्सिकतोपमाः ।
सिकतावर्त्म कृष्णं तु कर्दमं कर्दमोपमम् ॥ १४ ॥
बहळं बहळैर्मांसैः सवर्णैश्चीयते समैः ।
कुकूणकः शिशोरेव दन्तोत्पत्तौ भवेत्ततः ॥ १५ ॥
रुग्रागशोफपैच्छिल्यं कर्णनासाक्षिमर्दनम् ।
पक्ष्मोपरोधः पक्ष्मान्ते रोमाभिः कण्टकोपमैः ॥ १६ ॥
वक्रैश्शोफकरैस्तेषु हृतेष्वल्पाहशान्तिदः ।
कनीनके बहिर्वर्त्म कठिनो ग्रन्थिरुन्नतः ॥ १७ ॥
ताम्रः पक्वोऽस्रपूयस्रुदलज्याध्मायते मुहुः ।
अर्बुदो मांसपिण्डोऽन्तर्बहिर्वा वर्त्मनोऽरुजः ॥ १८ ॥
चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रिताः ।

(वर्त्मरोगचिकित्सा)

कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्काम्बुसाधितम् ॥ १९ ॥
ससितं योजयेत् स्निग्धं नस्यं धूमाञ्जनादि च ।
कुम्भिकावर्त्म लिखितं सैन्धवप्रतिसारितम् ॥ २० ॥

यष्टीधात्रीपटोलानां क्काथेन परिषेचयेत् ।
निवातस्थस्य शुद्धस्य स्वेदितं वर्त्म वाससा ॥ २१ ॥
बहिः कोष्णाम्बुमिश्रेण सवस्त्राभ्यां विकासयेत् ।
वामाङ्गुष्ठाङ्गुलीभ्यां तन्मण्डलाग्रेण चाङ्कितम् ॥ २२ ॥
तिर्यक् तेनैव पत्रैर्वा शाकशेफालिकादिजैः ।
फेनेन वा लिखेच्चानु पिचुना प्रमृजेदसृक् ॥ २३ ॥
स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ।
यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ॥ २४ ॥
घृतेन सिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ।
ऊर्ध्वाधः कर्णयोर्दत्वा पिण्डीं च यवसक्तुभिः ॥ २५ ॥
द्वितीयेऽहनि मुक्तस्य परिषेकं यथायथम् ।
कुर्याच्चतुर्थे नस्यादीन् मुञ्चेदेवाह्नि पञ्चमे ॥ २६ ॥
समं नखनिभं शोफकण्डूघर्षाद्यपीडितम् ।
विद्यात्सुलिखितं वर्त्म लिखेत् भूयो विपर्यये ॥ २७ ॥
रुक्पक्ष्मवर्त्मशतनस्रंसनान्यतिलेखनात् ।
स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ॥ २८ ॥
नवनीताक्तमेरण्डकल्कच्छन्नं विशोषितम् ।
पुटपाकात् श्वेतलोध्रं मृदितं पोट्टलीकृतम् ॥ २९ ॥
स्तन्ये क्षीरे छगल्या वा विहितं नेत्रसेचने ।
नेत्रेऽतिलिखिते सेको मस्तुना केवलेन वा ॥ ३० ॥
पिटका व्रीहिवक्त्रेण भित्वा तु कठिनोन्नताः ।
निष्पीडयेदनु विधिः परिशेषस्तु पूर्ववत् ॥ ३१ ॥
लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ।
पित्तास्रोत्क्लिष्टयोस्स्वादुस्कन्धसिद्धेन सर्पिषा ॥ ३२ ॥
सिराविमोक्षः स्निग्धस्य त्रिवृच्छ्रेष्ठं विरेचनम् ।
लिखिते स्रुतरक्ते च वर्त्मनि क्षाळनं हितम् ॥ ३३ ॥
यष्टीकषायैस्सेकस्तु क्षीरं चन्दनसाधितम् ।
पक्ष्मणां शतने सूच्या रोमकूपान् विकुट्टयेत् ॥ ३४ ॥

ग्राहयेद्वा जलौकोभिः पयसेक्षुरसेन वा ।
वमनं नावनं सर्पिश्शृतं मधुरशीतलैः ॥ ३५ ॥

संचूर्ण्य पुष्पकासीसं भावयेत् सुरसारसैः ।
ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम् ॥ ३६ ॥

पोत्थकीर्लिखिताः शुण्ठीसैन्धवप्रतिसारिताः ।
उष्णाम्बुक्षालितास्सिञ्चेत् खदिराढकशिग्रुभिः ॥ ३७ ॥

अप्सिद्धैर्द्विनिशाश्रेष्ठामधूकैर्वा समाक्षिकैः ।
कफोत्क्लिष्टे विलिखिते सक्षौद्रैः प्रतिसारणम् ॥ ३८ ॥

सूक्ष्मैस्सैन्धवकासीसमनोह्वाकणतार्क्ष्यजैः ।
वमनाञ्जननस्यादि सर्वं च कफजिद्धितम् ॥ ३९ ॥

कर्तव्यं लगणेऽप्येतदशान्तावग्निना दहेत् ।
कुकूणके तु शुद्धाया धात्र्याः पित्तकफापहैः ॥ ४० ॥

मुस्ताद्विरजनीकृष्णाकल्केनालेपयेत् स्तनौ ।
पटोलमुस्तामृद्वीकागुळूचीत्रिफलोद्भवम् ॥ ४१ ॥

दद्यात् क्वाथं वर्त्मनस्तु शिशोरस्रे च निर्हृते ।
धात्र्यश्मन्तकजम्बूत्थपत्रक्वाथेन सेचयेत् ॥ ४२ ॥

सिन्धूत्थकृष्णापामार्गबीजाज्यस्तन्यमाक्षिकम् ।
चूर्णो वचायास्सक्षौद्रो मदनं मधुकान्वितम् ॥ ४३ ॥

क्रमात् बालेषु वमने क्षीरान्नोभयवर्तिषु ।
सप्तलारससिद्धाज्यं योज्यञ्चोभयशोधनम् ॥ ४४ ॥

द्विनिशालोध्रयष्ट्याह्वरोहिणीनिम्बपल्लवैः ।
कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोऽन्वितैः ॥ ४५ ॥

पक्ष्मोपरोधे शुद्धस्य तीक्ष्णैर्नस्यादि योजयेत् ।
संदंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ४६ ॥

सूच्यग्रेणाग्निवर्णेन दाहो बाह्यालजेः पुनः ।
भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च ॥ ४७ ॥

इति हृदयप्रिये तृतीयखण्डे वर्त्मरोगचिकित्सितं नाम
द्वितीयोऽध्यायः ॥

अथ तृतीयोऽध्यायः ।

(सन्धिसितासितरोगनिदानम्)

वायुः क्रुद्धः सिराः प्राप्य जलाभं जलवाहिनीः ।
अश्रु स्रावयते वर्त्मशुक्लसन्धेः कनीनकात् ॥ १ ॥
जलास्रावः स पैच्छिल्यश्वैत्ययुक्तः कफास्रवः ।
रक्तास्रावस्तु ताम्रात्युष्णातिस्रावाद् भवेत् पुनः ॥ २ ॥
पूयास्रावः सास्रपूयः पाकजो वर्जयेच्च तान् ।
कनीनके कफाच्छोफस्तीक्ष्णाग्रो मृदुपिच्छिलः ॥ ३ ॥
अपाकरुक् स्थूलमूलः कण्डूमानुपनाहकः ।
वर्त्मसन्ध्याश्रया शुक्ले पिटका दाहशूलिनी ॥ ४ ॥
ताम्रा मुद्गोपमा रक्तात् पर्वणी रक्तपूरिता ।
पूयालसो व्रणः सूक्ष्मः शोफसंरम्भपूर्वकः ॥ ५ ॥
कनीनसन्धावाध्मायी पूयास्रावी सवेदनः ।
कनीनस्यान्तरलजिः शोफो रुक्तोददाहवान् ॥ ६ ॥
अपाङ्गे वा कनीने वा कण्डूपापक्ष्मपोटवान् ।
पूयास्रावी कृमिग्रन्थिर्ग्रन्थिः कृमियुतोऽर्तिमान् ॥ ७ ॥
उपनाहादिकान् पञ्च रोगान् शस्त्रेण साधयेत् ।
पित्तं कुर्यात् सिते बिन्दूनसितश्यावपीतकान् ॥ ८ ॥
मालिन्यं वाखिले शुक्ले शुक्तिका सा सतृड्ज्वरा ।
कफाच्छुक्ले घनं श्वेतं चिरवृद्ध्यधिमांसकम् ॥ ९ ॥
शुक्लार्म, शोफस्त्वरुजः सवर्णो बहलो मृदुः ।
गुरुः स्निग्धोऽम्बुबिन्द्वाभो बलासग्रथितः स्मृतः ॥ १० ॥
बिन्दुभिः पिष्टधवलैरुत्सन्नं पिष्टकं वदेत् ।
रक्तराजीततं शुक्लमुष्यते यत् सवेदनम् ॥ ११ ॥
*सशोफाश्रूपदेहं च शिरोत्पातः सशोणितात् ।
तासां हर्षात् सिराहर्षं सिराजालं तु तच्चयात् ॥ १२ ॥
शोणितार्म समं श्लक्ष्णं पद्माभमधिमांसकम् ।
नीरुक् श्लक्ष्णोऽर्जुनो बिन्दुः शशलोहितलोहितः ॥ १३ ॥

---

* 'अशोफाश्रूपदेहमि'ति मुद्रिताष्टाङ्गहृदयपाठः.

मृद्वाशुवृद्ध्यरुक्प्रायं प्रस्तारि श्यावलोहितम् ।
प्रस्तार्यर्म मलैः सास्रैः, स्नाय्वर्म स्नावसन्निभम् ॥ १४ ॥

अधिमांसार्म शुक्लासृक्पिण्डश्यावं यदामिषम् ।
कृष्णासन्नाः सिरापूर्णाः पिटकाः सर्षपोपमाः ॥ १५ ॥

शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनम् ।
साधयेदौषधैः शेषं शस्त्रैरप्यनवोद्भवम् ॥ १६ ॥

दृष्टिप्राप्तं सिराक्रान्तं चार्म शस्त्रेण वर्जयेत् ।
पित्तात् कृष्णेऽथवा दृष्टौ शुक्रं तोदाश्रुरागवत् ॥ १७ ॥

कृष्णे पाकोऽश्रतिकरं कृच्छ्रं तत् क्षतशुक्रकम् ।
पटलस्य द्वितीयस्य च्छेदात् तद्धि भूरिवेदनम् ॥ १८ ॥

याप्यं तृतीयस्य तु तदसाध्यं निचितं व्रणैः ।
शङ्खशुक्लं कफात् साध्यं नातिरुक् शुद्धशुक्रकम् ॥ १९ ॥

आताम्रपिच्छिलास्रस्रुदाताम्रपिटकातिरुक् ।
अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्याऽजाजका ॥ २० ॥

सिराशुक्रं मलैः सास्रैर्बहुतोदं सिरावृतम् ।
अनिमित्तोष्णशीताच्छघनास्रस्रुच्च तत् त्यजेत् ॥ २१ ॥

दोषैः सास्रैः सकृत्कृष्णं धवलीकृत्य यद् भवेत् ।
निष्पावार्धदलाकारं शुक्रं पाकात्ययात् त्यजेत् ॥ २२ ॥

अतितीव्ररुजादाहपाकश्वयथुकृच्च तत् ।

(सन्धिसितासितरोगचिकित्सा)

उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च ॥ २३ ॥

लेखयेन्मण्डलाग्रेण ततश्च प्रतिसारयेत् ।
पिप्पलीक्षौद्रसिन्धूत्थैर्बध्नीयात् पूर्ववत् ततः ॥ २४ ॥

पटोलपत्रामलकक्वाथेनाश्च्योतयेच्च तम् ।
पर्वणी बडिशेनात्ता बाह्यसन्धित्रिभागतः ॥ २५ ॥

वृद्धिपत्रेण वर्ध्यार्धे स्यादस्रक्स्रुतिरन्यथा ।
चिकित्स्या चार्मवत् क्षौद्रसैन्धवप्रतिसारिता ॥ २६ ॥

पूयालसे सिरां विध्येत् ततस्तमुपनाहयेत् ।
कुर्वीत चाक्षिपाकोक्तं सर्वं कर्म यथाविधि ॥ २७ ॥
सैन्धवार्द्रककासीसलोहताम्रैः सुचूर्णितैः ।
चूर्णाञ्जनं प्रयुञ्जीत सक्षौद्रैर्वा रसक्रियाम् ॥ २८ ॥
कृमिग्रन्थिं करीषेण स्विन्नं भित्त्वा विलिख्य च ।
त्रिफलाक्षौद्रकासीससैन्धवैः प्रतिसारयेत् ॥ २९ ॥
पित्ताभिष्यन्दवच्छुक्तिं, बलासाह्वयपिष्टके ।
कफाभिष्यन्दवन्मुक्त्वा सिराव्यधमुपाचरेत् ॥ ३० ॥
रक्तस्यन्दवदुत्पातहर्षजालार्जुनक्रिया ।
सिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनम् ॥ ३१ ॥
सिराहर्षे तु मधुना श्लक्ष्णपिष्टं रसाञ्जनम् ।
अर्जुने शर्करामस्तुक्षौद्रैराश्च्योतनं हितम् ॥ ३२ ॥
स्फटिकं कुङ्कुमं शङ्खं मधुकं मधुनाञ्जनम् ।
मधुना वाञ्जनं शङ्खः फेनो वा सितया सह ॥ ३३ ॥
अर्मोक्तं पञ्चधा यत्तु तनु धूमाविलं च यत् ।
रक्तं दधिनिभं यच्च शुक्रवत् तस्य भेषजम् ॥ ३४ ॥
उत्तानस्येतरत् स्विन्नं ससिन्धूत्थेन चाञ्जितम् ।
रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ ३५ ॥
इत्थं संरोपिताक्षस्य प्रचलेऽर्माधिमांसके ।
धृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥ ३६ ॥
अपाङ्गमीक्षमाणस्य वृद्धेऽर्मणि कनीनकात् ।
वली स्याद् यत्र तत्रार्म बलिशेनावलम्बितम् ॥ ३७ ॥
समन्तान्मण्डलाग्रेण मोचयेदथ मोक्षितम् ।
कनीनकमुपानीय चतुर्भागावशेषितम् ॥ ३८ ॥
छिन्द्यात् कनीनकं रक्षन् वाहिनीश्चाश्रुवाहिनीः ।
वृद्धेऽर्माणि तथापाङ्गात् पश्यतोऽस्य कनीनकम् ॥ ३९ ॥
सम्यक्छिन्नं मधुव्योषसैन्धवप्रतिसारितम् ।
उष्णेन सर्पिषाभ्यक्तमभ्यक्तं मधुसर्पिषा ॥ ४० ॥

बध्नीयात् सेचयेन्मुक्त्वा तृतीयादिदिनेषु च ।
करञ्जबीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥ ४१ ॥

सक्षौद्रैर्द्विनिशालोध्रपटोलीयष्टिकिंशुकैः ।
कोरण्डमुकुलोपेतैर्मुञ्चेद्वाहनि सप्तमे ॥ ४२ ॥

सितामनःशिलालैलालवणोत्तमनागरम् ।
अर्धकर्षोन्मितं तार्क्ष्यं पलार्धं च मधुद्रुतम् ॥ ४३ ॥

अञ्जनं श्लेष्मतिमिरपिल्लशुक्लार्मशोफजित् ।
सिराजालेऽर्मवच्छस्त्रं पिटकासु च योजयेत् ॥ ४४ ॥

दोषानुरोधाच्छुक्लेषु स्निग्धरूक्षं वराघृतम् ।
तिक्तमूर्ध्वमसृक्स्रावो रेकसेकादि चेष्यते ॥ ४५ ॥

त्रिस्त्रिवृद्वारिणा पक्वं क्षतशुक्ले घृतं पिबेत् ।
सिरया तु हरेद् रक्तं जलौकोभिश्च लोचनात् ॥ ४६ ॥

सिद्धेनोत्पलकाकोलीद्राक्षायष्टिविदारिभिः ।
ससितेनाजपयसा सेचनं सलिलेन वा ॥ ४७ ॥

रागाश्रुवेदनाशान्तौ परं लेखनमञ्जनम् ।
वर्तयो जातिमुकुललाक्षागैरिकचन्दनैः ॥ ४८ ॥

प्रसादयन्ति पित्तास्रं घ्नन्ति च क्षतशुक्लकम् ।
दन्तैर्दन्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः ॥ ४९ ॥

सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः ।
क्षतशुक्लमपि व्यापि दन्तवर्तिर्निवर्तयेत् ॥ ५० ॥

तमालपत्रं गोदन्तशङ्खफेनोऽस्थि गार्दभम् ।
ताम्रं च वर्तिर्मूत्रेण सर्वशुक्लकनाशिनी ॥ ५१ ॥

रत्नानि दन्ताः शृङ्गाणि धातवस्त्र्यूषणं त्रुटिः ।
करञ्जबीजं लशुनो व्रणसादि च भेषजम् ॥ ५२ ॥

सव्रणाव्रणगम्भीरत्वक्स्थशुक्लघ्नमञ्जनम् ।
निम्नमुन्नमयेत् स्नेहपाननस्यरसाशनैः ॥ ५३ ॥

सरुजं नीरुजं तृप्तिपुटपाकेन शुक्लकम् ।
शुद्धशुक्ले निशायष्टीक्षारिवाशाबराम्भसा ॥ ५४ ॥

सेचनं लोध्रपोट्टल्या कोष्णाम्भोमग्नयाथवा ।
गोदन्तादिर्महानीला कर्पूरादिश्च शुक्रजित् ॥ ५५ ॥
सिराशुक्रे त्वदृष्टिघ्ने चिकित्सा व्रणशुक्रवत् ।
पुण्ड्रयष्ट्याह्वकाकोलीसिंहीलोहनिशाञ्जनम् ॥ ५६ ॥
कल्कितं चाजदुग्धेन सघृतैर्धूपितं यवैः ।
धात्रीपत्रैश्च पर्यायाद् वर्तिरत्राञ्जने वरा ॥ ५७ ॥
अशान्तावर्मवच्छस्त्रमजकाख्येऽपि योजयेत् ।
अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधे ॥ ५८ ॥
शमयेद् वेदनां स्नेहपानासृक्स्रवणादिभिः ।
नालिकेरास्थिभल्लाततालवंशकरीरजम् ॥ ५९ ॥
भस्माद्भिः स्रावयेत् ताभिर्भावयेत् करभास्थिजम् ।
चूर्णं शुक्रेष्वसाध्येषु तद्वैवर्ण्यघ्नमञ्जनम् ॥ ६० ॥
साध्येषु साधनायालमिदमेव च मीलितम् ॥ ६०½ ॥

इति हृदयप्रिये तृतीयखण्डे सन्धिसितासितचिकित्सितं
नाम तृतीयोऽध्यायः ॥

---

अथ चतुर्थोऽध्यायः ।

(दृष्टिरोगनिदानम्)

सिरानुसारिणि मले प्रथमं पटलं गते ।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ १ ॥
द्वितीयगे तु नो सूक्ष्मं दूरं चान्यत्तु यत्नतः ।
दूरेऽन्तिके विपर्यासाद् वस्त्वभूतं च पश्यति ॥ २ ॥
अनेकधा वा वृत्तं वा ह्रस्ववक्रविपर्ययम् ।
दोषभिन्नत्ववृत्तत्वमध्यस्थत्वेन पश्यति ॥ ३ ॥
रोगोऽयं तिमिरः काचस्तृतीयपटलाश्रिते ।
तेनोर्ध्वमीक्षते नाधस्तनुचेलावृतोपमम् ॥ ४ ॥
यथावर्णं चरत्येतद्दृष्टिर्हीयेत च क्रमात् ।
चतुर्थगे लिङ्गनाशो दृष्टिं प्रच्छादयेन्मले ॥ ५ ॥

तिमिरे वातजे प्रायेणारुणाविलमीक्षते ।
जालानि केशान् मशकान् काचीभूतेऽरुणास्य दृक् ॥ ६ ॥

पश्यत्यनासिकं वक्रं चन्द्रदीपाद्यनेकताम् ।
लिङ्गनाशे स्पष्टरक्ता रजोधूमाविलेव च ॥ ७ ॥

दृष्टिः सूक्ष्मा विस्तृता वा यदा वातात्तु दृक्सिराः ।
सङ्कोच्य मण्डलं दृष्टेर्गम्भीरान्तर्नयत्यसौ ॥ ८ ॥

पित्तजे तिमिरे विद्युत्पिञ्छखद्योतसन्निभम् ।
नीलं च वीक्षते प्रायः काचे दृक् काचनीलभा ॥ ९ ॥

तादृक् पश्यति चार्केन्दुपरिधीन्द्रधनूंषि च ।
भृङ्गनीला निरालोका दृक् स्निग्धा लिङ्गनाशतः ॥ १० ॥

दृष्टिः पित्तेन या ह्रस्वा ह्रस्वाख्या ह्रस्वदर्शिनी ।
भवेत् पित्तविदग्धाख्या पीता पीताभदर्शना ॥ ११ ॥

कफेन तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति ।
शङ्खकुन्दाद्यावृतं च काचे त्वर्केन्दुभिश्रितम् ॥ १२ ॥

निष्प्रभैर्दृक् सिताभा स्याल्लिङ्गनाशे तु लक्ष्यते ।
मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ॥ १३ ॥

बिन्दुर्जलस्येव चलः पद्मिनीपुटसंश्रितः ।
उष्णे सङ्कोचमायाति छायायां परिसर्पति ॥ १४ ॥

शङ्खेन्दुकुन्दकुमुदस्फटिकोपमशुक्लिमा ।
रक्तेन तिमिरे रक्तं *ध्वान्तीभूतं च पश्यति ॥ १५ ॥

काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ।
लिङ्गनाशे तु तादृग् दृङ् निष्प्रभा हतदर्शना ॥ १६ ॥

संसर्गसन्निपातेषु विद्यात् सङ्कीर्णलक्षणम् ।
द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः ॥ १७ ॥

नकुलान्धः स तु दिवा चित्रं पश्यति नो निशि ।
दोषान्धस्तु स दोषान्धो दोषैर्योऽह्नीक्षते सुखम् ॥ १८ ॥

---

* 'तमोभूतम्' इति मुद्रिताष्टाङ्गहृदयपाठः.

दाहोषाशुक्लमालिन्ययुक्तोऽह्न्याविलदर्शनः ।
रात्रावन्धः सास्रदोषैर्भवेदुष्णविदग्धया ॥ १९ ॥

तैरेव कण्डूकालुष्यक्लेदाढ्याम्लविदग्धिका ।
शोकज्वरशिरोरोगसन्तप्तस्यानिलादयः ॥ २० ॥

धूमाविलां धूमदर्शीं दृशो कुर्युः स धूमरः ।
अल्पसत्त्वस्य सहसा सूक्ष्मं दीर्घं च पश्यतः ॥ २१ ॥

तेजः संशोष्य तद्दृष्टिं वैडूर्याभां विदर्शनाम् ।
अन्यथा लिङ्गनाशोऽसावौपसर्गिकसंज्ञितः ॥ २२ ॥

कफाद् विना लिङ्गनाशान् गम्भीरां ह्रस्वजामपि ।
वर्जयेन्नकुलान्ध्यं च काचा याप्याः परान् जयेत् ॥ २३ ॥

(दृष्टिरोगचिकित्सा)

जीवन्त्याद्यं पिबेत् सर्पिः शुद्धाङ्गस्तिमिरातुरः
पटोलाद्यं त्रैफलं वा तन्महद्वा यथामलम् ॥ २४ ॥

ताप्यायोहेमयष्ट्याह्वसिताजीर्णाज्यमाक्षिकैः ।
संयोजिता यथाकामं तिमिरघ्नी परं वरा ॥ २५ ॥

सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी ।
गोमूत्रे छगणरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत् कुर्याद् गरुडसमं नरस्य चक्षुः ॥ २६ ॥

रसेन्द्रभुजगौ तुल्यौ ताभ्यां सदृशमञ्जनम् ।
ईषत्कर्पूरसहितमञ्जनं तिमिरापहम् ॥ २७ ॥

मरिचानि दशार्धपिचुस्ताप्यात्तुत्थात् पलं पिचुर्यष्ट्याः ।
क्षीरार्द्रदग्धमञ्जनमप्रतिसाराख्यमुत्तमं तिमिरे ॥ २८ ॥

मांस्याद्यश्चाक्षबीजाद्यो योगः षण्माक्षिकस्तथा ।
रत्नादिकश्च तिमिरे योज्याः काचे च युक्तितः ॥ २९ ॥

स्नेहोऽस्रस्रावणं नस्यं मूर्धवास्तिश्च तर्पणम् ।
सामान्यं साधनमिदं प्रतिदोषमथोच्यते ॥ ३० ॥

वातजे तिमिरे तत्र दशमूलाम्भसा घृतम् ।
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्कं पिबेत् ततः ॥ ३१ ॥

त्रिफलापञ्चमूलानां कषायं क्षीरसम्मितम् ।
एरण्डतैलसंयुक्तं योजयेत विरेचनम् ॥ ३२ ॥

सितैरण्डादिजीवन्तीतैलाभ्यां नस्यमुत्तमम् ।
अभ्यङ्गेऽसनविल्वादिस्निफलादिश्च शस्यते ॥ ३३ ॥

बलातैलं च वा वस्तौ शताह्वाद्येन तर्पणम् ।
पैत्ते घृतैर्जीवनीयत्रिफलाभिर्विपाचितैः ॥ ३४ ॥

स्नेहयित्वा हरेद् रक्तं सिरयाथ विरेचयेत् ।
शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैश्च वस्तिभिः ॥ ३५ ॥

सुशीताल्लेँपसेकादीन् युञ्ज्यान्नेत्रास्यमूर्धसु ।
शारिबापद्मकोशीरमुस्ताशाबरचन्दनैः ॥ ३६ ॥

वर्तिः शस्ताञ्जने चूर्णस्तथा पद्मोत्पलाञ्जनैः ।
सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ॥ ३७ ॥

नस्यं चाज्यं भृतं क्षीरजीवनीयसितोपलैः ।
श्लेष्मोद्भवेऽमृताक्वाथवराकणभृतं घृतम् ॥ ३८ ॥

विध्येत् सिरां पीतवतो दद्याच्चात्र विरेचनम् ।
क्वाथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम् ॥ ३९ ॥

ह्रीबेरदारुद्विनिशाकृष्णाकल्कैः पयोयुतैः ।
द्विपञ्चमूलनिर्यूहे पक्वं तैलं च नावनम् ॥ ४० ॥

वर्तिः प्रियंगुनेपालीवराशङ्खकटुत्रयैः ।
रक्तजे पित्तवत् सिद्धिर्वर्तिर्द्राक्षादिका हिता ॥ ४१ ॥

संसर्गसन्निपातोत्थे यथादोषोदयं क्रिया ।
नतनीलोत्पलानन्तायष्ट्याह्वसुनिषण्णकैः ॥ ४२ ॥

साधितं नावनं तैलं शिरोवस्तौ च शस्यते ।
काचेऽप्येषा क्रिया तत्र सिरावेधो न शस्यते ॥ ४३ ॥

आन्ध्याय स्याद् यन्त्रणं यत् स्राव्ये त्वस्रे जलौकसः ।
गुडः फेनोऽञ्जनं कृष्णा मरिचं कुङ्कुमाद्रजः ॥ ४४ ॥

रसक्रियैवं सक्षौद्रा काचयापनमञ्जनम् ।
नकुलान्धे त्रिदोषोत्थे तैमिर्यविहितो विधिः ॥ ४५ ॥
रसक्रिया घृतक्षौद्रगोमयस्वरसद्रुतैः ।
तार्क्ष्यगैरिकतालीसैर्निशान्धे हितमञ्जनम् ॥ ४६ ॥
दध्नावघृष्टं मरिचं राज्यन्धेऽञ्जनमुत्तमम् ।
करञ्जाद्या हिता वर्तिर्घृतभृष्टानि भक्षयेत् ॥ ४७ ॥
पल्लवानि शतावर्या जीवन्त्या सोऽर्गलस्य वा ।
धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ॥ ४८ ॥
स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ।
स्वर्णगैरिकतालीस*चूर्णैर्दिग्धे रसक्रिया ॥ ४९ ॥
विध्येत् सुजातं निष्प्रेक्षं लिङ्गनाशं कफोद्भवम् ।
आवर्तक्यादिभिः षड्भिर्विवर्जितमुपद्रवैः ॥ ५० ॥
तत्रावर्तचला दृष्टिरावर्तक्यरुणा सिता ।
शर्करार्कपयोलेशनिशितेव घनाति च ॥ ५१ ॥
राजीमती दृङ् निचिता शालिशूकाभराजिभिः ।
विषमच्छिन्नदग्धाभा सरुग् भिन्नांशुका स्मृता ॥ ५२ ॥
दृष्टिः कांस्यसमच्छाया चन्द्रकी चन्द्रकाकृतिः ।
छत्राभा नैकवर्णा च छत्रकी नाम नीलिका ॥ ५३ ॥
न विध्येदसिराहाणां न तृट्पीनसकासिनाम् ।
नाजीर्णिभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥ ५४ ॥
अथ साधारणे काले शुद्धसंभोजितात्मनः ।
देशे प्रकाशे पूर्वाह्णे भिषग् जानूच्चपीठगः ॥ ५५ ॥
यन्त्रितस्योपाविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।
अङ्गुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ ५६ ॥
स्वां नासामीक्षमाणस्य निष्कम्पं मूर्ध्नि धारिते ।
कृष्णादर्धाङ्गुलं मुक्त्वा तदर्धार्धमपाङ्गतः ॥ ५७ ॥
सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।
विध्येद् दैवार्जिते छिद्रे सुविद्धेऽम्बुलवस्रुतिः ॥ ५८ ॥

---

* 'चूर्णावाप' इति मुद्रिताष्टाङ्गहृदये दृश्यते ।

सान्त्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।
नीत्वा शलाकामग्रेण निर्लिखेद् दृष्टिमण्डलम् ॥ ५९ ॥
अबाधमानः शनकैर्नासां प्रति नुदंस्ततः ।
उच्छिङ्घनाच्चापहरेद् दृष्टिमण्डलगं कफम् ॥ ६० ॥
स्थिरे दोषे चले वापि स्वेदयेदक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ ६१ ॥
घृताप्लुतं पिचुं दत्त्वा बद्ध्वाक्षि शाययेत् ततः ।
विद्धादन्येन पार्श्वेन तद्वदुत्तानं द्वयोर्व्यधे ॥ ६२ ॥
निवातशयनेऽभ्यक्तशिरःपादं हिते रतम् ।
क्षवथुं कासमुद्गारं ष्ठीवनं पानमम्भसः ॥ ६३ ॥
अधोमुखस्थितिं स्नानं दन्तधावनभक्षणम् ।
सप्ताहं नाचरेत् स्नेहपीतवच्चात्र यन्त्रणा ॥ ६४ ॥
रुजि कोष्णहविःसेकैस्त्र्यहान्मुक्त्वाक्षि सेचयेत् ।
वातघ्नैः सप्तमे त्वह्नि त्यजेद् बन्धं च यन्त्रणा ॥ ६५ ॥
आस्थैर्यलाभान्नेत्रस्य न पश्येत् सूक्ष्मभासुरम् ।
रुजाशोफाधिमन्था(न्थाः ?) स्युरपथ्यैस्तेषु तत्क्रिया ॥
पयस्याद्यैश्च लोध्राद्यै(र्वर्त्य)जात्यादिनाचरेत् ।
वेधे रूढे पुनर्वर्तिराढक्यादिकृता शुभा ॥ ६७ ॥

इति हृदयप्रिये तृतीयखण्डे दृष्टिरोगचिकित्सितं नाम
चतुर्थोऽध्यायः ॥

---

अथ पञ्चमोऽध्यायः ।

(सर्वाक्षिरोगनिदानम्)

वातेन तत्राभिष्यन्दे चला रुक् शुष्कदूषिका ।
निमेषोन्मेषणं कृच्छ्राच्चक्षुः सूक्ष्मैरिवावृतम् ॥ १ ॥
शल्यैः शीतं चाच्छमश्रु सोऽभिष्यन्द उपेक्षितः ।
अधिमन्थो भवेत् तत्र ललाटाक्षिभ्रुवादयः ॥ २ ॥
मथ्यमाना इव रुजा त्यक्तः सोऽथ हताधिमन्थः ।
भवेज्जुष्टो दृष्टिभवा व्रणेनानन्तवेदनः ॥ ३ ॥

वायुर्मन्याक्षिशङ्खाद्यैरन्यतस्तीव्ररुक्करः ।
रुग्राग[illegible]पैच्छि[illegible] [illegible] विलोचनम् ॥ ४ ॥
सङ्कोचयति चेत् स स्यादन्यतोवातसंज्ञितः ।
वह्निजिह्मं भवेच्चक्षुः [illegible] वातपर्यये ॥ ५ ॥
पित्तस्यन्देऽश्रु शीतोष्णं क्षारोक्षितसमातिरुक् ।
दाहः क्लेदो बहिश्शोफः श्यावता चाधिमन्थके ॥ ६ ॥
ज्वलदङ्गारकीर्णाभं यकृत्पिण्डसमप्रभम् ।
स्यादक्षि कफजे तु स्यान्निद्रान्नानभिनन्दनम् ॥ ७ ॥
कण्डूः शोफो महान् सान्द्रश्वेतपिच्छास्रदूषिका ।
अधिमन्थे नतं कृष्णमुन्नतं शुक्लमण्डलम् ॥ ८ ॥
प्रसेको नासिकाध्मानं पांसुपूर्णमिवेक्षणम् ।
रक्तस्यन्दे पित्तवत् स्याद् रक्तश्यावं च लोचनम् ॥ ९ ॥
मन्थेऽक्षि ताम्रपर्यन्तमुत्पाटनसमानरुक् ।
असृङ्निमग्नारिष्टाभं कृष्णं दृक् स्पर्शनाक्षमा ॥ १० ॥
सर्वे मन्थाः शङ्खदन्तशिरोगण्डातिरुक्कराः ।
वातात् सा[illegible]शुष्काक्षिपाको [illegible]पलेपवान् ॥ ११ ॥
कृच्छ्रोन्मीलनिमीलश्च शुष्कवर्त्मा हिमप्रियः ।
सशोफाख्यो मलैः [illegible] सशोफवान् ॥ १२ ॥
पक्को[illegible] [illegible] [illegible]श्रुमान् ।
अल्पशो[illegible] [illegible] पाकोऽन्यैर्लक्षणैस्तथा ॥ १३ ॥
अक्षिपाकात्ययः [illegible] [illegible] कलुषाश्रुणा ।
कफोपदिग्धनासो [illegible] [illegible]रागवत् ॥ १४ ॥
दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ।
अम्लसारोऽम्लता नीतः पित्तरक्तोद्बणैर्मलैः ॥ १५ ॥
सिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ।
सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ॥ १६ ॥
अम्लोषितोऽयमित्युक्ता भेदाः षोडश सर्वगाः ।
हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ १७ ॥

कफपित्तास्रसम्भूता सप्तपञ्चत्रिरात्रतः ।
मन्था घ्नन्ति क्रमाद् दृष्टिं पैत्तः सद्योऽप्यपथ्यतः ॥ १८ ॥

(सर्वाक्षिरोगचिकित्सा)

प्राग्रूप एव स्यन्देषु तीक्ष्णं गण्डूषनावनम् ।
कारयेदुपवासं च कोपादन्यत्र वातजात् ॥ १९ ॥
दाहोपदेहरागाश्रुशोफशान्त्यै बिडालकम् ।
कुर्यात् सर्वत्र पत्रैलामरिचस्वर्णगैरिकैः ॥ २० ॥
सरसाञ्जनयष्ट्याह्वनतचन्दनसैन्धवैः ।
सैन्धवं नागरं तार्क्ष्यं घृष्टं मण्डेन सर्पिषः ॥ २१ ॥
वातजाते शाबरं वा प्रयोज्यं घृतभर्जितम् ।
मांसीपद्मककालेययष्ट्याह्वैः पित्तरक्तयोः ॥ २२ ॥
मनोह्वाफलिनीक्षौद्रैः कफे सर्वैस्तु सर्वजे ।
गोमयाम्भःश्रृतं वन्यकुलत्थं वितुषीकृतम् ॥ २३ ॥
नेत्रेऽवचूर्णितं रात्रौ सद्योऽभिष्यन्दनाशनम् ।
त्रिदोषसन्निपातोत्थं कोपं हन्ति समाक्षिकम् ॥ २४ ॥
शिग्रुपल्लवजं तोयं भूतिव्योषादिजा तथा ।
आश्च्योतनं मारुतजे क्वाथो बिल्वादिना हितः ॥ २५ ॥
कोष्णः सहैरण्डजटाबृहतीमधुशिग्रुभिः ।
माञ्जिष्ठारजनीलाक्षाद्राक्षर्द्धिमधुकोत्पलैः ॥ २६ ॥
क्वाथः सशर्करः शीतः सेचनाद् रक्तपित्तजित् ।
पुण्ड्र्यष्टीनिशाभूतिः प्लुता स्तन्ये सशर्करे ॥ २७ ॥
छागदुग्धेऽथवा दाहरुग्रागाश्रुनिवर्तिनी ।
श्वेतलोध्रं समधुकं घृतभृष्टं विचूर्णितम् ॥ २८ ॥
वस्त्रस्थं स्तन्यमृदितं रक्तपित्ताभिघातजित् ।
नागरत्रिफलानिम्बवाशालोध्ररसः कफे ॥ २९ ॥
कोष्णमाश्च्योतनं मिश्रैर्भेषजैः सान्निपातिके ।
अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते ॥ ३० ॥

अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ।
रूक्षवर्तिं च सुमनःपूर्णिकां सैन्धवादिकाम् ॥ ३१ ॥

वर्तिं पाशुपताख्यां च यथादोषं प्रयोजयेत् ।
शुष्काक्षिपाके हविषः पानमक्ष्णश्च तर्पणम् ॥ ३२ ॥

घृतेन जीवनीयेन नस्यं तैलेन वाणुना ।
परिषेको हितश्चात्र पयः कोष्णं ससैन्धवम् ॥ ३३ ॥

सर्पिर्युक्तं स्तन्यपिष्टमञ्जनं च महौषधम् ।
सशोफे चाल्पशोफे च स्निग्धस्य व्यधयेत् सिराम् ॥ ३४ ॥

ततो विरेचनं कार्यं तालीशाद्येन चाञ्जनम् ।
अम्लोषिते प्रयुञ्जीत पित्ताभिष्यन्दसाधनम् ॥ ३५ ॥

उत्क्लिष्टाः कफपित्तास्रनिचयोत्थाः कुकूणकः ।
पक्ष्मोपरोधः शुष्काक्षिपाकः पूयालसो बिसः ॥ ३६ ॥

पोथक्यम्लोषिताल्पाख्या स्यन्दमन्था विनानिलात् ।
एतेऽष्टादश पिल्लाख्या दीर्घकालानुबन्धिनः ॥ ३७ ॥

चिकित्सा पृथगेतेषामुक्ताथापि च वक्ष्यते ।
स्नेहनं छर्दनं चानु रक्तमोक्षो विरेचनम् ॥ ३८ ॥

निर्लिखेद् वर्त्म वा शुद्धेः पुनश्चापि तदा तदा ।
तुत्थकाद्येनाञ्जनं च करञ्जाद्येन चाचरेत् ॥ ३९ ॥

अभयारसपिष्टं वा तर्कारं पिल्लनाशनम् ।
भावितं बस्तमूत्रेण तर्कारं देवदारु वा ॥ ४० ॥

लाक्षानिर्गुण्डिकाद्यैर्वा मषी पिल्लविनाशिनी ।
चतुर्णवतिरित्यक्ष्णोरुदिताः साधनैर्गदाः ॥ ४१ ॥

हिताचारस्तन्निवृत्त्यै प्रयतेत सदा नरः ।
सिरे द्वे पादमध्यस्थे मूलेनाग्रेण नेत्रगे ॥ ४२ ॥

तस्मादभ्यङ्गसेकादीन् कुर्याद् पादेऽक्षिशुद्धये ।
उपानच्छत्रनिरतः शकुनोपमभक्षणः ॥ ४३ ॥

अथ षष्ठोऽध्यायः ।

(नासारोगनिदानम्)

अत्यम्बुनीहाररजस्स्वेदाच्छर्द्यश्रुनिग्रहैः ।
स्वप्नोपधानवैषम्यात् क्रुद्धा वातोल्बणा मलाः ॥ १ ॥

नासायां पीनसं कुर्युः क्रमाद्वृद्ध्या क्षयप्रदम् ।
तत्र वाताद् घ्राणनाशदन्तशङ्खशिरोव्यथाः ॥ २ ॥

भृशं क्षवश्चिरात् पाकः शिशिराच्छकफस्रुतिः ।
पित्तात् तीक्ष्णो ज्वरः पाकश्चोष्णपीतकफस्रुतिः ॥ ३ ॥

कफाच्छ्वेतघनस्रावः कासः श्वासोऽरुचिर्वमिः ।
कण्डूर्गुरुत्वं मेवैस्तु लक्षणैः सर्वजं वदेत् ॥ ४ ॥

रक्तेन तूरस्सुप्तत्वं दृक् ताम्रा श्वासपूतिता ।
पित्तोक्तं लक्षणं चात्र ते सर्वे चाप्युपेक्षिताः ॥ ५ ॥

दुष्टाः पूत्यास्यतामग्नेरिन्द्रियाणां बलच्युतिम् ।
उरःपार्श्वादिषु रुजां ज्वरं शोफं च कुर्वते ॥ ६ ॥

स्रावं सरक्तं श्यावं तत्र दीर्घानणून् कृमीन् ।
विघट्टनैर्वातकैर्वा क्रुद्धः शृङ्गाटकं व्रजन् ॥ ७ ॥

पवनः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षवः ।
शोषयन् नासिकास्रोतः कफं च कुरुतेऽनिलः ॥ ८ ॥

नासाशोषं तत्र कृच्छ्राच्छ्वासः शुष्कोऽतिनासता ।
वायुना श्लेष्मरुद्धेन स्रोतसी संवृते इव ॥ ९ ॥

जायेते श्वाससंरोधान्नासानाहस्तु स स्मृतः ।
पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ॥ १० ॥

कटुतीक्ष्णैर्घृतैर्नस्यैः कवलैः सर्वजं जयेत् ।
यक्ष्मकृमिक्रमं कुर्याद् यापयेद् दुष्टपीनसम् ॥ २४ ॥
धूमं व्योषोरुबूकादिं भजेत् सर्वजपीनसे ।
क्षवथौ पुटकाख्ये च तीक्ष्णैः प्रधमनं हितम् ॥ २५ ॥
शुण्ठीकुष्ठकणाबिल्वद्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं क्षवथुपुत् ॥ २६ ॥
नासाशोषे बलातैलं पानादौ भोजनं रसैः ।
स्निग्धो धूमस्तथा स्वेदो नासानाहेऽप्ययं विधिः ॥ २७ ॥
पाके दीप्तौ च पित्तघ्नं तीक्ष्णं नस्यादि संस्रुतौ ।
कफपीनसवत् पूतिनासापीनसयोः क्रिया ॥ २८ ॥
पूयरक्ते नवे कुर्याद् रक्तपीनसवत् क्रमम् ।
अतिप्रवृद्धे नाडीवद् दग्धेष्वर्शोऽर्बुदेषु च ॥ २९ ॥
निकुम्भकुम्भसिन्धूत्थमनोह्वालकणाग्निकैः ।
कल्कितैर्घृतमध्वाक्तां वर्तिं घ्राणं प्रवेशयेत् ॥ ३० ॥

इति हृदयप्रिये तृतीयखण्डे नासारोगचिकित्सितं नाम
षष्ठोऽध्यायः ॥

अथ सप्तमोऽध्यायः ।
(कर्णरोगनिदानम्)

अवश्यायजलक्रीडाकर्णकण्डूयनादिभिः ।
मरुत् क्रुद्धः श्रोत्रसिराः प्राप्यालं शूलमावहेत् ॥ १ ॥
अर्धावभेदकं स्तम्भं चिरात् पाकं परिस्रुतीः ।
पित्ताच्छूलं दाहशोफशीतेच्छाशीघ्रपाकवत् ॥ २ ॥
कफाज्जत्रूर्ध्वगुरुता कण्डूशोफौ रुजाल्पता ।
अच्छोष्णघनता पक्वपूये विद्याच्चलादिषु ॥ ३ ॥
करोति श्रवणे शूलमभिघातादिदूषितम् ।
रक्तं पित्तसमानार्ति किञ्चिद्वाधिकलक्षणम् ॥ ४ ॥
शूले पूये त्रिदोषोत्थे विद्याल्लक्षणसङ्करान् ।
अकस्मादुष्णशीतेच्छा श्रुतिजाड्यं च जायते ॥ ५ ॥

वायौ शब्दसिरास्थे स्यात् कर्णनादस्तदाह्वयः ।
स वा श्लेष्मानुगो वायुस्त्यक्तो बाधिर्यकृत् क्रमात् ॥ ६ ॥
वातेन शोषितः श्लेष्मा स्रोतो लिम्पेत् ततो भवेत् ।
रुग् गौरवं पिधानं च स प्रतीनाहसंज्ञितः ॥ ७ ॥
कण्डूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ ।
पित्तरक्तकफस्रावी पूतिकर्णोऽरुजोऽपि वा ॥ ८ ॥
दोषैः क्लेदात् क्षताद्वाऽपि क्लेदजा जन्तवः श्रुतिम् ।
खादन्तः कुर्वते तीव्रां रुजां स कृमिकर्णकः ॥ ९ ॥
विद्रधिः पूर्ववच्चान्यः शोफोऽर्शोऽर्बुदमीरितम् ।
तेषु रुक् पूतिकर्णत्वं बधिरत्वं च जायते ॥ १० ॥
गर्भेऽनिलात्संकुचिता शष्कुली कूचिकर्णकः ।
तद्वन्मांसाङ्कुरो नीरुक् पिप्पली पिप्पलीसमा ॥ ११ ॥
सवर्णः सरुजः शोफः सन्निपाताद् विदारिका ।
पक्वा रा[illegible] ति कृच्छ्रेण संकोचयति शष्कुलीम् ॥ १२ ॥
सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम् ।
कृशा दृढा च तन्त्रीवत् पाली वातेन तन्त्रिका ॥ १३ ॥
पाल्या [illegible]फः पोटयुक्तः परिपोटोऽरुणः सरुक् ।
वाता,दथास्रपित्ताभ्यां गुर्वाभरणभारतः ॥ १४ ॥
उत्पाताख्यो दाहपाकस्फोटशोफैर्युतो रुजा ।
पाल्यां शोफोऽनिलकफादुन्मन्थो नीरुजः स्थिरः ॥ १५ ॥
दुर्विद्धवर्धिते कर्णे सकण्डूदाहपाकरुक् ।
श्वयथुः सन्निपातोत्थः स नाम्ना दुःखवर्धनः ॥ १६ ॥
कफासृक्कृमिजाः सूक्ष्माः सकण्डूक्लेदवेदनाः ।
लिहाख्याः पिटकाः पालीशोषाय स्युरुपेक्षिताः ॥ १७ ॥
पिप्पली सर्वजं शूलं विदारी कूचिकर्णकः ।
एषामसाध्या याप्यैका तन्त्रिकान्यांस्तु साधयेत् ॥ १८ ॥

पञ्चविंशतिरित्युक्ताः कर्णरोगा विभागतः ।

(कर्णरोगचिकित्सा)

कर्णशूले पिबेत् सर्पिर्वातजे वातजिन्निशि ॥ १९ ॥

स्विन्नं कर्णं पूरयेच्च पुटपाकभवै रसैः ।
तैलसिन्धूद्भवालिप्तबिल्वार्केरण्डपत्रजैः ॥ २० ॥

कोष्णैस्तथा वातहरैः स्नेहैरपि यथोचितम् ।
महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात् ॥ २१ ॥

तैलसिक्तात् प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः ।
योज्यश्चैवं भद्रकाष्ठात् कुष्ठाद्वा वातपीनसे ॥ २२ ॥

विहितं च हितं वर्ज्यं शिरस्स्नानं हिमं जलम् ।
पानेऽथ पित्तजे शूले घृतस्निग्धं विरेचयेत् ॥ २३ ॥

द्राक्षायष्टीमृतं स्तन्यं शस्यते कर्णपूरणे ।
क्षौद्रं वा केवलं पित्तघ्नैर्लेप्यादि चाचरेत् ॥ २४ ॥

वामयेत् पिप्पलीसिद्धसर्पिःस्निग्धं कफोद्भवे ।
धूमनावनगण्डूषस्वेदान् कुर्यात् कफापहान् ॥ २५ ॥

लशुनार्द्रकशिग्रूणां रसः कोष्णश्च पूरणे ।
अजाविमूत्रवंशत्वक्सिद्धं तैलं च पूरणम् ॥ २६ ॥

रक्तजे पित्तवत् कार्यं सिरां चाशु विमोक्षयेत् ।
पक्के पूयवहे कर्णे धूमगण्डूषनावनम् ॥ २७ ॥

युञ्ज्यान्नाडीविधानं च दुष्टव्रणहरं च यत् ।
स्रोतः प्रमृज्य पिचुना प्रातः सायं च धूपयेत् ॥ २८ ॥

पुरेण माक्षिकेणानु पूरयेत्, सुरसादिजः ।
चूर्णोऽवचूर्णने शस्तो, मृजावर्त्तिविमिश्रणे ॥ २९ ॥

क्षारतैलं प्रियङ्ग्वाद्यं हितं प्रतिविषादिकम् ।
नादबाधिर्ययोः कुर्याद् वातशूलोक्तमौषधम् ॥ ३० ॥
श्लेष्मानुबन्धे श्लेष्माणं प्राग् जयेद् वमनादिभिः ।
बाधिर्यं वर्जयेद् बालवृद्धयोश्च चिरं च यत् ॥ ३१ ॥

प्रतीनाहे परिक्लेद्य स्नेहस्वेदैर्विशोधयेत् ।
कर्णशोधनकेनानु कर्णं तैलस्य पूरयेत् ॥ ३२ ॥

मधुशुक्तसैन्धववमधोमातुलुङ्गरसस्य वा ।
क्रमोऽयं मलपूर्णेऽपि कर्णे कण्ड्वां कफापहम् ॥ ३३ ॥

नस्यादि तद्वच्छोफेऽपि कटूष्णैश्चात्र लेपनम् ।
कर्णस्रावोदितं कुर्यात् पूतिकृमिणकर्णयोः ॥ ३४ ॥

पूरणं कटुतैलेन विशेषात् कृमिकर्णके ।
वमिपूर्वा हिता कर्णविद्रधौ विद्रधिक्रिया ॥ ३५ ॥

पित्तोत्थकर्णशूलोक्तं कर्तव्यं क्षतविद्रधौ ।
अर्शोऽर्बुदेषु नासावदामा कर्णविदारिका ॥ ३६ ॥

कर्णविद्रधिवत् साध्या पालीशोषेऽनिलापहम् ।
प्रियालबीजयष्ट्याह्वहयगन्धायवान्वितैः ॥ ३७ ॥

तिलैरुद्वर्तनं कार्यं तत् पाल्यां स्वेदपूर्वकम् ।
ततः पुष्टिकरैः स्नेहैरभ्यङ्गं नित्यमाचरेत् ॥ ३८ ॥

शतावरीवाजिगन्धापयस्यैरण्डजीवकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम् ॥ ३९ ॥

पालीं छित्वाधिककृशां शेषां सन्धाय पोषयेत् ।
छेदे सद्योव्रणोक्ताक्रियाचारपरो भवेत् ॥ ४० ॥

याप्यैवं तन्त्रिकाख्यापि परिपोटेऽप्ययं विधिः ।
उत्पाते शीतलैर्लेपो जलौकोहृतशोणिते ॥ ४१ ॥

पाल्यामभ्यञ्जनं कार्यं विसर्पविहितैर्घृतैः ।
उन्मन्थेऽभ्यञ्जनं तैलं गोधाकर्कवसान्वितम् ॥ ४२ ॥

तालपत्र्यश्वगन्धार्कवाकुची*फलसैन्धवैः ।
सुरसालाङ्गलीभ्यां च सिद्धं तीक्ष्णं च नावनम् ॥ ४३ ॥

दुर्विद्धेऽश्मन्तजम्ब्वाम्रपत्रक्वाथेन सेचिताम् ।
तैलेन पालीं स्वभ्यक्तां सुश्लक्ष्णैरवचूर्णयेत् ॥ ४४ ॥

---

तिलसैन्धवैरिति मुद्रिताष्टाङ्गहृदयपाठः.

चूर्णैर्मधुकमञ्जिष्ठाग्रपौण्ड्राह्वनिशोद्भवैः ।
लाक्षाविळङ्गसिद्धं च तैलमभ्यञ्जने हितम् ॥ ४५ ॥

लिह्यां गोमयपिण्डेन बहिः स्विन्नां विलेपयेत् ।
विळङ्गसारेणाश्मना मूत्रपिष्टेन चाथवा ॥ ४६ ॥

एतैरभ्यञ्जनार्थं च कटुतैलं विपाचयेत् ।
सनिम्बपत्रमदनमरिचैर्लैहिका व्रणे ॥ ४७ ॥

इति हृदयप्रिये उत्तरखण्डे कर्णरोगचिकित्सितं नाम
सप्तमोऽध्यायः ॥

---

अथाष्टमोऽध्यायः ।

(मुखरोगनिदानम्)

क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वन्त्यन्तर्मुखं गदान् ।
तत्र खण्डोष्ठ इत्युक्तो वातेनोष्ठो द्विधा कृतः ॥ १ ॥

कोपस्त्वत्र पृथग् दोषैः सन्निपातेन शोणितात् ।
तत्तद्विसर्पवद्विद्यात् लक्षणं तस्य शोणितात् ॥ २ ॥

तत्क्षयादर्बुदन्तु स्यात् खर्जूराभं तु मांसतः ।
मांसपिण्डोपमावोष्ठौ स्यातां च क्रिमिणौ क्रमात् ॥ ३ ॥

तैलाभश्वयथुक्लेदौ सकण्ड्वौ मेदसा मृदू ।
क्षताच्च दोषबलतो विविधोपद्रवान्वितौ ॥ ४ ॥

जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम् ।
गण्डालजी स्थिरः शोफो गण्डे दाहरुजान्वितः ॥ ५ ॥

वातादुष्णसहा दन्ताः शीताख्यस्पर्शैत्यरुक्कराः ।
दन्तहर्षस्तु दन्तानामम्लशीतैर्व्यथोद्भवः ॥ ६ ॥

स्फुटनं भेदनं दन्ते मूले रुग् दन्तभेदतः ।
चालश्चलद्भिर्दशनैः सरुजैरधिदन्तकः ॥ ७ ॥

दन्तेऽधिके जायमाने तस्मिन् स्यादतिवेदना ।
अधावनान्मलो दन्ते स्थिरो वातेन शोषितः ॥ ८ ॥

शर्करा सा शातनन्ती वृद्धा दन्तं कपालिका ।
श्यावो दन्तो वातपित्ताद् दोषैरुल्बणमारुतैः ॥ ९ ॥
शोषिते मज्जि सुषिरे दन्तेऽन्नमलपूरिते ।
कृमयस्स्युर्दन्तमूले तैर्दन्तोऽहेतुतीव्ररुक् ॥ १० ॥
चलश्यावोऽस्रपूयस्रुक् स चोक्तः कृमिदन्तकः ।
अहेतुरक्तकृद्दन्तमांसं सूक्ष्मव्रणान्वितम् ॥ ११ ॥
शीतादाख्यं श्लेष्मरक्तात् पित्तास्राद्दाहशोफवत् ।
मांसं भवेत् सोपकुशो दन्तस्स्यात् चलितोऽल्परुक् ॥ १२ ॥
कफास्रादतिरुक् शोफो घनस्स्याद् दन्तपुप्पुटः ।
दन्तमांसे मलैस्सास्रैर्बाह्यान्तश्श्वयथुर्गुरुः ॥ १३ ॥
सरुग्दाहः स्रवेद् भिन्नः पूयास्रं दन्तविद्रधिः ।
पित्तरक्ताद्दन्तमूले सुषिरः सुषिराभिधः ॥ १४ ॥
लालां स्रवेत् सन्निपातात् स महासुषिरो गदः ।
दन्तान्ते कीलवच्छोफः सोऽधिमांसोऽतिरुक्कफात् ॥ १५ ॥
त्यक्ता नाळीव्रणान् कुर्युर्दन्तमांसाश्रया गदाः ।
जिह्वा वातात् कण्टकिता स्यात् सुप्ता स्फुटिता खरा ॥
दाहोषासहिता पित्ताद् रक्तैर्मांसाङ्कुरैश्चिता ।
शाल्मलीकण्टकाभैस्तु कफेन बहळा गुरुः ॥ १७ ॥
कफपित्तादधश्शोफो जिह्वास्तम्भकरोऽलसः ।
प्रबन्धनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः ॥ १८ ॥
अधिजिह्वो भुक्तिवाक्यरोध्यस्रकफपित्तजः ।
तादृगेवोपजिह्वस्तु जिह्वायामुपरि स्थितः ॥ १९ ॥
पिटकास्तालुमांसे स्युः वातात् स्रावरुजान्विताः ।
तालुमूले कफात् सास्रात् शोफस्स्यात् पिच्छिलो मृदुः ॥
बहिर्नयन् नासयान्नं वमिकृद् गळशुण्डिका ।
पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम् ॥ २१ ॥
पित्तेन तालुपाकस्स्यात् पूयास्रावी महारुजः ।
वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ॥ २२ ॥

जिह्वाप्रबन्धजाः कण्ठे दारुणा मार्गरोधिनः ।
मांसाङ्कुरा रोहिणी स्यात् रक्तेनापि मलैः पृथक् ॥ २३ ॥
चयाच्च लक्षणैः स्वैः स्वैर्युक्ता सा शीघ्रकारिणी ।
भूरिमांसाङ्कुरवृता तीव्रतृड्ज्वरमूर्धरुक् ॥ २४ ॥
शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी ।
व्याप्तसर्वगळश्शीघ्रजन्मपाको महारुजः ॥ २५ ॥
पूतिपूयनिभास्रावी श्वयथुर्गळविद्रधिः ।
गळार्बुदन्तु कण्ठादौ शोफो रक्तात् स्थिरोऽल्परुक् ॥ २६ ॥
पवनश्लेष्ममेदोभिर्गलगण्डो भवेद् बहिः ।
वर्धमानस्स कालेन मुष्कवत् लम्बतेऽप्यरुक् ॥ २७ ॥
वातात् सञ्चारिणो वक्त्रे व्रणा रूक्षारुणास्ततः ।
ताम्रावोष्ठौ खरा जिह्वा मुखपाको हिमासहः ॥ २८ ॥
पित्तात् पाके तिक्तमास्ये दाहः क्षारोक्षितोपमः ।
तद्वद्रक्तात् तत्स्रुतिश्च कफात् पिच्छिल्यकण्डुता ॥ २९ ॥
सर्वैस्सर्वाकृतिः पाको मुखे स्यादपि पूतिता ।
अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः ॥ ३० ॥
यात्यूर्ध्वं वक्त्रदौर्गन्ध्यं कुर्वन्नूर्ध्वगुदस्तु सः ।
अन्तःकपोलमाश्रित्य श्यावपाण्डुकफोऽर्बुदम् ॥ ३१ ॥
कुर्यात्तद्*घटितं छिन्नं मृदितं च विवर्धते ।
असाध्यौ मांसरक्तोष्ठावोष्ठकोपश्च सर्वजः ॥ ३२ ॥
जलाद्विना चार्बुदानि स्याद्वाल्यस्सुषिरो महान् ।
दन्तभेदो दन्तनाड्यो रोहिणी रक्तसर्वजा ॥ ३३ ॥
शतघ्न्यूर्ध्वगुदौ पक्वा चोपजिह्वातिवत्सरा ।
गळगण्डस्स्वरभ्रंशी पिटका तालुजालसः ॥ ३४ ॥
याप्यस्तु दन्तहर्षोल्व्यश्शेषान् शस्त्रौषधैर्जयेत् ।

(मुखरोगचिकित्सा)

खण्डोष्ठस्य विलिख्यान्तौ स्यूत्वा व्रणवदाचरेत् ॥ ३५ ॥

---

* पाटितमित्यष्टाङ्गहृदये.

यष्टीज्योतिष्मतीलोध्रश्रावणीशारिवोत्पलैः ।
पटोल्या काकमाच्या च तैलमभ्यञ्जनं पचेत् ॥ ३६ ॥
नस्यं च तैलं वातघ्नं मधुरस्कन्धसाधितम् ।
महास्नेहेन वातोष्ठे सिद्धेनाक्तः पिचुर्हितः ॥ ३७ ॥
देवधूममधूच्छिष्टगुल्गुलुअमरदारुभिः ।
यष्ट्याह्वचूर्णयुक्तेन तैलेन प्रतिसारणम् ॥ ३८ ॥
नाल्यौष्ठं स्वेदयेद्दुग्धसिद्धैरेरण्डपल्लवैः ।
खण्डौष्ठविहितं तस्य नस्यं मूर्ध्नि च तर्पणम् ॥ ३९ ॥
पित्ताभिघातजावोष्ठौ जलौकोभिरुपाचरेत् ।
लोध्रसर्जरसक्षौद्रमधुकैः प्रतिसारणम् ॥ ४० ॥
गुडूचीयष्टिपतङ्गसिद्धमभ्यञ्जने घृतम् ।
पित्तविद्रधिवच्चात्र क्रिया शोणितजेऽपि च ॥ ४१ ॥
इदमेव नवे कार्यं कर्मोष्ठे तु कफातुरे ।
पाठाक्षारमधुव्योषैर्हृतास्रे प्रतिसारणम् ॥ ४२ ॥
धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिदः ।
स्विन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना ॥ ४३ ॥
प्रियङ्गुलोध्रत्रिफलामाक्षिकैः प्रतिसारयेत् ।
सक्षौद्रैर्घर्षणं तीक्ष्णैर्भिन्ने शुद्धे जलार्बुदे ॥ ४४ ॥
आमाद्यवस्थास्वलजी गण्डे शोफवदाचरेत् ।
कुर्यात् स्वेदं शीतदन्ते गण्डूषैर्वातहारिभिः ॥ ४५ ॥
डाडिमत्वग्वरातार्क्ष्यकान्ताजम्वास्थिनागरैः ।
ससिन्धूत्थवनैः कार्यं सक्षौद्रं प्रतिसारणम् ॥ ४६ ॥
अणुतैलेन नस्यं च तप्ततैलैर्दहेच्च वा ।
दन्तहर्षे दन्तचाले स्निग्धा वातहराः क्रियाः ॥ ४७ ॥
तुत्थलोध्रकणाश्रेष्ठापत्तङ्गपटुघर्षणम् ।
अधिदन्तकमालिप्तं यदा क्षारेण जर्जरम् ॥ ४८ ॥
कृमिदन्तवदुत्पाट्य तद्वच्चोपाचरेत्तदा ।
अनवस्थितरक्ते च दग्धे व्रण इव क्रिया ॥ ४९ ॥

अहिंसन् दन्तमूलानि दन्तेभ्यश्शर्करां हरेत् ।
कपालिकायां च पुनः क्षारक्षौद्रविलेपनम् ॥ ५० ॥

स्वेदं विस्रावणं स्नेहं चाचरेत् कृमिदन्तके ।
गुळेन पूरितं रन्ध्रं दहेत् कुब्जशलाकया ॥ ५१ ॥

सप्तच्छदार्कक्षीराभ्यां पूरणं कृमिशूलजित् ।
हिङ्गुकट्फलकासीसस्वर्चिकाकुष्ठवेल्लजम् ॥ ५२ ॥

रजो वस्त्रे धृतं दन्ते तत्तैलं चाशु शूलजित् ।
इत्यशान्तौ दृढमपि दन्तं क्षारैर्विचालितम् ॥ ५३ ॥

संदंशेनोद्धरेच्चानु तैलं मधुकवन्मधु ।
गण्डूषार्थं स्वादु नस्यं योज्यं स्निग्धहिमः क्रमः ॥ ५४ ॥

नोद्धरेदुत्तरं दन्तं स्थिरं क्षीणस्य चाधरम् ।
विस्राविताम्रे शीतादे सक्षौद्रैः प्रतिसारणम् ॥ ५५ ॥

मुस्तार्जुनत्वक्त्रिफलाफलिनीतार्क्ष्यनागरैः ।
तत्क्वाथः कबळो नस्यं तैलं मधुरसाधितम् ॥ ५६ ॥

लिखित्वोपकुशं स्विन्नं घृतमण्डमधुद्रुतैः ।
लिम्पेत् प्रियङ्गुपत्तङ्गलाक्षासिन्धूत्थगैरिकैः ॥ ५७ ॥

सकुष्ठशुण्ठीमरिचयष्टीमधुरसाञ्जनैः ।
सुखोष्णो घृतमण्डोऽनु तैलं वा कबळग्रहः ॥ ५८ ॥

दन्तपुप्पुटके स्विन्ने भिन्ने विलिखिते मुहुः ।
यष्ट्याह्वस्वर्चिकाशुण्ठीसैन्धवैः प्रतिसारणम् ॥ ५९ ॥

विद्रधौ कटुतीक्ष्णोष्णरूक्षैः कबळलेपनम् ।
छित्वाधिमांसकं चूर्णैः सक्षौद्रैः प्रतिसारयेत् ॥ ६० ॥

वचातेजोवतीपाठास्वर्ध्चिकायावशूकजैः ।
पटोलनिम्बत्रिफलाकषायः कबलो हितः ॥ ६१ ॥

नाळीं दन्तानुगां दन्तं समुद्धृत्याग्निना दहेत् ।
कुब्जानेकगतीं पूर्णां गुळेन *मचणेन वा ॥ ६२ ॥

---

* मदनेनेत्यष्टाङ्गहृदये.

धावनं जातिमदनखादिरस्वादुकण्टकैः ।
क्षीरिवृक्षाम्बुगण्डूषो नस्यं तैलं च तच्छृतम् ॥ ६३ ॥
ओष्ठकोपोदितं जिह्वाकण्टकेषु यथामलम् ।
विधेयं पित्तजे रक्तस्रावणं च विलेखनात् ॥ ६४ ॥
अलसे कफपित्तघ्नं नवे शस्त्रैर्न तं स्पृशेत् ।
उन्नाम्य जिह्वामाकृष्टां बडिशेनाधिजिह्विकाम् ॥ ६५ ॥
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादि च ।
उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत् ॥ ६६ ॥
कफघ्नैः शुण्डिका साध्या नस्यगण्डूषघर्षणैः ।
अपक्वे तालुपाके तु कासीसक्षौद्रताक्ष्यर्जैः ॥ ६७ ॥
घर्षणं कवलश्शीतः कषायो मधुरौषधैः ।
पक्वेऽष्टापदवद् भिन्ने तीक्ष्णोष्णैः प्रतिसारणम् ॥ ६८ ॥
वृषनिम्बपटोलाद्यैस्तिक्तैः कवळधारणम् ।
तालुशोषे त्वतृष्णस्य सर्पिरौत्तरभक्तिकम् ॥ ६९ ॥
कणाशुण्ठीशृतं पानमम्लैर्गण्डूषधारणम् ।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादि कर्म च ॥ ७० ॥
क्वाथः पाने तु दार्वीत्वङ्निम्बताक्ष्यकलिङ्गजः ।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ७१ ॥
निचुळं कटभी मुस्तं देवदारु महौषधम् ।
वचा दन्ती च *दूर्वा च लेपः कोष्णोऽर्तिशोफहा ॥ ७२ ॥
अथान्तर्बाह्यतः स्विन्नां वातरोहिणिकां लिखेत् ।
अङ्गुलीशस्त्रकेणाशु पट्वयुक्तनखेन वा ॥ ७३ ॥
पञ्चमूलाम्बुकबळस्तैलं गण्डूषनावनम् ।
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः ॥ ७४ ॥
घर्षेत् सलोध्रपत्तङ्गैः कवलः क्वथितैश्च तैः ।
उपाचरेदेवमेव प्रत्याख्यायास्रसम्भवाम् ॥ ७५ ॥

---

* 'मूर्वा' इत्यष्टाङ्गहृदयपाठः.

सागारधूमैः कटुकैः कफजां प्रतिसारयेत् ।
नस्यगण्डूषयोस्तैलं साधितं च प्रशस्यते ॥ ७६ ॥

अपामार्गफलश्वेतादन्तीजन्तुघ्नसैन्धवैः ।
विद्रधौ स्राविते श्रेष्ठारोचनाताक्ष्यगैरिकैः ॥ ७७ ॥

सलोध्रपटुपत्तङ्गकणैर्गण्डूषघर्षणम् ।
गळगण्डः पवनजः स्विन्नो निस्स्रुतशोणितः ॥ ७८ ॥

तिलैर्बीजैश्च लट्वोमाप्रियाळशणसम्भवैः ।
उपनाह्यो व्रणे रूढे प्रलेप्यश्च पुनः पुनः ॥ ७९ ॥

शिग्रुतिल्वकतर्कारीगजकृष्णापुनर्नवैः ।
काळामृतार्कमूलैश्च पुष्पैश्च करघाटजैः ॥ ८० ॥

एकैषिकान्वितैः पिष्टैः सुरया काञ्जिकेन वा ।
गुडूचीनिम्बकुटजहंसपादीबलाद्वयैः ॥ ८१ ॥

साधितं पाययेत् तैलं सकृष्णादेवदारुभिः ।
कर्तव्यं कफजेऽप्येतत् स्वेदविस्रापणे त्वाति ॥ ८२ ॥

वत्सकाद्यैः शृतं तैलं पिबेत् सपटुपञ्चकैः ।
कफघ्नधूमवमननावनादि च शीलयेत् ॥ ८३ ॥

मेदोभवे सिरां विध्येत् कफघ्नं च विधिं भजेत् ।
असनादिरजश्चैनं प्रातर्मूत्रेण पाययेत् ॥ ८४ ॥

मुखपाकेऽनिलात् कृष्णापट्वेलाप्रतिसारणम् ।
तैलं वातहरैस्सिद्धं हितं कबळनस्ययोः ॥ ८५ ॥

पित्तास्रे पित्तरक्तघ्नः कफघ्नश्च कफे विधिः ।
यथादोषोदयं कार्यं सन्निपाते चिकित्सितम् ॥ ८६ ॥

नवेऽर्बुदे त्वसंवृद्धे छेदिते प्रतिसारणम् ।
त्वचिकानागरक्षौद्रैः क्वाथो गण्डूष इष्यते ॥ ८७ ॥

गुडूचीनिम्बवल्कोत्थो मधुतैलसमन्वितः ।
यवान्नभुक् तीक्ष्णतैलनस्याभ्यङ्गांस्तथाचरेत् ॥ ८८ ॥

क्वाथं सप्तछदाद्यं च पटोलाद्यं च पाययेत् ।
खदिराद्युद्भवं तैलं तदादिगुलिकामपि ॥ ८९ ॥

मुखे "पीतकचूर्णं" च यथाकालं प्रयोजयेत् ।

गोमूत्रक्वथितविलीनविग्रहाणां
पथ्यानां जलमिसिकुष्ठभावितानाम् ।
अत्तारं नरमणवोपि वक्त्ररोगाः
श्रोतारं नृपमिव न स्पृशन्त्यनर्थाः ॥ ९० ॥

इति हृदयप्रिये तृतीयखण्डे मुखरोगचिकित्सितं नाम
अष्टमोऽध्यायः ॥

---

अथ नवमोऽध्यायः ।

(गण्डमालानाळीव्रणादिनिदानम्)

मेदःस्थाः कण्ठमन्याक्षकक्षावंक्षणगा मलाः ।
सवर्णान् कठिनान् स्निग्धान् गण्डानामलकाकृतीन् ॥ १ ॥

कुर्वते ते केचिदामाः पक्वाः केचित् स्रवन्ति च ।
नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः ॥ २ ॥

गण्डमालापची चेयं त्याज्या सा सर्वमिज्वरा ।
अच्छेदात् पक्वशोफस्य व्रणे चापथ्यसेविनः ॥ ३ ॥

अनुप्रविश्य मांसादीन् पूये दूरं प्रधावति ।
व्रणे नाळीव नाळी स्यात् ऋजुर्वक्रापि वा बहुः ॥ ४ ॥
सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पञ्चमी ।
तत्तद्व्रणसमा चिह्नैस्त्यजेत् तां सर्वलक्षणाम् ॥ ५ ॥
अन्तःस्थितेन शल्येन सास्रमुष्णं च फेनिलम् ।
स्रवेत् सशोणितं पूयं नाळीं तां शल्यजां वदेत् ॥ ६ ॥

कफप्रधानाः कुर्वन्ति मेदोमांसास्रगा मलाः ।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात् स्मृतः ॥ ७ ॥
दोषास्रङ्मांसमेदोस्थिसिरा व्रणभवा नव ।
वातात्तत्रासितोऽहेतुवृद्धिहानी रुजान्वितः ॥ ८ ॥
मृदुश्चलो विभिन्नस्तु स्रावयत्यच्छशोणितम् ।
पित्तात् सदाहः पीताभो रक्तो वा पच्यते भृशम् ॥ ९ ॥
भिन्नोऽस्रमुष्णं स्रवति, श्लेष्मजो नीरुजो घनः ।
शीतस्सवर्णः कण्डूमान् पक्वः पूयं स्रवेद् घनम् ॥ १० ॥

दुष्टेऽसृजि सजन्तुस्स्यात् सस्रावः पैत्तलक्षणः ।
मांसैर्दुष्टैर्महान् ग्रन्थिस्सिरानद्धः कफाकृतिः ॥ ११ ॥

मेदसा श्लेष्मतुल्योऽपि भवेत् स तु मृदुश्चलः ।
विभिन्नस्तु घनं मेदः ताम्रासितसितं स्रवेत् ॥ १२ ॥

अस्थिग्रन्थिस्त्वस्थिभङ्गात् सहजास्थिसमुन्नतेः ।
क्रुद्धेन वायुना शुष्कैस्सिराजालैस्ससशोणितैः ॥ १३ ॥

वक्रीकृतैर्भवेत् ग्रन्थिर्नीरुजः ससिराह्वयः ।
अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ॥ १४ ॥

क्षताद्वा रुधिरं दुष्टं संशोष्य ग्रन्थिमावहेत् ।
कण्डूदाहयुतं वायुर्व्रणग्रन्थिरयं स्मृतः ॥ १५ ॥

साध्या दोषास्रमेदोजा न गळोदरमर्मगाः ।
षोढार्बुदं स्यान्मेदोन्तैर्दोषाद्यैस्तन्न पच्यते ॥ १६ ॥

स्थैर्यान्मेदःकफाधिक्यात् स्रोतस्तु ग्रन्थिलक्षणम् ।
मांसजन्त्वश्मकठिनं सवर्णं स्यादवेदनम् ॥ १७ ॥

रक्तं सांकुरमांसाभं पिण्डितं वर्धते जवात् ।
सिराश्रयं च दुष्टास्रं वर्धयेत्तदवेदनम् ॥ १८ ॥

तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ।
कक्ष्येति कक्षासन्नेषु प्रायो देहेषु सानिलात् ॥ १९ ॥

पित्ताद् भवन्ति पिटकास्सूक्ष्मा लाजोपमा घनाः ।
तादृशी महती त्वेका गन्धनामेति कीर्तिता ॥ २० ॥

मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारिणः ।
कक्षाभागेषु जायन्ते येऽग्न्याभा साग्निरोहिणी ॥ २१ ॥

पञ्चाहात् सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम् ।
विदारीकन्दकठिना विदारी कक्षवंक्षणे ॥ २२ ॥

मेदोऽनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।
भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्बणोऽनिलः ॥ २३ ॥

मांसं विशोष्य ग्रथितां शर्करामुपपादयेत् ।
दुर्गन्धस्राविणीं दोषैस्तां विद्याच्छर्करार्बुदम् ॥ २४ ॥

(गण्डमालानालीव्रणादिचिकित्सा)

ऊर्ध्वाधश्शोधनं पेयमपच्यां साधितं घृतम् ।
दन्तीद्रवन्तीत्रिवृताजालिनीदेवदालिभिः ॥ २५ ॥
शीलयेत् कफमेदोघ्नं धूमगण्डूषनावनम् ।
सिरयापहरेद्रक्तं पिबेन्मूत्रेण ताक्ष्यर्जम् ॥ २६ ॥
ग्रन्थीनपक्वानालिम्पेत् नाकुलीपटुनागरैः ।
स्विन्नान् लवणपोट्टल्या कठिनाननुमर्दयेत् ॥ २७ ॥
शमीमूलकशिग्रूणां बीजैस्सयवसर्षपैः ।
लेपः पिष्टोऽम्लतक्रेण ग्रन्थिगण्डविलायनः ॥ २८ ॥
पाकोन्मुखान् स्रुतास्रस्य पित्तश्लेष्महरैर्जयेत् ।
अपक्वानेव चोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥ २९ ॥
काकादिन्यादिकं तैलं भद्राद्यं च वचादिकम् ।
भजेच्च शरपुङ्खोत्थं मूलं तण्डुलवारिणा ॥ ३० ॥
नस्याल्लेपाच्च दुष्टारुरपचीव्रणजन्तुजित् ।
इत्यशान्तौ गदस्यान्यपार्श्वे जङ्घासमाश्रितम् ॥ ३१ ॥
इन्द्रवस्तेरधोवोर्ध्वं भेदो हृत्वाग्निना दहेत् ।
उपनाह्यानिलान्नाळीं पाटितां साधु लेपयेत् ॥ ३२ ॥
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैस्ससैन्धवैः ।
पैत्तीन्तु तिलमञ्जिष्ठानागदन्तीनिशाद्वयैः ॥ ३३ ॥
श्लैष्मिकीं तिलसौराष्ट्रीनिकुम्भारिष्टसैन्धवैः ।
शल्यजां तिलमध्वाज्यैर्लेपयेत् छिन्नशोधिताम् ॥ ३४ ॥
शस्त्राच्छेद्यां मुखे च्छित्वाथैषिण्या सम्यगेषिताम् ।
क्षारपीतेन सूत्रेण बहुशो दारयेद् गतिम् ॥ ३५ ॥
व्रणेषु दुष्टसूक्ष्मास्यगम्भीरादिषु साधनम् ।
या वर्त्यो यानि तैलानि तन्नाळीष्वपि शस्यते ॥ ३६ ॥
पिष्टं चुञ्चुफलं लेपो नाळीव्रणहरं परम् ।
ग्रन्थिष्वामेषु कर्तव्या यथास्वं शोफवत्क्रिया ॥ ३७ ॥

संस्वेद्य बहुशो ग्रन्थीन् विमृद्नीयात् पुनः पुनः ।
एष वाते विशेषेण क्रमः पित्तास्रजे पुनः ॥ ३८ ॥

जलौकसो हिमं सर्वं कफजे वातिको विधिः ।
तथाप्यपक्वं छित्वैनं स्थिते रक्तेऽग्निना दहेत् ॥ ३९ ॥

साध्वशेषं सशेषो हि पुनराप्यायते ध्रुवम् ।
मांसव्रणसिरोद्भूतान् ग्रन्थीनेवं हि यापयेत् ॥ ४० ॥

कार्यं मेदोभवेप्येतत् तप्तैः फालादिभिश्च तम् ।
प्रमृज्यात् तिलदिग्धेन छन्नं द्विगुणवाससा ॥ ४१ ॥

व्रणक्रियाक्रमेणात्र कुर्याच्च व्रणरोपणम् ।
अर्बुदे ग्रन्थिवत् कुर्यात् यथास्वं सुतरां हितम् ॥ ४२ ॥

कक्ष्यायां पित्तवीसर्पचिकित्सैव विधीयते ।
गन्धनामाभिधायां च रोहिण्यामप्युपेक्षया ॥ ४३ ॥

विदारिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।
मेदोर्बुदक्रियां कुर्यात् सुतरां शर्करार्बुदे ॥ ४४ ॥

इति हृदयप्रिये तृतीयखण्डे गण्डमालानाळीव्रणादिचिकित्सितं नाम नवमोऽध्यायः ॥

---

## अथ दशमोऽध्यायः ।

### (गुह्यरोगनिदानम्)

दुष्टयोनिमगम्यां स्त्रीं नवसूतां च गच्छतः ।
दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥ १ ॥

क्षताद्वा तीक्ष्णलेपाद्यैर्दुष्टा दोषाः प्रकुर्वते ।
गुह्ये रोगान् तत्र दोषैः पृथक् रक्ताच्चयादपि ॥ २ ॥

अपदंशस्त्वसौ वातात् स्तम्भत्वक्परिपोटवान् ।
मेढ्रे शोफश्चित्ररुजः, पक्वोदुम्बरवद् ज्वरी ॥ ३ ॥

पित्तात्, कफात्तु कठिनः कण्डूगौरवशैत्यवान् ।
शोणितेनासितस्फोटरक्तस्रावज्वरान्वितः ॥ ४ ॥

सर्वजे सर्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि ।
तीव्रा रुगाशुपचनं दरणं कृमिसम्भवः ॥ ५ ॥

याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ।
अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः ॥ ६ ॥

दोषैस्सास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ।
तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वभगार्तवम् ॥ ७ ॥

गुह्यस्य बहिरन्तर्वा पिटकाः कफरक्तजाः ।
सर्षपामानसंस्थाना घनास्सर्षपिकाः स्मृताः ॥ ८ ॥

पिटका बहवो दीर्घा दीर्यन्ते मध्यतश्च याः ।
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षवान् ॥ ९ ॥

कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाशुजा ।
अलजीं मेहवद्विद्यात् पिटका पिटकाचिता ॥ १० ॥

कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा ।
विषमा कठिना भुग्ना पिटकाष्ठीलिका चलात् ॥ ११ ॥

विमर्दनप्रदुष्टेन वायुना चर्म मेढ्रजम् ।
निवर्तते सरुग्दाहं क्वचित् पाकं च गच्छति ॥ १२ ॥

निवृत्ताख्यमधोऽग्रे स्यात् श्वयथुश्च कफान्वये ।
वातेन दूषितं चर्म मणिद्वारं रुणद्धि चेत् ॥ १३ ॥

अविकासं मन्दधारमूत्रं रुद्धमणिर्हि सः ।
अणूकृते गुदद्वारेऽप्येवं रुद्धगुदो मतः ॥ १४ ॥

छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम् ।
वातशोणितकोपेन तं विद्याच्छतपोनकम् ॥ १५ ॥

पित्तासृग्भ्यां त्वचः पाकः त्वक्पाको ज्वरदाहवान् ।
मांस्पाकः सर्वजस्सर्ववेदनो मांसशातनः ॥ १६ ॥

सरागैरसितैः स्फोटैः पिटकाभिश्च पीडितम् ।
मेहनं वेदना चोग्रा तं विद्यादसृगर्बुदम् ॥ १७ ॥

मांसदोषाच्चार्बुदं स्याद्विद्रधिश्च त्रिदोषजः ।
कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः ॥ १८ ॥

पक्कानि सन्निपातेन तं विद्यात्तिलकालकम् ।
मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकम् ॥ १९ ॥
चतुरो वर्जयेत्तेषां शेषान् शीघ्रमुपाचरेत् ।
जायन्ते व्यापदो योनौ दुष्टान्नाद् दुष्टभोजनात् ॥ २० ॥
अतिव्यवायतो बीजदोषाद् दैवाच्च मारुतः ।
क्रुद्धो योनौ रुजां स्तम्भं स्वापं कर्कशतां स्वनम् ॥ २१ ॥
पिपीलिकाव्याप्तिबुद्धिं पार्श्ववंक्षणवेदनाम् ।
कृष्णाल्परक्तस्रवणं कुर्याद् गुल्मं क्रमेण च ॥ २२ ॥
वातिकी नाम सा शोफयुक्तातिचरणा स्मृता ।
वेगोदावर्तनाद्योनिं पीडयन् मारुतो रजः ॥ २३ ॥
कृच्छ्रात् सफेनिलं मुञ्चेद्योन्युदावर्तमादिशेत् ।
वातळाहारसेविन्यां जनन्यां कुपितोऽनिलः ॥ २४ ॥
स्त्रियो योनिमणुद्वारां कुर्यात् सूचिमुखीनि सा ।
वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसङ्ग्रहम् ॥ २५ ॥
करोति योनिशोषं च शुष्काख्या तातिवेदना ।
सप्ताहाद्वावमेत् शुक्लं धृतं सा वामिनी चलात् ॥ २६ ॥
मारुतो विवृतां स्रस्तां वातिकीमिव दुःखिताम् ।
योनिं करोति तामाहुर्महायोनिं महारुजाम् ॥ २७ ॥
पित्तेन पैत्तिकीयोनिः पूतिगन्धज्वरान्विता ।
उष्णपीतासितस्रावा कफेन श्लैष्मिकी पुनः ॥ २८ ॥
पाण्डुपिच्छिलपीतास्रस्रावा चाथ परिप्लुता ।
वातपित्तात् सदाहार्तिर्नीलपीतास्रवाहिनी ॥ २९ ॥
शूना स्पर्शासहा कुक्षिवस्तिरुक्सरणप्रद-
रक्तजैर्जन्तुभिः कण्ड्वा विप्लुतातिरार्ति[illegible] ॥
अनिच्छासुरताद्वायुः श्लेष्मरक्तविमूर्च्छित[illegible]
कर्णिकां जनयेद्योनौ कर्णिनी मार्गरोधिनी ।
व्रणांश्च त्रिविधानुक्तैर्विभजेद् व्रणलक्षणैः ।

(गुह्यरोगचिकित्सा)

मेढ्रमध्ये सिरां विध्येदुपदंशे नवोत्थिते ॥ ३

शीतां कुर्यात् क्रियां शुद्धिं विरेकेण विशेषतः।
तिलकल्कघृतक्षौद्रैर्लेपः पक्वे तु पाटिते ॥ ३३ ॥
न्यग्रोधादिं वरायुक्तं क्वाथयित्वाम्बुनामुना।
क्षालयेत् तेन पक्वेन तैलेन च विरोपयेत् ॥ ३४ ॥
तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः।
अरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ॥ ३५ ॥
लेपः क्षौद्रयुतैस्सूक्ष्मैरुपदंशव्रणापहः।
कपाले त्रिफला दग्धा सघृता रोपणं परम् ॥ ३६ ॥
सामान्यं साधनमिदं प्रतिदोषं तु शोफवत्।
नच याति यथा पाकं प्रयतेत तथा भृशम् ॥ ३७ ॥
पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः।
अर्शसां छिन्नदग्धानां क्रिया कार्योपदंशवत् ॥ ३८ ॥
सर्षपां लिखितां सूक्ष्मैः कषायैरवचूर्णयेत्।
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम् ॥ ३९ ॥
क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः।
कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ॥ ४० ॥
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलं च रोपणम्।
अलज्यां स्रुतरक्तायामयमेव क्रियाक्रमः ॥ ४१ ॥
उपाचरेत् पुष्करिकां पित्तवीसर्पकल्पितैः।
अष्ठीलिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥ ४२ ॥
निवर्तं सर्पिषाभ्यज्य स्वेदयित्वोपनाहयेत्।
त्रिरात्रं पञ्चरात्रं वा सुस्निग्धैस्साल्वलादिभिः ॥ ४३ ॥
स्वेदयित्वा ततो भूयः स्निग्धं चर्म मणिं नयेत्।
उपनाहं पुनश्चापि कुर्यात् सुस्निग्धभोजिनः ॥ ४४ ॥
नालीमुभयतोद्वारां निरुद्धे जतुना सृताम्।
स्नेहाक्तां स्रोतसि न्यस्य सिञ्चेत् स्नेहैश्चलापहैः ॥ ४५ ॥
त्र्यहात् त्र्यहात् स्थूलतरां न्यस्य द्वारं विवर्धयेत्।
असिद्धौ सीवनीं मुञ्चन् विद्वान् शस्त्रेण पाटयेत् ॥ ४६ ॥

*ततः क्षतविधिश्चैवं रुद्धपायौ चिकित्सितम् ।
लिम्पेत् कषायैस्सक्षौद्रैर्लिखित्वा शतपोनकम् ॥ ४७ ॥

रक्तविद्रधिवत् कार्या चिकित्सा शोणितार्बुदे ।
व्रणोपचारं सर्वेषु यथावस्थं च योजयेत् ॥ ४८ ॥

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।
स्नेहनस्वेदवस्त्यादि वातजासु विशेषतः ॥ ४९ ॥

पाययेत बलातैलं मिश्रकं सुकुमारकम् ।
जित्वानिलं यथास्थानं नयेद्धस्तेन दुस्थिताम् ॥ ५० ॥

योनिं पुनर्विशुद्धायाश्शमनाद्यं विधीयते ।
वर्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ॥ ५१ ॥

काश्मर्यादिकृतं सर्पिः पाययेद् योनिरोगिणीम् ।
हितं वचादिकैः पिष्टं शुक्तेनाद्यादसद्यपा ॥ ५२ ॥

रास्नाश्वदंष्ट्रावृषकैः शृतं शूलहरं पयः ।
गुळूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥ ५३ ॥

नतवार्ताकिनीकुष्ठसैन्धवामरदारुभिः ।
तैलात् प्रसाधिताद् धार्यः पिचुर्योनौ रुजापहः ॥ ५४ ॥

पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ॥ ५५ ॥

अद्याच्छतावरीलेहं जीवनीयैश्शृतं पयः ।
सर्पिर्वा पाययेदेवं बलासर्पिः परं हितम् ॥ ५६ ॥

रक्तस्रावे यथादोषं रक्तस्थापनमौषधम् ।
खादेत् पुष्यानुगं चूर्णं योनिं तु कफदूषिताम् ॥ ५७ ॥

उपाचरेच्च रूक्षोष्णैर्धातक्यादिघृतेन च ।
तैलेनोपाचरेद् भोज्यं कफहारि च भेषजम् ॥ ५८ ॥

पिप्पल्ययोरजःपथ्याप्रयोगश्च समाक्षिकः ।
कासीसत्रिफलाकाक्षीसाम्रजम्ब्वास्थिधातकी ॥ ५९ ॥

---

* 'सद्यः क्षतविधिरि'त्यष्टाङ्गहृदये ।

पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ।
सन्निपातसमुत्थायां योन्यां साधारणी क्रिया ॥ ६० ॥
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ।
फलसर्पिः पाययेच्च प्रशस्तं शुद्धविग्रहाम् ॥ ६१ ॥

इति हृदयप्रिये तृतीयखण्डे गुह्यरोगचिकित्सितं नाम
दशमोऽध्यायः ॥

---

## अथैकादशोऽध्यायः ।

### (भगन्दरश्लीपदादिनिदानम्)

हस्त्यश्वपृष्ठगमनकठिनोत्कुटिकासनैः ।
साधूनां गर्हणाद् दैवपाकाद्वा द्व्यङ्गुले गुदात् ॥ १ ॥
एकाङ्गुले वा पिटकापूर्वो बाह्योऽन्तरोऽपि वा ।
व्रणो दुष्टास्रमांसोत्थः क्लिन्नात्मा स भगन्दरः ॥ २ ॥
भगं वस्तिगुदोपेतं दारयेद् यदुपेक्षितम् ।
वातं मूत्रं शकृच्छुक्रं खैस्सूक्ष्मैर्वहति क्रमात् ॥ ३ ॥
दोषैः पृथग्युतैस्सर्वैरागन्तुस्सोऽष्टमः स्मृतः ।
तत्र श्यावारुणा वातात् तोदस्फुरणरुक्करी ॥ ४ ॥
पिटका पित्ततो रागदाहज्वरयुतोन्नता ।
स्थिरा स्निग्धा महामूला पाण्डुः कण्डूमती कफात् ॥ ५ ॥
संसृष्टलिङ्गा संसर्गे निचये विविधव्यथा ।
शूलारोचकतृड्दाहज्वरच्छर्दिभिरन्विता ॥ ६ ॥
वातात् सा व्रणतां प्राप्ता छिद्रैरणुमुखैः क्रमात् ।
शतपोनकवत्स्रावं कुर्यादच्छं च फेनिलम् ॥ ७ ॥
व्रणान् प्रकुर्वतेऽन्याश्च पिटकाः स्वस्वलक्षणान् ।
वातपित्तात्तु गतयो जायन्ते परितो गुदम् ॥ ८ ॥
ऋजुर्वातकफादज्व्या गुदो गत्यावदीर्यते ।
कफपित्ताच्छीघ्रपाकः क्लेदयन् मूलमर्शसः ॥ ९ ॥

स्रवत्यजस्रं गतिभिरयमर्शोभगन्दरः ।
सर्वजः शम्बुकावर्तः शम्बुकावर्तसन्निभः ॥ १० ॥

गतयो दारयन्त्यस्मिन् रुग्भेदैर्दारुणैर्गुदम् ।
अस्थिलेशोऽभ्यवहृतो गुदे तिर्यक्स्थितो गतीः ॥ ११ ॥

कुर्यात् तत्पूयजातास्तु खादन्तः कृमयो गुदम् ।
विदारयन्ति नचिरात् क्षतजोऽसौ भगन्दरः ॥ १२ ॥

षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ।
प्रश्रिता वंक्षणोर्वादिमधःकायं कफोल्बणाः ॥ १३ ॥

दोषा मांसास्रगाः पादौ कालेनाश्रित्य कुर्वते ।
शनैश्शनैर्घनं शोफं श्लीपदं तत् प्रचक्षते ॥ १४ ॥

परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ।
रूक्षं च वातात् पित्तात्तु पीतं दाहज्वरान्वितम् ॥ १५ ॥

कफाद् गुरु स्निग्धमरुक् चितं मांसाङ्कुरैर्महत् ।
तत् त्यजेद् वत्सरातीतं सुमहत् सपरिस्रुति ॥ १६ ॥

केषांचिद् भुजयोश्चैतं भवेदानूपवासिनाम् ।
शर्करोन्मथिते पादे क्षते वा कण्टकादिना ॥ १७ ॥

ग्रन्थिः कीलवदुत्सन्नो जायते कदरं तु तत् ।
कुर्यात् पित्तानिलात् पाकं नखमांसे सरुग् ज्वरम् ॥ १८ ॥

वातपित्तादुपनखं मांसपाकः सरुग् ज्वरः ।
कृष्णोऽभिघाताद् रूक्षश्च खरश्च कुनखो नखः ॥ १९ ॥

(भगन्दरश्लीपदादिचिकित्सा)

अथाशु पिटकाभूतं भगन्दरमुपाचरेत् ।
शुद्ध्यसृक्स्रुतिसेकाद्यैर्यथा पाकं न गच्छति ॥ २० ॥

पाके पुनरुपस्निग्धं स्वेदितं चावगाहतः ।
यन्त्रयित्वार्शसमिव पश्येत् सम्यग् भगन्दरम् ॥ २१ ॥

अर्वाचीनपराचीनमन्तर्मुखबहिर्मुखम् ।
अथान्तर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत् ॥ २२ ॥

बहिर्मुखं च निश्शेषं ततः क्षारेण साधयेत् ।
नाळीरेकान्तराः कृत्वा पाटयेच्छतपोनके ॥ २३ ॥
तासु रूढासु शेषाश्च मृत्युर्दीर्णे गुदेऽन्यथा ।
अर्शोभगन्दरे पूर्वमर्शांसि प्रतिसाधयेत् ॥ २४ ॥
त्यक्त्वोपचार्यः क्षतजः शल्यं शल्यवतस्ततः ।
आहरेत तथा दद्यात् कृमिघ्नं लेपभोजनम् ॥ २५ ॥
पिण्डनाल्यादयः स्वेदाः सुस्निग्धा रुजि पूजिताः ।
सर्वत्र च बहिश्छिद्रे छेदानालोच्य योजयेत् ॥ २६ ॥
नळीनामेकपार्श्वे तु क्वचित् पार्श्वद्वयेऽपि च ।
क्वचिच्च सर्वतश्छेदांस्तत्र तत्र समाचरेत् ॥ २७ ॥
अपित्तजान् समस्तांश्च पुनस्तानग्निना दहेत् ।
आस्रावमार्गान् निश्शेषान् क्षारसूत्रेण वाखिलान् ॥ २८ ॥
यतेत कोष्ठशुद्ध्यै तु भिषक् तस्यान्तरान्तरा ।
लेपो व्रणे विलालास्थित्रिफलारसकल्कितम् ॥ २९ ॥
ज्योतिष्मत्यादिकं तैलं हितं च मधुकादिकम् ।

मधुतैलयुता विळङ्गसारत्रिफलामागधिकोषणाश्च* लीढाः ।
कृमिकुष्ठभगन्दरप्रमेहक्षतनाळीव्रणरोपणा भवन्ति ॥ ३० ॥
गुल्गुलुपञ्चपलं पलिकांशा मागधिका त्रिफला च पृथक् स्यात् ।
त्वक्त्रुटिकर्षयुतं मधुलीढं कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ३१ ॥

शृङ्गिवेररजोयुक्तं तदेव च सुभावितम् ।
क्वाथेन दशमूलस्य विशेषाद् वातरोगजित् ॥ ३२ ॥

अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुल्गुलुः ।
क्रमवृद्धमिदं मधुद्रुतं पिटकास्थौल्यभगन्दराञ्जयेत् ॥ ३३ ॥
अश्वपृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यम् ।
साहसानि विविधानि च रूढे वत्सरं परिहरेदधिकं वा ॥ ३४ ॥

श्लीपदेऽनिलजे विध्येत् स्निग्धस्विन्नोपनाहिते ।
सिरामुपरि गुल्फस्य द्व्यङ्गुले पाययेच्च तम् ॥ ३५ ॥

---

* कृणाश्चेत्यष्टाङ्गहृदये ।

मासमेरण्डजं तैलं गोमूत्रेण समन्वितम् ।
त्रिवृतं वा पिबेदेवमशान्ते वह्निना दहेत् ॥ ३६ ॥

गुल्फस्याधस्सिरामोक्षः पैत्ते सर्वं च पित्तजित् ।
सिरामङ्गुष्ठके विध्वा कफजे शीलयेद् यवान् ॥ ३७ ॥

सक्षौद्राणि कषायाणि वर्धमानास्तथाभयाः ।
लिम्पेत् सर्षपवार्ताकीमूलाभ्यां धन्वयाथवा ॥ ३८ ॥

भूस्तृणक्काथसिद्धं तु तैलं श्लीपदनाशनम् ।
अभ्यङ्गेन प्रलेपाच्च करम्भाद्यं परं हितम् ॥ ३९ ॥

शस्त्रेणोत्कृत्य निश्शेषं स्नेहेन कदरं दहेत् ।
जितोष्माणं तूपनखं शुद्ध्या शस्त्रेण साधयेत् ॥ ४० ॥

दुष्टं कुनखमप्येवं गुळेनालं च लेपयेत् ।
क्षीरेणोपाचरेद्वाथ शुद्धे कुर्याद् व्रणक्रियाम् ॥ ४१ ॥

इति हृदयप्रिये तृतीयखण्डे भगन्दरश्लीपदादिचिकित्सितं नाम एकादशोऽध्यायः ॥

---

## अथ द्वादशोऽध्यायः ।

(विषप्रतिषेधः)

मथ्यमानाज्जलनिधेः काळकूटोऽभवत् किल ।
तत् पीतं लोकरक्षार्थं हरेण करुणात्मना ॥ १ ॥

कण्ठे नियम्यमानेऽस्मिंस्तदंशास्तु तिरोहिताः ।
सर्पलूतादिदंष्ट्रासु वर्तन्ते स्थावरेषु च ॥ २ ॥

अकृत्रिमान् विषान् प्राहुस्तान् योगोत्थान् गरानपि ।
विषं तु प्रबलं हन्ति प्राणिनां जीवितं क्षणात् ॥ ३ ॥

तद् दुर्बलं गराख्यं स्याच्छोफपाण्डूदरादिकृत् ।
दर्वीकरा मण्डलिनो राजिलाश्चोरगास्त्रिधा ॥ ४ ॥

चक्रच्छत्राङ्कुशाकाररेखायुक्तफणान्विताः ।
तत्र दर्वीकराः प्रोक्ता ज्ञेया मण्डलिनः पुनः ॥ ५ ॥

अफणा विविधैर्जुष्टा मण्डलैर्मन्दगामिनः ।
राजिलास्तिर्यगूर्ध्वं च राजिताश्चित्रराजिभिः ॥ ६ ॥
स्निग्धवर्णाः फणैर्हीना वातादीन् कोपयन्ति ते ।
सन्ति सङ्करजाश्चान्ये सन्निपातविषोल्बणाः ॥ ७ ॥
मिश्राकाराः कोपनाश्च तान् विद्यान्मिश्रलक्षणान् ।
जात्यैवाल्पविषाः केचिदन्ये शैत्यादिकारणात् ॥ ८ ॥
दोषत्रयाश्रया शक्तिर्विषाणां यन्निरूप्यते ।
चिकित्सा चात्र संक्षेपात् तस्मात् प्रोक्तास्त्रिधोरगाः ॥ ९ ॥
आहारार्थं भयात् पादस्पर्शादतिविषात् क्रुधा ।
पापवृत्तितया वैराद् देवर्षियमचोदनात् ॥ १० ॥
दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ।
अक्षतं लालया क्लिन्नं दंशं तुण्डाहतं वदेत् ॥ ११ ॥
एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ।
दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥ १२ ॥
मांसच्छेदादविच्छिन्नरक्तवाहीनि दष्टकम् ।
दंष्ट्रापदानि चत्वारि तद् दष्टनिपीडितम् ॥ १३ ॥
निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमद्वयम् ।
विषं नाहेयमप्राप्तं रक्तं दूषयते वपुः ॥ १४ ॥
रक्तमण्वपि तु प्राप्तं वर्धते तैलमम्बुवत् ।
स्पृष्टे दंशभ्रमाद् भीरोर्भवेन्मूर्च्छाज्वरादिकम् ॥ १५ ॥
दंशे विषान्विते कण्डूतोदशोफज्वरादयः ।
पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक् ॥ १६ ॥
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ।
द्वितीये ग्रन्थयो वेगे तृतीये मूर्धगौरवम् ॥ १७ ॥
दृग्रोधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः ।
सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम् ॥ १८ ॥
दाहो हिध्मा च षष्ठे तु हृत्पीडा गात्रगौरवम् ।
मूर्च्छाविपाकोऽतीसारः प्राप्ते शुक्रं तु सप्तमे ॥ १९ ॥

स्कन्धपृष्ठकटीभङ्गस्सर्वचेष्टानिवर्तनम् ।
अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक् ॥ २० ॥
तेन पीताङ्गता दाहो द्वितीये श्वयथूद्भवः ।
तृतीये दंशविक्लेदस्स्वेदस्तृष्णा च जायते ॥ २१ ॥
चतुर्थे ज्वर्यते दाहः पञ्चमे सर्वगात्रगः ।
दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम् ॥ २२ ॥
पाण्डुता तेन गात्राणां द्वितीये गुरुताति च ।
तृतीये दंशविक्लेदो नासिकाक्षिमुखस्रवाः ॥ २३ ॥
चतुर्थे गरिमा मूर्ध्नो मन्यास्तम्भश्च पञ्चमे ।
वाक्यसङ्गो ज्वरश्शीतश्शेषयोः पूर्ववद् वदेत् ॥ २४ ॥
कुर्यात् पञ्चसु वेगेषु चिकित्सां न ततः परम् ।
जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ॥ २५ ॥
शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ।
तूर्णं देशान्तरं याता विमुक्तविषकञ्चुकाः ॥ २६ ॥
कुशौषधीकण्टकवद् ये चरन्ति च काननम् ।
देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषा मताः ॥ २७ ॥
श्मशानचितिचैत्यादौ पञ्चमीपक्षसन्धिषु ।
अष्टमीनवमीसन्ध्यामध्यरात्रिंदिवेषु च ॥ २८ ॥
याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते ।
नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ॥ २९ ॥
दष्टमात्रे सितास्याक्षश्शीर्यमाणशिरोरुहः ।
स्तब्धजिह्वो मुहुर्मूर्च्छञ्च्छीतोच्छ्वासो न जीवति ॥ ३० ॥
युक्तो हिध्मावमिश्वासैः श्यावपादकराननैः ।
दष्टमात्रे विसंज्ञो वा यस्स मृत्युपदोन्मुखः ॥ ३१ ॥
न नस्यैश्चेतना तीक्ष्णैर्न क्षतात् क्षतजागमः ।
दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम् ॥ ३२ ॥
अन्यथा त्वरया कुर्याद् दंशस्योत्कर्तनादिकम् ।
विषं मात्राशतं दंशे स्थित्वा धातून् प्रयाति यत् ॥ ३३ ॥

अतोऽस्मिन्नन्तरे कुर्याद् दंशस्योत्कर्तनादिकम् ।
दष्टमात्रे दशेद्वापि तमेव पवनाशिनम् ॥ ३४ ॥

लोष्टं महीं वा दशनैश्छित्त्वा वानु ससंभ्रमम् ।
निष्ठेवेन समालिम्पेद् दंशं कर्णमलेन वा ॥ ३५ ॥

दंशस्योपरि बध्नीयादरिष्टांश्चतुरङ्गुले ।
जप्त्वा सिद्धेन मन्त्रेण तेन स्तभ्नाति तद्विषम् ॥ ३६ ॥

निष्पीड्याथोद्धरेद्दंशं मर्मसन्ध्यगतं क्षणात् ।
दंशं मण्डलिनां मुक्त्वा पित्तळत्वादथापरम् ॥ ३७ ॥

प्रतप्तैर्हेमलोहाद्यैर्दहेद्वाशून्मुकेन वा ।
तण्डुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ॥ ३८ ॥

मातुलुङ्गी सिता शेलुः पाननस्याञ्जने हितः ।
अगदः फणिनां घोरे विषे राजीमतामपि ॥ ३९ ॥

पञ्चवल्कवलायष्टीनागपुष्पैलवालुकम् ।
जीवकर्षभकौ शीतं सिता पद्मकमुत्पलम् ॥ ४० ॥

सक्षौद्रो हिमवान् नाम हन्ति मण्डलिनां विषम् ।
लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥ ४१ ॥

काश्मर्यवटशृङ्गाणि जीवकर्षभकौ बलाम् ।
मञ्जिष्ठां मधुकश्चेति दष्टो मण्डलिना पिबेत् ॥ ४२ ॥

कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ।
सक्षौद्रव्योषतकरा घ्नन्ति राजीमतां विषम् ॥ ४३ ॥

करवीरार्ककुसुममूललाङ्गलिकाकणाः ।
कल्कयेदारनाळेन पाठामरिचसंयुताः ॥ ४४ ॥

एष व्यन्तरदष्टघ्नामगदस्सार्वकर्मिकः ।
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ॥ ४५ ॥

भावितं सर्पदष्टानां पाननस्याञ्जने हितम् ।
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ॥ ४६ ॥

अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ।
अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम् ॥ ४७ ॥

अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ।
द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत् ॥ ४८ ॥

विषापहैः प्रयुञ्जीत तृतीयेऽञ्जननावने ।
पिबेच्चतुर्थे वामितः पेयां विषहरैः कृताम् ॥ ४९ ॥

षष्ठपञ्चमयोश्शीतैर्दिग्धसिक्तमभीक्ष्णशः ।
पाययेद्वमनं तीक्ष्णं यवागूं च विषापहैः ॥ ५० ॥

अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः ।
कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं ततः ॥ ५१ ॥

मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ।
तृतीये वामितः पेयां वेगे मण्डलिनां पिबेत् ॥ ५२ ॥

अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ।
आद्येऽवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ॥ ५३ ॥

अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ।
षष्ठेऽञ्जनं तीक्ष्णतममवपीडं च योजयेत् ॥ ५४ ॥

अनुक्तेषु च वेगेषु पूर्वं दर्वीकरोदितम् ।
त्वङ् मनोह्वा निशे वक्रं रसश्शार्दूलजो नखः ॥ ५५ ॥

तमालं केसरं शीतं पीतं तण्डुलवारिणा ।
हन्ति सर्वविषाण्येतद्वज्रिवज्रमिवासुरान् ॥ ५६ ॥

विल्वस्य मूलं सुरसस्य पुष्पं फलं करञ्जस्य नतं सुराह्वम् ।
फलत्रयव्योषनिशाद्वयं च बस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥५७॥
भुजङ्गलूतोन्दुरुवृश्चिकाद्यैर्विषूचिकाजीर्णगरज्वरैश्च ।
आर्तान् नरान् भूतविधर्षितांश्च स्वस्थीकरोत्यञ्जनपाननस्यैः ॥

प्रियङ्गु तकरं लाक्षा मञ्जिष्ठा मधुकं मधु ।
हरिद्रा चेत्ययं योगो कौटिल्यदयितोऽगदः ॥ ५९ ॥

विसंज्ञानां विषैर्घोरैः प्रहारैर्नष्टचेतसाम् ।
उद्बद्धानां जलौघे च मृतानां चेतनाप्रदः ॥ ६० ॥

हेमधात्रीरजः क्षौद्रं गायत्र्या परिमन्त्रितम् ।
लिहन्ननुपिबेत् क्षीरं दष्टरिष्टोऽपि जीवति ॥ ६१ ॥

विषापायेऽनिलं क्षुद्धं स्नेहादिभिरुपाचरेत् ।
तैलमद्यकुलत्थाम्लवर्जैः पवननाशनैः ॥ ६२ ॥
पित्तं पित्तज्वरहरैः कषायैः स्नेहवस्तिभिः ।
समाक्षिकेण वर्गेण कफमारग्वधादिना ॥ ६३ ॥
सिता वैगन्धिका द्राक्षा पयस्या मधुकं मधु ।
पानं समन्त्रपूताम्बुप्रोक्षणादि विषापहम् ॥ ६४ ॥
दोषैर्व्यस्तैस्समस्तैश्च कीटदंशाश्चतुर्विधाः ।
वाताद् दंशोऽधिकरुजः पैत्तो दाहविसर्पवान् ॥ ६५ ॥
कफात् कण्डूशोफयुतः पक्वोदुम्बरसन्निभः ।
स्रावाढ्यस्सर्वलिङ्गस्तु विवर्ज्यस्सान्निपातिकः ॥ ६६ ॥
तण्डुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेत् ।
याति कीटविषैः कम्पं न कैलास इवानिलैः ॥ ६७ ॥
क्षीरिवृक्षत्वगालेपश्शुद्धे कीटविषापहः ।
मुक्तालेपः परं शोफतोददाहव्रणप्रणुत् ॥ ६८ ॥
वचाहिङ्गुविळङ्गानि सैन्धवं गजपिप्पली ।
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ॥ ६९ ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।
सिञ्चेद् वृश्चिकदंशे तु सर्पिः कोष्णं ससैन्धवम् ॥ ७० ॥
कवोष्णेनारनालेन सक्षारलवणेन वा ।
उपनाहो घृते भृष्टः कल्कोऽजाज्यास्ससैन्धवः ॥ ७१ ॥
लेपस्सुखोष्णश्च हितः पिण्याको गोमयोऽपि वा ।
सर्वत्र चोग्राळिविषे पाययेद्दधिसर्पिषी ॥ ७२ ॥
विध्येत् सिरां विदध्याच्च वमनाञ्जननावनम् ।
कीटेभ्यो दारुणतरा लूतास्तेषां विषं पुनः ॥ ७३ ॥
कृच्छ्रसाध्यं पृथग्दोषैरसाध्यं निचयोद्भवम् ।
लक्षणं प्रायशो दंशे चिन्तयेत् कीटदंशवत् ॥ ७४ ॥
श्वासहिध्मादाहमोहश्याववक्त्रोष्ठदन्तता ।
ग्रीवापृष्ठग्रहः कम्पश्चासाध्ये लूतिकाविषे ॥ ७५ ॥

लूतादंशश्च सर्वोऽपि दद्रुमण्डलसन्निभः ।
विसर्पवान् शोफयुतः सव्रणो बहुवेदनः ॥ ७६ ॥
श्वासदंष्ट्राशकृन्मूत्रलालाशुक्रनखार्तवैः ।
अष्टाभिरुद्वमत्येषा विषं वक्राद् विशेषतः ॥ ७७ ॥
तद्दूषितं च वस्त्रादि देहस्पृष्टं विकारकृत् ।
दिनार्धं लक्ष्यते नैव लूतादंशः पुनः क्रमात् ॥ ७८ ॥
तोदशोफज्वरग्रन्थिकण्डूमण्डलवान् भवेत् ।
अथाशु लूतादष्टस्य दंशं शस्त्रैस्समुद्धरेत् ॥ ७९ ॥
अपित्तळं दहेद्वापि विषे व्याप्ते हरेदसृक् ।
हरिद्राद्वयमञ्जिष्ठापत्तङ्गनतगैरिकैः ॥ ८० ॥
सक्षौद्रसर्पिरगदः कीटलूताविषापहः ।
अपामार्गमनोह्वालदार्वीध्यामकगैरिकैः ॥ ८१ ॥
नतैलाकुष्ठमरिचयष्ट्याह्वघृतमाक्षिकैः ।
अगदो मन्दरो नाम लूताविषविनाशनः ॥ ८२ ॥
शुक्रस्पर्शान्मूषिकाणां दंशाद्वा दूषितेऽसृजि ।
ग्रन्थयश्श्वयथुः कोठो मण्डलानि भ्रमोऽरुचिः ॥ ८३ ॥
शीतज्वरोऽतिरुक्कम्पो मूर्च्छा च चिरकारिता ।
शूनवस्तिं विवर्णोष्ठमाखुवाभैर्ग्रन्थिभिश्चितम् ॥ ८४ ॥
चुचुन्दुरुसगन्धं च वर्जयेदाखुदूषितम् ।
जुष्टः श्लेष्मोल्बणैर्दोषैः सोन्मादः श्वा स दुःखितः ॥ ८५ ॥
नतपुच्छाननो लालादूषितास्योऽभिधावति ।
तेन दष्टश्शिरोरोगज्वरतृण्मूर्च्छनान्वितः ॥ ८६ ॥
भवेन्नरस्तथान्यैश्च दष्टः खिद्यति दंष्ट्रिभिः ।
दष्टो येन तु तच्चेष्टारुतं कुर्वन् विनश्यति ॥ ८७ ॥
पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ।
आखुना दष्टमात्रस्य दंशं काण्डादिना दहेत् ॥ ८८ ॥
प्रक्षाळ्योष्णोदकेनानु प्रच्छायात्र प्रलेपयेत् ।
शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ॥ ८९ ॥

अगारधूममञ्जिष्ठारजनीलवणोत्तमैः ।
प्रलिप्याम्लैः क्षाळयित्वा पुनस्तोयैश्च लेपयेत् ॥ ९० ॥
पाळिन्दीश्वेतकटभीविल्वमूलगुळूचिभिः ।
अञ्जने गोमयरसो व्योषसूक्ष्मरजोन्वितः ॥ ९१ ॥
कपित्थगोमयरसो मधुमानवलेहने ।
तण्डुलीयकमूलेन सिद्धं पाने हितं घृतम् ॥ ९२ ॥
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ।
तक्रेण शरपुंखाया बीजं संचूर्ण्य वा पिबेत् ॥ ९३ ॥
अङ्कोलमूलकल्को वा बस्तमूत्रेण कल्कितः ।
सिन्दुवारस्य मूलानि विलाळास्थि विषं नतम् ॥ ९४ ॥
जलपिष्टोऽगदो हन्ति नस्याद्यैराखुजं विषम् ।
सशेषं मूषिकविषं वर्षादौ तु प्रकुप्यति ॥ ९५ ॥
रक्तवातहितं सर्वं प्रायेणाखुविषं जयेत् ।
दंशं त्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ॥ ९६ ॥
लेपाद्यमौषधैरुक्तैः पुराणं च घृतं पिबेत् ।
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तैः क्षते यदि ॥ ९७ ॥
शोफपाकज्वराद्यं स्यादुक्तं तत्रापि योजयेत् ।
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ॥ ९८ ॥
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ।
योगो विरुद्धौषधीनामल्पवीर्यविषस्य च ॥ ९९ ॥
गरसंज्ञो भवेत् तेन पाण्डुशोफज्वरादयः ।
अनिश्शेषनिवृत्तस्य विषस्य च गरस्य च ॥ १०० ॥
वातादिलक्षणं ज्ञात्वा यथावस्थं प्रतिक्रियाम् ।
स्नेहस्वेदादिकां कुर्याद् बहिरन्तश्च युक्तितः ॥ १०१ ॥
स्नेहकृत्यं घृतेनैव तैलं यद्वर्धयेद्विषम् ।
शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥ १०२ ॥
लेहः प्रशमयत्युग्रं सर्वं योगकृतं विषम् ।
मूर्वानन्तानतकणापटोलीचव्यचित्रकान् ॥ १०३ ॥

वचामुस्ताविळङ्गानि तक्रकोष्णाम्बुमस्तुभिः ।
पिबेद्रसेन चाम्लेन गरपीडाप्रशान्तये ॥ १०४ ॥

इति हृदयप्रिये तृतीयखण्डे विषचिकित्सितं नाम
द्वादशोऽध्यायः ॥

---

## अथ त्रयोदशोऽध्यायः ।

### (रसायनविधानम्)

आयुर्मेधा च तारुण्यमारोग्यं वृषता प्रभा ।
रसादिधातुपुष्ट्या स्यात् तदुपायो रसायनम् ॥ १ ॥
पूर्वे वयसि मध्ये वा तत् प्रयोज्यं जितात्मनः ।
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ २ ॥
देहे प्रयोगो मलिने वस्त्रे राग इवाफलः ।
दशमूलबलामुस्ताजीवकर्षभकोत्पलम् ॥ ३ ॥
पर्णिन्यौ पिप्पली भृङ्गी मेदा तामलकी तुटी ।
जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी ॥ ४ ॥
पुनर्नवा द्विकाकोळी काकनासामृताद्वयम् ।
विदारी वृषमूलं च तदेकध्यं पलोन्मितम् ॥ ५ ॥
जलद्रोणे पचेत् पञ्चधात्रीफलशतानि च ।
पादशेषं रसं तस्माद् व्यस्थीन्यामलकानि च ॥ ६ ॥
गृहीत्वा भर्जयेत् तैलघृताद् द्वादशभिः पलैः ।
मत्स्यण्डिकातुलार्धेन युक्तं तल्लेहवत् पचेत् ॥ ७ ॥
स्नेहार्धं मधु शीतेऽत्र तुकाक्षीर्याश्चतुष्पलम् ।
पिप्पल्या द्विगुणं दद्यात् चतुर्जातं कणाधिकम् ॥ ८ ॥
अतोऽवलेहयेन्मात्रां कुटीस्थं पथ्यभोजिनम् ।
इत्येष च्यवनप्राशो यं प्राश्य च्यवनो मुनिः ॥ ९ ॥
जराजर्जरितोऽप्यासीन्नारीनयननन्दनः ।
कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम् ॥ १० ॥

मूत्रशुक्रकृतान् दोषान् वैस्वर्यं च व्यपोहति ।
बालवृद्धक्षतक्षीणकृशानां चाङ्गवर्धनः ॥ ११ ॥

मधुकेन तुकाक्षीर्या पिप्पल्या सिन्धुजन्मना ।
पृथग् लोहैस्सुवर्णेन वचया मधुसर्पिषा ॥ १२ ॥

सितया वा समा युक्ता समायुक्ता रसायनम् ।
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ॥ १३ ॥

नलदं कटुरोहणी पयस्या मधुकं चन्दनशारिबोग्रगन्धाः ।
त्रिफला च कटुत्रयं हरिद्रे सपटोलं लवणं च तैस्सुपिष्टैः ॥ १४ ॥

त्रिगुणेन रसेन शङ्खपुष्प्याः सपयस्कं घृतनल्वणं विपक्कम् ।
उपयुज्य भवेज्जडोऽपि वाग्मी श्रुतधारी प्रतिभानवानरोगः ॥

यथास्वं चित्रकः पुष्पैर्ज्ञेयः पीतसितासितैः ।
यथोत्तरं स गुणवान् विधिना च रसायनम् ॥ १६ ॥

छायाशुष्कं ततो मूलं मासं चूर्णीकृतं लिहन् ।
सर्पिषा मधुसर्पिर्भ्यां पिबेद्वा पयसा यतिः ॥ १७ ॥

अम्भसा वा हिताम्नाशी शतं जीवति नीरुजः ।
मेधावी बलवान् कान्तो वपुष्मान् दीप्तपावकः ॥ १८ ॥

तैलेन लीढो मासेन वातान् हन्ति सुदुस्तरान् ।
मूत्रेण कुष्ठश्वित्राणि पीतस्तक्रेण पायुजान् ॥ १९ ॥

भल्लातकानि पुष्टानि धान्यराशौ निधापयेत् ।
ग्रीष्मे सङ्गाह्य हेमन्ते स्वादुस्निग्धहिमैर्वपुः ॥ २० ॥

संस्कृत्य तान्यष्टगुणे सलिलेऽष्टौ विपाचयेत् ।
अष्टांशशिष्टं तत्क्वाथं सक्षीरं शीतलं पिबेत् ॥ २१ ॥

वर्धयेत् प्रत्यहं चानु तत्रैकैकमरुष्करम् ।
सप्तरात्रत्रयं यावत् त्रीणि त्रीणि ततः परम् ॥ २२ ॥

आचत्वारिंशतस्तानि ह्रासयेद् वृद्धिवत् ततः ।
सहस्रमुपयुञ्जीत सप्ताहैरिति सप्तभिः ॥ २३ ॥

यन्त्रितात्मा घृतक्षीरशालिषष्टिकभोजनः ।
तद्वत् त्रिगुणितं कालं प्रयोगान्तेऽपि चाचरेत् ॥ २४ ॥

आशितो लभते पूर्वाद्द्विर्दीप्तिं विशेषतः ।
प्रमेहकृमिकुष्ठार्शोमेदोदोषविवर्जितः ॥ २५ ॥

निखातयन्त्रात्तत्तैलमाहरेद् गोमयाग्निना ।
तैलं भल्लातकजं मध्वष्ट(म)भागिकं द्विगुणसर्पिः ।
पूर्वविधियन्त्रितात्मा प्राप्नोति गुणान् स तानेव ॥ २६ ॥

पुष्टानि पाकेन परिच्युतानि भल्लातकान्याढकसम्मितानि ।
घृष्ट्वेष्टिकाचूर्णकणैर्जलेन प्रक्षाल्य संशोष्य च मारुतेन ॥ २७ ॥

जर्जराणि विपचेज्जलकुम्भे पादशेषघृतगालितशीतम् ।
तद्रसं पुनरपि श्रपयेत क्षीरकुम्भसहितं चरणस्थे ॥ २८ ॥

सर्पिः पक्वं तत्र तुल्यप्रमाणं युञ्ज्यात् स्वेच्छं शर्करायाः रजोभिः ।
एकीभूतं तत्खजक्षोभणेन स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम् ॥ २९ ॥

तममृतरसपाकं यः प्रगे प्राशमश्न-
न्ननुपिबति यथेष्टं वारि दुग्धं रसं वा ।
स्मृतिबलमतिमेधासत्त्वसारैरुपेतः
कनकनिचयगौरः सोऽश्नुते दीर्घमायुः ॥ ३० ॥

द्रोणेऽम्भसो व्रणकृतां त्रिशताद्विपक्वात्
क्वाथाढके पलसमैस्तिलतैलपात्रम् ।
तिक्ताविषायववरागिरिजन्मतार्क्ष्यैः
सिद्धं परं निखिलकुष्ठनिबर्हणाय ॥ ३१ ॥

सहामलकशुक्तिभिर्दधिसरेण तैलेन वा
गुळेन पयसा घृतेन यवसक्तुभिर्वा सह ।
तिलेन सहमाक्षिकेण पललेन सूपेन वा
वपुष्करमरुष्करं परममेध्यमायुष्करम् ॥ ३२ ॥

भल्लातकप्रयोगेऽत्र विशेषेण विवर्जयेत् ।
कुलस्थदधिशुक्तानि तैलाभ्यङ्गाग्निसेवनम् ॥ ३३ ॥

पश्चिमाम्भोधितीरस्थाद् वृक्षात् तुरवकात् फलम् ।
आहृत्य तद्बीजभवं तैलं मृद्भाजने स्थितम् ॥ ३४ ॥

रक्षेत् करीषनिर्मग्नं पक्षमात्रमतःपरम् ॥ ३५ ॥
स्निग्धस्विन्नो हृतमलस्तैलं पाणितलं पिबेत् ।
मञ्जसारादिमन्त्रेण पूतं प्रातः शुभे दिने ॥ ३६ ॥
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत् ततः ।
सायमस्नेहलवणां यवागूं शीतलां पिबेत् ॥ ३७ ॥
पञ्चाहानि पिबेदेवं पक्षं पथ्यानि चाचरेत् ।
अन्नं मुद्गरसेनाश्नन् सर्वकुष्ठैः प्रमुच्यते ॥ ३८ ॥
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम् ।
तथैवारग्वधक्वाथे स्थितं पक्षं पिबेद् व्रती ॥ ३९ ॥
सर्पिर्मधुयुतं पीतं तदेव खदिराम्बुना ।
पक्षं मांसरसाहारः करोति द्विशतायुषम् ॥ ४० ॥
अनेकाहकृतं नस्यं तेनायुर्बुद्धिकान्तिदम् ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ४१ ॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ।
क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम् ॥ ४२ ॥
वर्धयेत् पयसा सार्धं तथैवापनयेत् पुनः ।
जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ ४३ ॥
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ।
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ॥ ४४ ॥
यक्ष्ममेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ।
घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वातशोणितम् ॥ ४५ ॥
असनखदिरसारैर्भाविता सोमराजीं
मधुघृतगुलपथ्यालोहचूर्णैरुपेताम् ।
शरदमवलिहानः पारिणामान् विकारां-
स्त्यजति हितमिताशी श्वित्रकुष्ठामयांश्च ॥ ४६ ॥
ये सोमराज्या वितुषीकृतायाश्चूर्णैरुपेतात् पयसः सुजातात् ।
उद्धृत्य सारं मधुना लिहन्ति तक्रं तदेवानु पिबन्ति चान्ते ॥ ४७॥

कुष्ठिनः कुष्यमाणाङ्गास्ते जाताङ्गुलिनासिकाः ।
भान्ति वृक्षा इव पुनः प्ररूढनवपल्लवाः ॥ ४८ ॥

तिलेन वा सोमराजीं समां खादेद् रसायनम् ।
कुटीप्रविष्टस्य विधिर्विहितः पथ्यसेविनः ॥ ४९ ॥

अथ वातातपसहा योगाः पथ्यानपेक्षिणः ।
गुलेन मधुना शुण्ठ्या कृष्णया लवणेन वा ॥ ५० ॥

द्वे द्वे खादन् सदा पथ्ये जीवेद् वर्षशतं सुखी ।
घृते पथ्यां सम्प्रताप्य समश्नंस्तद् घृतं पिबेत् ॥ ५१ ॥

लभेत् सुखं चिरस्थायि सतीवोपकृतेः सकृत् ।
धात्रीकृमिघ्नासनसारचूर्णं सतैलसर्पिर्मधुलोहरेणु ।
निषेवमाणस्य भवेन्नरस्य तारुण्यलावण्यमपि प्रवृष्टम् ॥ ५२ ॥

विळङ्गभल्लातकनागराणि येऽश्नन्ति सर्पिर्मधुसंयुतानि ।
जरानदीं रोगतरङ्गिणीं ते लावण्ययुक्ताः पुरुषास्तरान्ति ॥ ५३ ॥

खदिरासनयूषभावितायास्त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो यदि जीवन्त्यजराः किमत्र चित्रम् ॥

पुनर्नवस्यार्धपलं नवस्य पिष्टं पिबेद् यः पयसार्धमासम् ।
मासद्वयं तत्त्रिगुणं समां वा जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥

मूर्वाबृहत्यंशुमतीबलानामुशीरपाठासनशारिबाणाम् ।
कालानुसार्यागरुचन्दनानां वदन्ति पौनर्नवमेव कल्पम् ॥ ५६ ॥

शतावरीघृतं पीतं ससितं देहपुष्टिकृत् ॥ ५७ ॥

पलार्धमश्वगन्धाया मासार्धं पयसा पिबेत् ।
सुखाम्बुना वा तैलेन घृतैर्वा देहपुष्टये ॥ ५८ ॥

ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजस्समुत्थम् ।
क्षीराशिनस्ते बलवीर्ययुक्ताः समाः शतं जीवितमाप्नुवन्ति ॥ ५९ ॥

मासं वचामप्युपसेवमानाः क्षीरेण तैलेन घृतेन वापि ।
भवन्ति रक्षोभिरधृष्यरूपा मेधाविनो निर्मलमृद्धवाक्याः ॥ ६० ॥

शुद्धदेहमनसां रसायनं सिद्धिदं भवति शीलितं परम् ।
वृद्धभावरहितोऽथ शोभते वृद्धिपौरुषवयोबलान्वितः ॥ ६१ ॥

इति हृदयप्रिये तृतीयखण्डे रसायनविधानं नाम
त्रयोदशोऽध्यायः ॥

---

## अथ चतुर्दशोऽध्यायः ।

### (वाजीकरणविधिः)

यस्य बीजबलं नास्ति स वाजीकरणं भजेत् ।
पुष्टिस्तुष्टिरपथ्यं च गुणवत् तत्र संश्रितम् ॥ १ ॥
तेन सद्यः प्राप्य हर्षं धावेद् वाजीव भामिनीः ।
अरोगिणो विशुद्धस्य निरूहं सानुवासनम् ॥ २ ॥
घृततैलरसक्षीरशर्कराक्षौद्रसंयुतम् ।
योगविद् योजयेत् पूर्वं क्षीरमांसरसाशिनः ॥ ३ ॥
शुद्धे काले यथाशक्ति वृष्ययोगान् प्रयोजयेत् ।
शरेक्षुकुशकाशानां विदार्या वरणस्य च ॥ ४ ॥
मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम् ।
मेदे द्वे द्वे च काकोल्यौ सूर्प्यपर्ण्यौ शतावरीम् ॥ ५ ॥
अश्वगन्धामतिबलामात्मगुप्तां पुनर्नवाम् ।
वीरां पयस्यां जीवन्तीमृद्धिं रास्नां त्रिकण्टकम् ॥ ६ ॥
मधुकं सालपर्णीं च भागांस्त्रिपलिकान् पृथक् ।
माषाणामाढकं चैतद् द्विद्रोणे पाचयेदपाम् ॥ ७ ॥
रसेनाढकशेषेण पचेत् तेन घृताढकम् ।
दत्त्वा विदारीधात्रीक्षुरसानामाढकाढकम् ॥ ८ ॥
घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ।
वीरां स्वगुप्तां काकोल्यौ यष्टिं *फल्गुं त्रिपिप्पलीम् ॥ ९ ॥
द्राक्षां विदारीं खर्जूरं म†धूकानि शतावरीम् ।
तत्सिद्धपूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥ १० ॥

---

* 'फल्गूनि पिप्पलीन्', † 'मधुकानि' इति मुद्रिताष्टाङ्गहृदये ।

शर्करायास्तुकाक्षीर्भिः पिप्पल्याः कुडवेन च ।
मरिचस्य प्रकुञ्चेन तुगाक्षीरपलोन्मितैः ॥ ११ ॥

त्वगेलाकेसरैः स्वङ्गैः क्षौद्राद्धिकुडवेन च ।
पलमात्रं ततः खादेत् गव्याढ्यं स्वादुदुग्धभुक् ॥ १२ ॥

तेनारोहति वाजीव कुलिङ्ग इव हृष्यति ।
सात्मगुप्ताफलान् क्षीरे गोधूमान् साधितान् हिमान् ॥

माषान् वा सघृतक्षौद्रान् खादन् गृष्टिपयोनुपः ।
जागर्ति रात्रिमखिलामखिन्नः खेदयन् स्त्रियः ॥ १४ ॥

चूर्णं विदार्या बहुशः स्वरसेनैव भावितम् ।
क्षौद्रसर्पिर्युतं लीढ्वा प्रमदाशतं गच्छति ॥ १५ ॥

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥ १६ ॥

यः पयस्यां पयःसिद्धां खादेन्मधुघृतान्विताम् ।
पिबेद् बाष्कयणं चानु क्षीरं न क्षयमेति सः ॥ १७ ॥

श्वदंष्ट्रेक्षुरमाषात्मगुप्ताबीजशतावरीः ।
पिबन् क्षीरेण जीर्णोऽपि गच्छति प्रमदाशतम् ॥ १८ ॥

यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् ।
मनसो हर्षणं यच्च तत् सर्वं वृष्यमुच्यते ॥ १९ ॥

नामापि यासां हृदयोत्सवाय सर्वेन्द्रियाकर्षणपाशभूताः ।
प्रियाः कटाक्षामृतवारिवाहाः स्त्रियो वृषत्वाय परं नरस्य ॥ २० ॥

अल्पधैर्यस्य सन्तानं तृतीयार्थं च कांक्षतः ।
मनश्शरीररक्षार्थं वाजीकरणमीरितम् ॥ २१ ॥

अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ।
धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् ॥ २२ ॥

एवं स्थानैस्त्रिभिः प्रोक्तं सर्वरोगचिकित्सितम् ।
अष्टाङ्गहृदयप्रोक्तरीत्या तत्पथ्यसंयुतम् ॥ २३ ॥

स्वल्पेऽपि दर्पणे भाति सर्वाङ्गप्रतिबिम्बितम् ।
तेनापोह्याङ्गमालिन्यं परिष्कारं च कुर्वते ॥ २४ ॥

चिकित्सानिरतानां तद् ग्रन्थोऽसौ हृदयप्रियः ।
स्याद् दृष्टकर्मणां तीर्थाल्लब्धार्थो ह्युपकारकः ॥ २५ ॥
रोगावस्थाद्रव्यपाकशस्त्रकर्माद्यपश्यतः ।
सुविस्तृतोऽपि को ग्रन्थः पुंसः कर्मफलप्रदः ॥ २६ ॥
किन्तु ग्रन्थैकसक्तस्य क्लिश्येरन् कर्मभिर्जनाः ।
जिजीविषुस्त्यजेद् दूरे तं दुष्टं वैद्यमानिनम् ॥ २७ ॥
तीर्थात्तशास्त्रताभ्यस्तकर्मता कर्मदक्षता ।
शुचित्वमूहनैपुण्यं सद्भृत्यत्वं दयालुता ॥ २८ ॥
सिद्धौषधसमृद्धत्वमलोभो जनवश्यता ।
रोगिषु स्थिरता दैवप्रामाण्यं च सहिष्णुता ॥ २९ ॥
धैर्यमौचित्यमुत्साहः कला वैद्यस्य षोडश ।
कलाभिराभिः सम्पूर्णो नित्यमोषधिनायकः ॥ ३० ॥
ईश्वरैः शिरसा मान्यः कीर्तिज्योत्स्नाविराजितः ।
सदासेचनको नृणां सुखायोद्यन् विराजते ॥ ३१ ॥
तस्मादेवं गुणावाप्त्यै शास्त्रं कर्माणि सद्गुरोः ।
सुशीलतां च सम्प्राप्य पुमान् वैद्यत्वमाप्नुयात् ॥ ३२ ॥
चिकित्सितसमं किञ्चिन्नहि स्वान्योपकारकम् ।
नरेषु जन्तुष्वपि वा केन नैतदपेक्ष्यते ॥ ३३ ॥
पीतामृतानां द्युसदां चिकित्सार्थं किलाश्विनौ ।
कल्पितौ किं वदेन्नृणामुपकारं चिकित्सया ॥ ३४ ॥
क्वचिद् दैवविरुद्धस्य सिद्धा यदि न सिध्यति ।
क्रिया कृतापि विधिवन्नैष दोषश्चिकित्सितुः ॥ ३५ ॥
अमृतं किल भूलोके चिकित्सितमुदीरितम् ।
चिरमायुर्जरारोगरहितं दिशतीति यत् ॥ ३६ ॥
असाध्या चाप्यसिद्धा च क्रिया शास्त्रेऽत्र नेरिता ।
तस्मादष्टाङ्गहृदये प्रियैरर्थैरिदं श्रितम् ॥ ३७ ॥
शुभाय जगतां भूयादिदं मुनिमतानुगम् ।
वैद्यशास्त्रपयोराशिलब्धयोगामृतैर्धितम् ॥ ३८ ॥

शिवं भिषक्तमशिवः शिवं धन्वन्तरिर्हरिः ।
ब्रह्मा देवाश्च वः सन्तः प्रदिशन्तु सदा शिवम् ॥ ३९ ॥

व्याघ्रालयेशपदकल्पकपुष्पकान्ति-
ज्योत्स्नाविकासितमनोमयकैरवेण ।
शैवद्विजेन रचिते हृदयप्रियेऽस्मिन्
वृत्तं चिकित्सितमिदं परमेश्वरेण ॥ ४० ॥

इति हृदयप्रिये उत्तरखण्डे वाजीकरणं नाम
चतुर्दशोऽध्यायः ॥

तृतीयखण्डः समाप्तः ।

---

# हृदयप्रियः ।

## अथ चतुर्थखण्डः ।

### (योगखण्डः ।)

प्रथमोऽध्यायः ।

अथ तत्तच्चिकित्सोक्तान् योगानाचार्यसम्मतान् ।
यथाक्रमं लिखाम्यत्र योगखण्डोऽयमुच्यते ॥ १ ॥

(षडङ्गकषायः)

घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ।
तोयमुद्रिक्तपित्तघ्नं पाचनं तृड्ज्वरापहम् ॥ २ ॥

(मुस्तापर्पटादिक्वाथः)

मुस्तापर्पटभूनिम्बधन्वयाषमहौषधैः ।
पक्वं जलं ज्वरे देयं पाचनाय शमाय च ॥ ३ ॥

(पाचनामृतकषायः)

अमृतोशीरपाठाब्दविश्वभूनिम्बवालकैः ।
सपर्पटकधान्याकधन्वयाषैर्विपाचितम् ॥ ४ ॥
पाक्यं ज्वरेषु पातव्यं पाचनामृतसंज्ञितम् ।

(तोयतोयदादिक्वाथः)

तोयतोयदभूनिम्बपाठाधान्यमहौषधैः ॥ ५ ॥
कृतः कषायः सर्वेषां ज्वराणां पाचनः परम् ।

(वातज्वरे दुरालभादिक्वाथः)

दुरालभामृतामुस्तबलाबिल्वमहौषधैः ॥ ६ ॥
सपर्पटकधान्याकैः क्वाथो वातज्वरं जयेत् ।

(अमृतादिकषायः)

अमृताबिल्वमूलाब्दबलाधान्यकनागरैः ॥ ७ ॥
कषायो मातरिश्वोत्थज्वरं हन्याद् विशेषतः ।

(वातज्वरे पाठाग्निमन्थादयस्त्रयः कषायाः)

पाठाग्निमन्थबृहतीद्वयनागराणां
छिन्नोद्भवामगधमूलकलिङ्गकानाम् ।
वाशामृताम्बुदपटोलमहौषधानां
क्वाथं पिबेदिह मरुत्प्रभवे ज्वरे तु ॥ ८ ॥

(पित्तज्वरे मुस्तोत्पलादिक्वाथः)

मुस्तोत्पलामृताद्राक्षाशारिबाकणचन्दनैः ॥ ९ ॥
सपर्पटैः शृतं तोयं पीतं पित्तज्वरं जयेत् ।

(पित्तज्वरे मृद्वीकादयस्त्रयः कषायाः)

मृद्वीकनागमधुकोत्पलशारिबाभि-
र्मुद्गेक्षुकाण्डहिमशारिबवार्युशीरैः ।
यष्टीमधुप्रवरगोस्तनशारिबाभि-
स्तोयं शृतं जयति पित्तभवज्वरं हि ॥ १० ॥

(कफज्वरे व्याघ्र्यादिक्वाथः)

व्याघ्रीदुरालभाभार्ङ्गीशुण्ठीछिन्नरुहाम्बुदैः ॥ ११ ॥
क्वाथः कफज्वरं हन्ति पिप्पलीचूर्णसंयुतः ।

(श्लेष्मज्वरादौ पथ्याकट्फलादिकषायः)

पथ्याकट्फलनागराम्बुदवचाभूनिम्बधान्यद्रुमै-
र्भार्ङ्गीपर्पटकान्वितैः शृतमिदं तोयं सुशीतं पुनः ।
मध्वाढ्यं परमाणुरामठयुतं श्लेष्मज्वरं नाशयेत्
कोष्ठार्तिश्वसनाग्निसादकसनारुग्गास्यशोषान्वितम् ॥ १२ ॥

(कफज्वरे तिक्तादयस्त्रयः कषायाः)

तिक्तानिशेन्द्रयवनागकटुत्रयाणां
भूनिम्बनिम्बबृहतीद्वयनागराणाम् ।
आरग्वधाम्बुदपटोलमहौषधानां
क्वाथं पिबेदिह कफप्रभवे ज्वरे तु ॥ १३ ॥

(वातपित्तज्वरे श्वदंष्ट्रादिक्वाथः)

श्वदंष्ट्राम्बुदभूनिम्बबलानागरपर्पटैः ॥ १४ ॥
पाक्यं प्रशमयेत् पीतं वातापित्तकृतं ज्वरम् ।

(वातकफज्वरे पर्पटकादिक्वाथः)

पर्पटकाब्दसुरद्रुमभार्ङ्गीमागधिकौषधवन्यवाद्यैः।
पाक्यमिदं विनिहन्ति नराणां वातकफज्वरजं परितापम्॥ १५॥

(कफपित्तज्वरे कटुकादिः)

कटुकाविजयाद्राक्षामुस्तापर्पटकौषधैः।
कषायो नाशयेत् पीतः कफपित्तभवं ज्वरम्॥ १६॥

(कफपित्तज्वरे कृष्णादिक्वाथः)

कृष्णाव्याघ्र्यम्बुदोशीरपाठापर्पटकामृतैः।
सनिम्बैः शमयेत् क्वाथः कफपित्तान्वितं ज्वरम्॥ १७॥

(दारुनागरादिकषायः)

दारुनागरभूनिम्बधान्यवाशाकलिङ्गकैः।
शताह्वादशमूलाब्दैर्मृत्युकल्पं ज्वरं जयेत्॥ १८॥

(सन्निपातज्वरे बृहत्यादिकषायः)

बृहत्यौ पौष्करं भार्ङ्गी शृङ्गिबेरं दुरालभा।
वत्सकस्य च बीजानि पटोलं कटुरोहणी॥ १९॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः।

(सन्निपातज्वरे व्याघ्र्यादिकषायः)

सन्निपातज्वरे व्याघ्रीदेवदारुनिशाघनम्॥ २०॥
पटोलपत्रनिम्बत्वक्त्रिफलाकटुकायुतम्॥ २१॥

(अमृतोत्तरक्वाथः)

नागरामृतहरीतकीः क्रमान्नागहस्तनयनाङ्घ्रिभागशः।
साधु सिद्धमुदकं सशर्करं नाशयेदखिलदोषजं ज्वरम्॥ २२॥

(छिन्नोद्भवादिक्वाथः)

छिन्नोद्भवावृषकिरातकपर्पटानां
शुण्ठ्या यवाषकबलाहकयोः क्रमेण।
एकद्वयत्रितयभागकृतः कषायः
सम्मूर्च्छितं ज्वरमपोहति सन्निपातम्॥ २३॥

(सान्धिकसन्निपाते दुरालभापर्पटकादिक्वाथः)

दुरालभापर्पटकाम्बुवाहविश्वामृताधान्यनिदिग्धिकानाम्।
क्वाथो निहन्याज्ज्वरमाशु सान्धिकं प्रलापमूर्च्छापरिदाहयुक्तम्॥

(तान्द्रिके व्योषादिक्वाथः)

व्योषवराम्बुदवत्सकपाठामूलकनिम्बकपुष्करमूलैः ।
तोयमिदं जनयेज्जठराग्निं तान्द्रिकजूर्तिमपोहति सद्यः ॥ २५ ॥

(रुग्दाहाख्ये त्रिकट्वादिकषायः)

त्रिकटुत्रिफलामुस्तापाठावत्सकपुष्करैः ।
सकुनिम्बैः शृतं तोयं रुग्दाहविनिवर्तकम् ॥ २६ ॥

(ज्वरे ब्राह्म्यादिक्वाथः)

ब्राह्मी मुस्ता वचा द्राक्षा दुस्पर्शः कटुरोहणी ।
निम्बव्याघ्रातवल्कं च खदिरामलकाभयाः ॥ २७ ॥
व्योषामयकुनिम्बं च तुम्बमूलाग्निदारु च ।
दशमूलयुतैरेभिः क्वाथो रुग्दाहशान्तये ॥ २८ ॥

(चित्तभ्रमाख्ये झट्यादिक्वाथः)

झटी पुष्करमूलश्च व्याघ्री शृङ्गी दुरालभा ।
गुळूची नागरं पाठा मुस्ता कटुकरोहणी ॥ २९ ॥
एष झट्यादिको नाम चित्तविभ्रमसान्निनुत् ।

(कण्ठकुब्जके बिल्वादिक्वाथः)

बिल्वकाश्मर्यतर्कारीपटोलाङ्कोलपर्पटैः ॥ ३० ॥
सव्याघ्रीनागरैः क्वाथो दातव्यः कण्ठकुब्जके ।

(कर्णिकसन्निपाते भार्ङ्ग्यादिक्वाथः)

भार्ङ्गी पुष्करमूलं च मुस्तापर्पटनागरम् ॥ ३१ ॥
पिप्पलीं दशमूलं च सलिले साधु साधयेत् ।
सन्निपातज्वरं हन्ति विषमं कर्णिकं तथा ॥ ३२ ॥
कासश्वासाग्निसदनहृत्पार्श्वार्तिप्रतापनुत् ।

(भुग्ननेत्रज्वरे स्वादुकण्टकादिक्वाथः)

स्वादुकण्टकनिर्गुण्डीग्रन्थिकं घनपर्पटम् ॥ ३३ ॥
शुण्ठीरवियुतः क्वाथो भुग्ननेत्रहरः परम् ।

(रक्तष्ठीसन्निपाते फलत्रयादिकषायः)

फलत्रयं पर्पटकं पटोलं वह्निपाटली ॥ ३४ ॥
शुण्ठ्यर्कमूलनिष्क्वाथो रक्तष्ठीसन्निपातनुत् ।

(प्रलापकाख्ये द्विपञ्चमूलादिः)

द्विपञ्चमूलक्वथितेन युक्तं भिषक्प्रयुक्तं मधुकस्य चूर्णम् ।
तृट्कासशोषश्वसनैरुपेते प्रलापकाख्ये विहितं ज्वरे स्यात् ॥ ३५ ॥

(अभिन्यासे त्रायन्त्यादिः)

त्रायन्तीपुष्करैरण्डशटीभृङ्गीपुनर्नवैः ॥ ३६ ॥
दशमूलामृताभार्ङ्गीदुस्पर्शवृषनागरैः ।
अभिन्यासज्वरे घोरे क्वाथस्तस्य प्रबोधकः ॥ ३७ ॥

(सर्वसन्निपाते कणादिक्वाथः)

कणाजयन्तीभूनिम्बवचादीप्यकनागरैः ।
पटोलपर्पटैः क्वाथः पातव्यः सर्वसन्निजित् ॥ ३८ ॥

(सर्वसन्निपाते जयादिः)

जया जया द्विबृहती त्रायन्ती बिल्वपाटली ।
डुण्डुका द्विस्थिरा चेति दशमूलैः सनागरैः ॥ ३९ ॥
कषायो विहितः सर्वसन्निपातनिवारणः ।

(लोहिताण्डादितैलम्)

लोहिताण्डं हरिद्रे द्वे शङ्खिनी कृष्णजीरकम् ॥ ४० ॥
शारिवा चन्दनं कुष्ठं सैन्धवं त्र्यूषणं वचा ।
एतैर्वाशारसे सिद्धं सस्तन्यं तैलमुत्तमम् ॥ ४१ ॥
पानाभ्यञ्जननस्यैश्च लिप्तं सन्धिनखान्तयोः ।
समस्तसन्निपातघ्नं पक्षाघातार्दितापहम् ॥ ४२ ॥
बाह्यायामान्तरायामभूतादिग्रहनाशनम् ।
अपस्मारविषोन्मादविषमज्वरनाशनम् ॥ ४३ ॥
एतत्तैलं महावीर्यं रहस्यमिदमुत्तमम् ।
सन्निपातान्तको नाम सुपर्ण इव भोगिनः ॥ ४४ ॥
गुह्याद् गुह्यतरं ज्ञेयमश्विभ्यां निहितं पुरा ।
एरण्डबलयोर्मूलं ति वकं च प्रसारिणी ॥ ४५ ॥
कोरण्डपत्रं चैतानि क्वाथे दद्याद् विशेषतः ।
तैलेन तुल्यं क्षीरं च रक्षेद् धान्ये त्रिपक्षकम् ॥ ४६ ॥

(सन्निपाते सर्वाङ्गलेपः)

पुष्पोद्गमात् प्राक् कूश्माण्डलतायाः स्वरसं हरेत् ।
नासां विहाय सर्वाङ्गलेपनात् सन्निपातजित् ॥ ४७ ॥

(सन्निपाते अन्यः प्रलेपः)

हरिप्रियामपामार्गं हरनिर्माल्यमेव च ।
चूर्णयित्वा तु सर्वाङ्गे लेपयेत् सान्निपातिके ॥ ४८ ॥

(सर्वज्वरघ्नोऽपामार्गप्रयोगः)

अपामार्गस्य मूलं तु सम्यक् प्रक्षाल्य वारिणा ।
बध्नीयाद् वामहस्ते तत् सर्वज्वरविमोक्षणम् ॥ ४९ ॥

(सन्निपातज्वरे जिह्वाप्रलेपः)

उच्छूनां स्फुटितां जिह्वां द्राक्षया मधुसर्पिषा ।
लेपयेत् केवलेनापि मधुना सान्निपातिके ॥ ५० ॥

(सन्निपाते मूर्धविलेपनप्रयोगाः)

वाशाभूतजटाविष्णुप्रियानिर्गुण्डिजे रसे ।
वचाहरिद्रात्रिफलाकटुकाकुष्ठदारुभिः ॥ ५१ ॥
सस्तन्यं शस्तमेरण्डतैलं मूर्धविलेपने ।
कुर्याद् रास्नादिमिश्रं वा सन्निपातज्वरापहम् ॥ ५२ ॥
भस्मना गोमयोत्थेन युक्तमर्कोद्भवं पयः ।

(ज्वरेऽपराजिताख्यो धूपः)

पुरध्यामवचासर्जनिम्बार्कामरदारुभिः ॥ ५३ ॥
धूपो ज्वरेषु सर्वेषु कार्योऽयमपराजितः ।

(सन्निपाते सैन्धवाद्यञ्जनम्)

हिमाम्बुना सैन्धवोग्राशिलामागधिकोषणैः ॥ ५४ ॥
शिरीषास्थिरसोनाभ्यां सन्निपातेऽञ्जनं हितम् ।

(सन्निपाते नावनम्)

मुनिपत्रस्य तोयेन नस्यं कुर्यात् कटूत्कटम् ॥ ५५ ॥

(नस्यान्तरम्)

अण्डानि पिष्ट्वा तनुलोहितानां
नसा पिबेत् स्तन्ययुतं प्रकामम् ।
उन्मादशान्त्यै ग्रहदूषिते च
महाज्वरे दोषसमूहजेऽपि ॥ ५७ ॥

(सन्ततज्वरे कलिङ्गकादिक्वाथः)

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहणी ।

(सततज्वरे पटोलादिः)

पटोलं शारिबा मुस्ता पाठा कटुकरोहणी ॥ ५८ ॥

(अन्येद्युके पटोलनिम्बादिः)

पटोलनिम्वत्रिफलामृद्वीकामुस्तवत्सकाः ।

(तृतीयके किराततिक्तादिः)

किराततिक्तमधुकाचन्दनं विश्वभेषजम् ॥ ५९ ॥

(चतुर्थके धात्र्यादि )

धात्रीमुस्तामृताक्षौद्रमर्धश्लोकसमापनाः ।
पञ्चैते सन्ततादीनां पञ्चानां शमना मताः ॥ ६० ॥

(सन्ततादिषु भार्ङ्ग्यादिक्वाथः)

भार्ङ्ग्यब्दपर्पटकधन्वयवासविश्व-
भूनिम्बकुष्ठकणसिंह्यमृताः कषायः ।
जीर्णज्वरं सततसन्ततकानि हन्या-
दन्येद्युकं सह तृतीयचतुर्थकाभ्याम् ॥ ६१ ॥

(शीतिकाज्वरे कटङ्कटेर्यादिः)

कटङ्कटेरी मुस्ता च सरलं गजपिप्पली ।
शुण्ठी च भार्ङ्ग्यतस्सिद्धं शीतिकामाशु नाशयेत् ॥ ६२ ॥

(शीतिकाज्वरे आरण्यतुलसीमूलादिः)

आरण्यतुलसीमूलविष्णुक्रान्तिमहौषधैः ।
क्वाथोऽयं निर्हरेच्छीघ्रं शीतिकाविषमज्वरम् ॥ ६३ ॥

(शीतज्वरे ग्रन्थिकादिः)

ग्रन्थिकव्योषलशुनदशमूलमहौषधैः ।

(ज्वरे महाषट्पलघृतम्)

पूतीकोषणपञ्चकोलकवुकैः साजाजिकैः साम्बुदैः
सक्षारातिविषैः साहिङ्गुहपुषासिन्धूद्भवैः कल्कितैः ।
शुक्तेनार्द्रकसम्भवेन च रसेनैतन्महाषट्पलं
सर्पिः पक्वमरोचकाग्निसदनप्लीहज्वरश्वासजित् ॥ ६५ ॥

(कल्याणकाख्यं सर्पिः)

वराविशालावेल्लादेवदार्वेलवालुकम् ।
द्विशारिबाद्विरजनीद्विस्थिराफालिनीनतैः ॥ ६६ ॥
बृहतीकुष्ठमञ्जिष्ठानागकेसरडाडिमैः ।
वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः ॥ ६७ ॥
सदन्तीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत् ।
प्रस्थं भूतग्रहोन्मादश्वासापस्मारपाप्मजित् ॥ ६८ ॥
पाण्डौ कुष्ठे विषे शोषे मेहे मोहे ज्वरे गरे ।
अरेतस्यल्परजसि दैवोपहतचेतसि ॥ ६९ ॥
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ।
बल्यं मङ्गल्यमायुष्यं कान्तिलावण्यपुष्टिदम् ॥ ७० ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।

(इन्दुकान्तघृतम्)

पूतीकदारुदशमूलकषायसिद्धं सक्षीरषट्पलयुतं घृतमिन्दुकान्तम् ।
वातामयक्षयमहोदरगुल्मशूलनिम्नोन्नतज्वरहरं बलवर्धनं च ॥७१॥

(पक्वज्वरे क्षीरपया)

अश्वत्थशृङ्गं भद्रा च देवीमूलं च तैः कृता ॥ ७२ ॥
क्षीरपेया पक्वजर्तिं पित्तार्तिं च विनाशयेत् ।

(ज्वरे तक्रपेया)

चिरिविल्वं सही शुण्ठी वरा लाजा मयूरकम् ॥ ७३ ॥
दुस्पृक्पुनर्नवं चैतैः पेयां तक्रयुतां पिबेत् ।
पक्वज्वरविनाशाय जठरानलवृद्धये ॥ ७४ ॥

(ज्वरादौ लाक्षादितैलम्)

लाक्षारसे मस्तुचतुर्गुणे च तैलं पचेत् सैन्धवनिशाद्वयाब्दैः ।
मञ्जिष्ठयष्टीसुरदारुतिक्ताहिमाश्वगन्धामिसिमांसिकुष्ठैः ॥ ७६ ॥
एतन्निहन्ति ज्वरकासशोषश्वासांश्च भूतग्रहराक्षसादीन् ।
प्रशस्यते दुर्बलबालवृद्धक्षीणक्षतानामपि गर्भिणीनाम् ॥ ७७ ॥

(ज्वरे फेनोशीरादितैलम्)

फेनोशीरनिशाब्दकुष्ठमधुकैर्मञ्जिष्ठविश्वाम्बुभि-
मूर्वालोहितयष्टिसर्जकटुकासिन्धूत्थलाक्षाञ्जनैः ।
सर्श्राकण्ठजटानतैस्तिलरुहं तक्रे पचेत् षड्गुणे
तत् सद्यो हरते ज्वरान् ज्वरकृतान् दाहादिशीतादिकान् ॥७८॥

इति हृदयप्रिये योगखण्डे प्रथमोऽध्यायः ॥

---

अथ द्वितीयोऽध्यायः ।

(अविपत्तिः)

व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ।
सर्वैः समा समसिता क्षौद्रेण गुळिकीकृता ॥ १ ॥
अविपत्तिरयं योगः प्रशस्तः पित्तरोगिणाम् ।
मूत्रकृच्छ्रज्वरच्छर्दिकासश्वासभ्रमक्षये ॥ २ ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्तः सर्वविषेषु च ।

(रक्तपित्ते आटरूषकादिक्काथः)

आटरूषकमृद्वीकापथ्याक्काथः सशर्करः ॥ ३ ॥
मधुमिश्रः श्वासकासरक्तपित्तनिबर्हणः ।

(द्राक्षादिक्काथः)

द्राक्षामधूकमधुकलोध्रकाश्मर्यशारिबाः ॥ ४ ॥
मुस्तामलकह्रीवेरपद्मकेसरपद्मकम् ।
मृणालचन्दनोशीरनीलोत्पलपरूषकम् ॥ ५ ॥
फाण्डो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ।
युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ॥ ६ ॥

ज्वरं मदात्ययं छर्दिं मूर्च्छां दाहं श्रमं भ्रमम् ।
ऊर्ध्वगं रक्तपित्तं च पिपासां कामिलामपि ॥ ७ ॥

(ऊर्ध्वगरक्तपित्ते वाशादिक्काथः)

वाशाजपामधुकलोध्रबलामृतानां
क्काथो जयत्यसृजमूर्ध्वगतं मधूढः ।

(रक्तपित्ते चन्दनादिक्काथः)

चन्दनवाळकपर्पटवलाहकोशीरसम्भृतः क्काथः ।
अपहरति रक्तपित्तं क्लेशमिवेशो नमस्कारः ॥ ८ ॥

(रक्तपित्तरोगे शतावर्यादिक्काथः)

शतावरीगोपकन्याचन्दनोशीरवाळकैः ।
सतण्डुलीयकद्राक्षासमङ्गोत्पलयष्टिभिः ॥ ९ ॥
साधितः साधयत्याशु निर्यूहः ससितामधुः ।
ऊर्ध्वाधोगं रक्तपित्तमुभयायनमेव वा ॥ १० ॥
तथा प्रदरमुन्मादं सदाहं विषमज्वरम् ।

(वृषघृतम्)

समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि ॥ ११ ॥
पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत् ।
तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम् ॥ १२ ॥
पित्तगुल्मज्वरश्वासकासहृद्रोगकामिलाः ।
तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ॥ १३ ॥

(नीलोत्पलादिघृतम्)

नीलोत्पलसमङ्गाभिस्तथैव त्रायमाणया ।
मूर्वामुत्पलकिञ्जल्कं मञ्जिष्ठामेलवालुकम् ॥ १४ ॥
दूर्वां श्वेतामुशीरं च मुस्तापङ्कजचन्दनम् ।
द्राक्षामधूकयष्ट्याह्वं काश्मरं चन्दनं सिताम् ॥ १५ ॥
पिष्ट्वा तैः कार्षिकैर्द्रव्यैर्घृतप्रस्थं विपाचयेत् ।
दूर्वारसमजाक्षीरं पृथग्दत्वा चतुर्गुणम् ॥ १६ ॥
तत्पानमाननाद्रक्ते, नावनं नासिकागते ।
कर्णाभ्यामागते रक्ते तस्य कर्णौ प्रपूरयेत् ॥ १७ ॥

तथा चक्षुर्गते रक्ते पूरयेत् तस्य चक्षुषी ।
मेढ्रपायुगते चापि वस्तिकर्मसु योजयेत् ॥ १८ ॥
प्रवृत्तं रोमकूपेभ्यस्त्वभ्यङ्गेन जयेद् घृतम् ।
शीतलान्यन्नपानानि देयान्याह पितामहः ॥ १९ ॥

(मोदकत्वगादितैलम्)

मोदकत्वक्तुलाक्वाथे लाक्षाकल्कं पयोयुतम् ।
तैलं पक्वं तु नारीणामस्थ्यसृक्स्रावणापहम् ॥ २० ॥

(प्रदरे खदिरशीतादिक्वाथः)

खदिरशीतबलासनशारिबावृषजपाम्बुदमोदकवल्कलैः ।
जयति सामलकैः शृतमम्बु यत् प्रदरमाशु सितामधुसंयुतम् ॥२१॥

(असृग्दरे मुस्तामृतादिक्वाथः)

मुस्तामृतामधुकचन्दनसेव्यविश्व-
माषाग्निमन्थकणमुद्गकुलस्थचित्रैः ।
सिद्धाम्बु माक्षिकयुतं पिबतां (?) वधूनां
नश्यन्त्यसृग्दरगदाः सहसैव लोके ॥ २२ ॥

(सौवर्चलादिक्वाथः)

दध्ना सौवर्चलाजाजीमधुकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥ २३ ॥

(धात्र्यादिघृतम्)

धात्रीविदारीक्षुशतावरीणां कूश्माण्डकानां च रसेषु सर्पिः ।
क्षीरेण सार्धं विपचेत् सुपिष्टैर्मृद्वीकयष्ट्याह्वयचन्दनैश्च ॥ २४ ॥
एतत्सुसिद्धं सितया विमिश्रं निवारयेच्छीघ्रमसृग्दरं हि ।
पाण्ड्वामये पित्तकृते हितं स्यात् पैत्ते च गुल्मेऽस्थिविनिस्सृतौ च ॥
वन्ध्या च पीत्वा लभते च गर्भं शीघ्रं निहन्यादपि वातरक्तम् ।
अन्यांश्च पित्तप्रभवान् विकारान् मूर्च्छामदोन्मादमदात्ययादीन् ॥

(असृग्दरे माषघृतम्)

माषक्वाथे समक्षीरं लाक्षाकल्कं घृतं पचेत् ।
सितासनाथं पीतं तज्जयेद् घोरमसृग्दरम् ॥ २७ ॥

(जम्बूद्वयादिघृतम्)

जम्बूद्वयक्षीरिवृक्षपलाशार्जुनवल्कलम् ।
मधूकबदरीलोध्रवञ्चुलारुष्करत्वचम् ॥ २८ ॥

सनन्दीवृक्षकुटचत्वचः सञ्छिद्य खण्डशः ।
द्रोणद्वयेऽपां विपचेत् तत्क्वाथे पादशेषिते ॥ २९ ॥

द्विगुणक्षीरसंयुक्तं घृतप्रस्थद्वयं पचेत् ।
पिष्टैरुशीरमधुकशारिबाब्दकणाहिमैः ॥ ३० ॥

लाक्षाद्विलोध्रमृद्वीकापाठाधातकिवल्कलैः ।
वशिरोत्पलवर्षाभूबिल्वपेशीवृषाञ्जनैः ॥ ३१ ॥

मृणालगिरिमृद्दार्वीजम्बूपल्लवडाडिमैः ।
रम्भाजपानालिकेरकुसुमैः कतकेन च ॥ ३२ ॥

मधूकद्रामिलीनागपुष्पाम्रास्थिकपित्थकैः ।
तण्डुलीयककार्पासवीजमोचरसान्वितैः ॥ ३३ ॥

तत्सिद्धं निर्हरेदाशु प्रदरं रक्तपित्तकम् ।
रक्तार्शश्शोणितस्रावगर्भस्रावप्रवाहिकाः ॥ ३४ ॥

रक्तातीसारशमनं महाशोणितनाशनम् ।
जम्ब्वादिकमिदं सर्पिरश्विभ्यां निर्मितं पुरा ॥ ३५ ॥

(मुसलीखदिरादिक्वाथः)

मुसलीखदिरामलकत्रिकण्डुजम्बूपरिक्वाथः ।
सास्थिस्रावं प्रदरं प्रमार्ष्टि मधुमान् प्रगे पीतः ॥ ३६ ॥

(वातकासे गुलूच्यादिघृतम्)

गुलूचीकण्टकारिभ्यां पृथक् त्रिंशत्पलाद् रसे ।
प्रस्थः सिद्धो घृताद् वातकासनुद् वह्निदीपनः ॥ ३७ ॥

(कासश्वासादौ क्षाररास्नादिघृतम्)

क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ।
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ॥ ३८ ॥

दशमूलस्य निर्यूहे पीतो मण्डानुपायिना ।
सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ॥ ३९ ॥

(विदार्यादिगणः)

विदारिपञ्चाङ्गुलवृश्चिकालीवृश्चीवदेवाह्वयशूर्पपर्ण्यः ।
कण्डूकरी जीवनह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी ॥ ४० ॥

विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ ४१ ॥

(रास्नादिघृतम्)

द्रोणेऽपां साधयेद् रास्नादशमूलशतावरीः ।
पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम् ॥ ४२ ॥

तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ।
समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत् ॥ ४३ ॥

प्रयुक्तं वातरोगेषु पाननावनबस्तिभिः ।
पञ्च कासान् शिरःकम्पं योनिवंक्षणवेदनाम् ॥ ४४ ॥

सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ।

(पित्तकासे शर्करादिकं सर्पिः)

शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम् ॥ ४५ ॥

कल्कीकृत्य पचेत् सर्पिः क्षीरेणाष्टगुणेन तत् ।
पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ॥ ४६ ॥

(कासे मधूकादिलेहः)

मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ।
कासी पर्वास्थिशूली च लिह्यात् सघृतमाक्षिकाः ॥ ४७ ॥

(त्रिजातादिवटी)

त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता ।
द्राक्षामधुकखर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥ ४८ ॥

मधुना गुलिका घ्नन्ति ता वृष्याः पित्तशोणितम् ।
कासश्वासारुचिच्छर्दिमूर्च्छाहिध्मामदभ्रमान् ॥ ४९ ॥

क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान् ।
रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ ५० ॥

(कूश्माण्डकरसायनम्)

वीतत्वगस्थिकूश्माण्डतुलां स्विन्नां पुनः पचेत् ।
घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र निक्षिपेत् ॥ ५१ ॥

खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि ।
त्रिजातधान्यमरिचं पृथगर्धपलांशकम् ॥ ५२ ॥

अवतारितशीते तु दद्यात् क्षौद्रं घृतार्धिकम् ।
खजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम् ॥ ५३ ॥

कासहिध्मारुचिश्वासरक्तपित्तक्षतक्षयान् ।
उरस्सन्धानजननं मेधास्मृतिबलप्रदम् ॥ ५४ ॥

अश्विभ्यां निर्मितमिदं कूश्माण्डकरसायनम् ।

(अगस्त्यरसायनम्)

दशमूलं स्वयंगुप्तां शङ्खपुष्पीं शठीं बलाम् ॥ ५५ ॥

हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ।
भार्ङ्गीं पुष्करमूलं च द्विपलांशं यवाढकम् ॥ ५६ ॥

हरीतकीशतं चैव जलपञ्चाढके पचेत् ।
यवस्वेदे कषायं तं पूतं तच्चाभयाशतम् ॥ ५७ ॥

पचेद् गुलतुलां दत्त्वा कुडुबं च पृथग् घृतात् ।
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥ ५८ ॥

लेहं द्वे चाभये नित्यमतः खादेद् रसायनात् ।
तद् वलीपलितं हन्याद् वर्णायुर्बलवर्धनम् ॥ ५९ ॥

पञ्च कासान् क्षयं श्वासं सहिध्मं विषमज्वरम् ।
गुल्ममेहग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥ ६० ॥

अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ।

(जीवनीयगणः)

जीवन्ती काकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च ॥ ६१ ॥

जीवकऋषभकमधुकं चेति गणो जीवनीयाख्यः ।

(अमृतप्राशघृतम्)

जीवनीयो गणः शुण्ठी वरी वीरापुनर्नवौ ॥ ६२ ॥

बलाभार्ङ्गीस्वगुप्तर्धिस्थिरातामलकीकणाः ।
शृङ्गाटकं पयस्या च पञ्चमूलं च यल्लघु ॥ ६३ ॥
द्राक्षाक्षोलादिषु फलं मधुरस्निग्धबृंहणम् ।
तैः पचेत् सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकाल्कितैः ॥ ६४ ॥
क्षीरधात्रीविदारीक्षुच्छागमांसरसान्वितम् ।
प्रस्थार्धं मधुनः शीते शर्करार्धतुलारजः ॥ ६५ ॥
पलार्धिकं च मरिचत्वगेलापत्रकेसरम् ।
विनीय चूर्णितात्* तस्माल्लिह्यान्मात्रां यथानलम् ॥ ६६ ॥
अमृतप्राशमित्येतन्नराणाममृतं घृतम् ।
क्षीरमांसरसं प्राश्यं क्षीरमांसरसाशिनः ॥ ६७ ॥
नष्टशुक्रक्षतक्षीणदुर्बलप्रबलप्रदम् ।

(कासश्वासादिषु आस्यविधारणगुलिका)

हरीतकीव्योषपयोदचूर्णं गुलेन बद्ध्वा गुलिकां प्रकुर्यात् ।
निवारयत्यास्यविधारितेयं श्वासं प्रवृद्धं बलवच्च कासम् ॥ ६८ ॥

(कर्पूरादिचूर्णम्)

कर्पूरचोचतक्कोलजातीफलदलाः समाः ॥ ६९ ॥
लवङ्गनागमरिचकृष्णाशुण्ठ्यो विवर्धिताः ।
चूर्णं सितासमं हृद्यं रोचनं क्षयकासजित् ॥ ७० ॥

(तालीसादिमोदकः)

तालीसं जलदोषणे सचविके तुल्या द्विभागा भवेत्
कृष्णामूलसमन्विता त्रिपलिका शुण्ठी चतुर्जातकम् ।
स्यान्मुष्टिप्रमितं गुलद्विगुणितैरेभिः कृता मोदकाः
कासश्वासगराग्निमान्द्यगुदजप्लीहप्रमेहापहाः ॥ ७१ ॥

(वत्सकादिचूर्णम्)

वत्सकं त्रिफलाव्योषविलङ्गं देवदारु च ।
बला रास्ना च तच्चूर्णं समस्तसमशर्करम् ॥ ७२ ॥

---

* चूर्णितामित्यष्टाङ्गहृदये मुद्रिते ।

खादन् मधुघृताभ्यां वा लिह्यात् कासहरं परम् ।

(मनश्शिलादिधूमः)

मनश्शिलासमा कृष्णा तदर्धं नागरं भवेत् ॥ ७३ ॥

तदर्धं मरिचं विद्यात् तदर्धं तु हरीतकी।

एषां चूर्णं समावाप्य कार्पासं साधु वेष्टयेत् ॥ ७४ ॥

एष धूमवरो योज्यः कासश्वासनिबर्हणः ।

(कासे वर्त्तयः)

कार्पासास्थिबले कटूनि बदरीपत्रं च भृङ्गीरस-

स्तद्वर्त्तिः कुनटीकटुत्रयरविक्षीरान्विता वर्तिकाः ।

गोपीमागधिका शिलांशविहिता वर्त्तिः शिलाविश्वयो-

र्वर्त्तिश्च क्रियतां यथाविधि तया कासानशेषान् जयेत् ॥ ७५ ॥

(निर्गुण्डीपत्रादितैलं सर्पिश्च)

निर्गुण्डीपत्रनिर्यासे तैलं सर्पिश्च साधयेत् ॥ ७६ ॥

पञ्चकोलप्रतीवापं कासश्वासहरं परम् ।

(तेकराजतैलम्)

तेकराजरसविंशतिभागे पक्वतैलमभया प्रतिवापम् ॥ ७७ ॥

कासमाशु विनिहन्ति नराणां मेघवृन्दमिव मारुतवेगः।

(कासमर्दादितैलम्)

कासमर्दं च बृहती वाशा च्छिन्नोद्भवं तथा ॥ ७८ ॥

काकमाची भृङ्गरजः पटोलं चाथ कुण्डली ।

एतेषां स्वरसे तैलं पथ्यात्रिकटुकल्कवत् ॥ ७९ ॥

अजाक्षीरयुतं पक्वं कासश्वासनिवारकम् ।

(बलाश्वगन्धादितैलम्)

बलाश्वगन्धालाक्षाणां क्वाथे पादावशेषिते ॥ ८० ॥

तैलप्रस्थं पचेद् धीमान् दधिमस्तुचतुर्गुणे ।

रास्नाचन्दनमञ्जिष्ठादूर्वामधुकचोरकैः ॥ ८१ ॥

शारिबोशीरजलदकुष्ठागरुसुरद्रुमैः।
हरिद्राकुमुदाकौन्तीशताह्वापद्मकेसरैः ॥ ८२ ॥
क्काथः सुसंयुतैरेभिः कार्षिकैश्च सुपेषितैः।
शनैर्मृद्वग्निना पक्त्वा गालयेद् भाजने शुभे ॥ ८३ ॥
प्रशस्ते तिथिनक्षत्रे तत्तैलं शीलयेन्नरः।
तेन सर्वज्वरोन्मादक्षयकासादयो गदाः ॥ ८४ ॥
नश्यन्ति विविधाश्चैव वातरोगा न संशयः।
अश्विभ्यां निर्मितं तैलमेतत् पुष्टिकरं परम् ॥ ८५ ॥

(धान्यादितैलम्)

धात्र्यश्वगन्धात्रिबलाशिरीषोशीरशारिबाः।
तेषां क्काथे पचेत् तैलं क्षीरलाक्षारसान्वितम् ॥ ८६ ॥
पिष्टैर्यष्टिनिशाभीरुमूर्वामुस्तासुरद्रुमैः।
पिप्पलीन्द्रयवानन्ताविषातिक्ताजटामयैः ॥ ८७ ॥
मृणालबिसशालूकमांसीचन्दनपद्मकैः।
सचतुर्ज्जातकैः सिद्धं तदभ्यङ्गादिभिर्जयेत् ॥ ८८ ॥
जीर्णज्वराङ्गसदनपार्श्वपृष्ठशिरोरुजः।
विसर्पकासविस्फोटरक्तपित्तमसृग्दरम् ॥ ८९ ॥
कासश्वासप्रतिश्यायान् गर्भिणीसूतिकागदान्।
कामिलां पाण्डुरोगं च मांसरक्तक्षयं तथा ॥ ९० ॥
वर्णहानिं च रौक्ष्यं च जरां चाङ्गस्य नाशयेत्।
एकादश च षट् चैव शोषिणां य उपद्रवाः ॥ ९१ ॥
प्रह्लादनं प्रशमयेन्मेघोऽग्निमिव वृष्टिमान्।

(हरिद्रादिवर्त्तिः)

हरिद्रापत्रमेरण्डमूलं लाक्षां मनश्शिलाम् ॥ ९२ ॥
सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रयोजयेत्।
तां घृताक्तां पिबेद् धूमं श्वासकासविनाशनम् ॥ ९३ ॥

(श्वासरोगे भार्ङ्गीकणादिक्काथः)

भार्ङ्गीकणाकासहरीहरिद्रावाशामृतानागरधान्यकानाम्।
क्काथो जयेच्छ्वासमतिप्रवृद्धं क्षणेन तीक्ष्णोत्थपरागमिश्रः ॥ ९४

(बलाजीरकादिक्वाथः)

बलाजीरकबिल्वाब्दवृषविश्वसुरद्रुमैः ।
गुडेक्षुलाजसहितैर्निष्क्वाथः श्वासकासहा ॥ ९५ ॥

(अभयादिक्वाथः)

अभयाव्योषभार्ङ्ग्यब्दव्याघ्रीवाशाशृतं जलम् ।
पीतं सारुचिहृल्लासश्वासकासामयापहम् ॥ ९६ ॥

(दशमूलकटुत्रयादिक्वाथः)

दशमूलकटुत्रयैः कषायः सवृषैरेष समाक्षिकः प्रपीतः ।
श्वसनानिलकासपार्श्वपृष्ठत्रिकमूर्द्धांसरुजासु सम्प्रदिष्टः ॥ ९७ ॥

(पिप्पल्यादिक्वाथः)

पिप्पलीधान्यकोशीरानिर्यूहः ससितामधुः ।
पीतः प्रशमयत्याशु हिक्कां तृष्णां च दुर्जयाम् ॥ ९८ ॥

(दशमूलविश्वादिकषायः)

दशमूलविश्वलशुननिष्क्वाथः क्षीरपरिशिष्टः ।
पीतो निहन्ति हिक्कां लज्जामिव वेगवान् रागः ॥ ९९ ॥

(जीवन्त्यादिचूर्णम्)

जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम् ।
चण्डातामलकीलोहभार्ङ्गीनागरवालकम् ॥ १०० ॥
कर्कटाख्या शठी कृष्णा नागकेसरचोरकम् ।
उपयुक्तं यथाकामं चूर्णं समधुशर्करम् ॥ १०१ ॥
पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ।

(बलात्रयादिक्वाथः)

बलात्रयं च धावन्यौ भद्राभूनिम्बचन्दनम् ॥ १०२ ॥
वंशात् तालात् किसलयं दारुद्राक्षेक्षुविल्वकम् ।
यष्टी रास्ना च तैः क्वाथो घृतजीरकसंयुतः ॥ १०३ ॥
वातवैगुण्यमाध्मानं हिध्माश्वासौ च नाशयेत् ॥ १०४ ॥

इति हृदयप्रिये योगखण्डे द्वितीयोऽध्यायः ॥

अथ तृतीयोऽध्यायः ।

(क्षये पुनर्नवादिक्वाथः)

पुनर्नवबलाचव्यस्थिरापिप्पलिगोक्षुरैः ।
जीवन्त्या च शृतं तोयं पुष्टिकृत् क्षयनाशनम् ॥ १ ॥

(एलाकणादिक्वाथः)

एलाकणामधुकनागरकाब्दवासा-
निम्बामृताम्बुदशमूलशृतः कषायः ।
*रास्नाकणामधुकजीरकसम्प्रयुक्तो
यक्ष्माणमाशु विनिहन्ति मधुप्रगाढः ॥ २ ॥

(एलाजमोजादिरसायनम्)

एलाजमोजात्रिफलासौराष्ट्रीव्योषचित्रकान् ।
सारानरिष्टगायत्रीसालबीजकसम्भवान् ॥ ३ ॥
भल्लातकं विडङ्गं च पृथगष्टपलोन्मितम् ।
सलिले षोडशगुणे षोडशांशस्थिते पचेत् ॥ ४ ॥
पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट् ।
तुकाक्षीर्याः क्षिपेत् त्रिंशत् सितायाः द्विगुणं मधु ॥ ५ ॥
घृतात् त्रिजातात् त्रिपलं ततो लीढं खजाहतम् ।
पयोऽनुपानं तत् प्राह्णे रसायनमयन्त्रणम् ॥ ६ ॥
मेध्यं चक्षुष्यमायुष्यं दीपनं हन्ति चापरान् ।
गुल्ममेहक्षयव्याधिपाण्डुरोगभगन्दरान् ॥ ७ ॥

(अश्वगन्धादिसर्पिः)

अश्वगन्धाबलाभीरुस्थिराजीवन्तिगोक्षुरात् ।
शिफां पचेज्जलद्रोणे त्वष्टभागावशेषिते ॥ ८ ॥
सर्पिः प्रस्थं पचेदेतैर्द्विगुणक्षीरसंयुतम् ।
चन्दनोत्पलयष्ट्याह्वकृष्णाद्राक्षाकशेरुभिः ॥ ९ ॥
द्विमेदादारुमञ्जिष्ठातुकापुण्ड्रकपद्मकैः ।
दुरालभावृषशठीशृङ्गीभार्ङ्गीपुनर्नवैः ॥ १० ॥

---

* 'लाक्षासितामधुकजीरके'ति ग्रन्थान्तरे ।

अगर्वतिविषापाठावालकोशीरनागरैः ।
पक्कं सर्पिः परं स्वर्यं रक्तमांसबलप्रदम् ॥ ११ ॥

रक्तपित्तापहं रक्तं स्त्रीणां विस्फोटतृड्ज्वरान् ।
विसर्पं कामिलामङ्गदाहं तृष्णां च दुर्जयाम् ॥ १२ ॥

कासं श्वासं प्रतिश्यायं शोषं शोषकृतामयान् ।
पानवस्त्यादिभिः शीघ्रं जयेत् कार्श्यनिषूदनम् ॥ १३ ॥

वस्तियोनिरुजाः सर्वाः प्रयोगेण विनाशयेत् ।
क्षयक्षीणशरीराणां नास्त्यन्यच्छरणं नृणाम् ॥ १४ ॥

(शुण्ठीहिङ्ग्वादिप्रयोगः)

शुण्ठीहिङ्गुयवक्षारकृष्णालशुनदीप्यकम् ।
सञ्चूर्ण्य सर्पिषा लीढ्वा पुनः पथ्यान्नसेविनः ॥ १५ ॥

क्षणात् क्षयः क्षयं याति तत्कृताश्चाप्युपद्रवाः ।

(नागबलासर्पिः)

पादशेषं जलद्रोणे पचेन्नागबलातुलाम् ॥ १६ ॥

तेन क्वाथेन तुल्यांशं घृतं क्षीरं च पाचयेत् ।
पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः ॥ १७ ॥

प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभिः ।
अश्वगन्धानताभीरुमेदायुग्मत्रिकण्टकैः ॥ १८ ॥

काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकैः ।
मृणालीविसखर्जूरशृङ्गाटककशेरुकैः ॥ १९ ॥

एतन्नागबलासर्पी रक्तपित्तक्षतक्षयान् ।
जयेत् तृड्भ्रमदाहांश्च बलपुष्टिकरं परम् ॥ २० ॥

वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम् ।
उपयुज्य च षण्मासान् वृद्धोऽपि तरुणायते ॥ २१ ॥

(फलत्रयादिक्वाथः)

फलत्रयं व्योषमपि चविका कालसर्जकम् ।
चित्रकं पिप्पलीमूलं शृङ्गी भार्ङ्गी जटा बला ॥ २२ ॥

गुळूची पौष्करं मूलं सिंही दारु निशा शठी ।
कोरण्डमजमोजं च यवानी सैन्धवं तथा ॥ २३ ॥

विल्वं च शरपुङ्खं च क्वाथ एतैस्त्रिदोषजित् ।

(तालीसपत्रादिचूर्णम्)

तालीसपत्रं मरिचं नागरं पिप्पली शुभा ॥ २४ ॥
यथोत्तरं भागवृद्धं त्वगेले चार्धभागिके ।
तद् रुच्यं दीपनं चूर्णं कणाष्टगुणशर्करम् ॥ २५ ॥
श्वासकासारुचिच्छर्दिप्लीहाहृत्पार्श्वशूलजित् ।
पाण्डुज्वरातिसारघ्नं मूढवातानुलोमनम् ॥ २६ ॥

(शशाङ्ककिरणम्)

प्रक्षिप्य शर्करां क्षीरे पक्वेऽतिघनतां गते ।
निर्वर्तिता ये भक्ष्यास्ते शशाङ्ककिरणाह्वयाः ॥ २७ ॥

(अरुचौ आम्रपल्लवादिक्वाथः)

आम्रपल्लवतद्वृन्तबिल्वलाजार्द्रकेक्षुभिः ।
केसरैर्मातुलुङ्गस्य युक्तः क्वाथोऽरुचिं हरेत् ॥ २८ ॥

(एलात्वगादिचूर्णम्)

एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ।
भागवृद्धं क्रमाच्चूर्णं निहन्ति समशर्करम् ॥ २९ ॥
प्रसेकारुचिहृल्लासच्छर्दिकण्ठामयापहम् ।

(यवान्यादिचूर्णम्)

यवानीतिन्त्रिणीकाम्लवेतसौषधडाडिमैः ॥ ३० ॥
कृत्वा कोलं च कर्षांशं सितायाश्च चतुष्पलम् ।
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ॥ ३१ ॥
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।
चूर्णमेतत् परं रुच्यं हृद्यं ग्राहि हिनस्ति च ॥ ३२ ॥
विबन्धकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ।

(अरोचके कवलयोगाः)

विससौवर्चलं कुष्ठमजाजी मरिचं सिता ॥ ३३ ॥
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ।
लोध्रं तेजोवती पथ्या यवक्षारकटुत्रयम् ॥ ३४ ॥

आम्रडाडिमनिर्यासाः साजाजीसितशर्कराः ।
सतैलमाक्षिकायुक्ताश्चत्वारः कवलग्रहाः ॥ ३५ ॥
चतुरोऽरोचकान् हन्युरेकदोषसमस्तजान् ।

(रागषाडवौ)

द्राक्षाक्वाथः शालिसक्तूपपन्नो
मध्वंशाढ्यः सत्रिजातः सधान्यः ।
गौडोपेतः शर्करावांशिमिश्रो
रागो ज्ञेयः षाडवो डाडिमाम्लः ॥ ३६ ॥

(पञ्चसाराख्यं पानकम्)

द्राक्षामधूकमधुककोलडाडिमसाधितम् ॥ ३७ ॥
पानकं पञ्चसाराख्यं दाहतृष्णानिवर्तकम् ।

(छर्दिघ्नप्रयोगाः)

महौषधं धान्यकमश्वगन्धां
पीत्वा जयेत् तण्डुलधावनेन ।
अजाजिधान्यं बदरास्थिमध्यं
द्राक्षां च लीढ्वा मधुनानिलोत्थाम् ॥ ३८ ॥
सक्तवः सर्पिषाभ्यक्ताः शीतोदकपरिप्लुताः ॥ ३९ ॥
नातिद्रवो नातिघनो मन्थ इत्यभिधीयते ।
जम्ब्वाम्रपल्लवोशीरवटश्रृङ्गावरोहजः ॥ ४० ॥
क्वाथः क्षौद्रयुतः पीतः शीतो वापि नियच्छति ।
छर्दिं ज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम् ॥ ४१ ॥

(बिल्वादिक्वाथः)

बिल्वधान्यकबलामहौषधैर्लाजमुद्गसहितैः शृतं जलम् ।
छर्दिमाशु पिबतः सशर्करं हन्ति वातकफपित्तजामपि ॥ ४२ ॥

(कार्पासास्थ्यादिलेहः)

कार्पासास्थि तुटी कृष्णा लाजचूर्णं सशर्करम् ।
लेहयेच्छर्दिनाशाय रहस्यमिदमुत्तमम् ॥ ४३ ॥

(बिल्वादिलेहः)

बिल्वार्धाढकमम्भसोऽर्धकलशे पक्त्वा पदस्थे रसे
सिद्धं जीर्णगुलस्य षोडशपलं चूर्णीकृतैः संयुतम् ।

कर्षांशैर्घनधान्यजीरकतुटीत्वक्केसरत्र्यूषणै-
लींढं छर्दिररोचकाग्निसदनश्वासप्रसेकापहम् ॥ ४४ ॥

(एलादिचूर्णम्)

एलालवङ्गदलकेसरकोलमज्जा-
लाजप्रियङ्गुघनचन्दनचन्द्रसंज्ञाः ।
चूर्णीकृताश्च मधुना परिलिह्यमाना-
श्छर्दिं हरन्ति कफमारुतपित्तजाताम् ॥ ४५ ॥

इति हृदयप्रिये योगखण्डे तृतीयोऽध्यायः ॥

---

अथ चतुर्थोऽध्यायः ।

(दाडिमादिचूर्णम्)

डाडिमं कृष्णलवणं शुण्ठी हिङ्ग्वम्लवेतसम् ।
अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम् ॥ १ ॥

(बिल्वादितैलम्)

बिल्वं रास्नां यवान् कोलं देवदारुपुनर्नवम् ।
कुलत्थं पञ्चमूलं च पक्त्वा तस्मिन् पचेज्जले ॥ २ ॥
तैलं तन्नावने पाने वस्तौ चापि नियोजयेत् ।

(सौवर्चलादिघृतम्)

सौवर्चलस्य द्विपले पथ्यापञ्चाशदन्विते ॥ ३ ॥
घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मनुत् ।

(सुकुमाररसायनम्(

पचेत् पुनर्नवतुलां तथा दशपलां पृथक् ॥ ४ ॥
दशमूलपयस्याश्वगन्धैरण्डशतावरीः ।
द्विदर्भशरकाशेक्षुमूलपोटगलान्विताः ॥ ५ ॥
वहेऽपामष्टभागस्थे तत्र त्रिंशत्पलं गुलात् ।
प्रस्थमेरण्डतैलस्य द्वौ घृतात् पयसस्तथा ॥ ६ ॥
आवपेद् द्विपलांशं च कृष्णातन्मूलसैन्धवम् ।
यष्टीमधुकमृद्वीकायवानीनागराणि च ॥ ७ ॥

तत् सिद्धं सुकुमाराख्यं सुकुमारं रसायनम् ।
वातातपाध्वभाष्यस्त्रीपरिहार्येष्वयन्त्रणम् ॥ ८ ॥
प्रयोज्यं सुकुमाराणामीश्वराणां सुखात्मनाम् ।
नृणां स्त्रीवृन्दभर्तॄणामलक्ष्मीकलिनाशनम् ॥ ९ ॥
सर्वकालोपयोगेन कान्तिलावण्यपुष्टिदम् ।
वर्ध्मविद्रधिगुल्मार्शोयोनिशूलानिलार्तिषु ॥ १० ॥
शोफोदरखुडप्लीहविड्विबन्धेषु चोत्तमम् ।

(बलातैलम्)

बलाकषायकल्काभ्यां तैलं पक्वं च पाययेत् ॥ ११ ॥

(धान्याकशुण्ठ्यादिः)

धान्याकशुण्ठीलघुपञ्चमूलबलाः समुत्क्वाथ्य पिबेत् कषायम् ।
हृद्रोगमर्माभिहताङ्गभङ्गवक्षोरुजः पित्तभवान् विजेतुम् ॥ १२ ॥

(प्रियङ्ग्वाद्यम्बु)

प्रियङ्गुशारिवाशुण्ठीपृश्निपर्ण्युत्पलाम्बु वा ।

(वचादिचूर्णम्)

पिबेच्चूर्णं वचाहिङ्गुलवणद्वयनागरात् ॥ १३ ॥
सैलायवानककणायवक्षारात् सुखाम्बुना ।

(पुष्करादिचूर्णम्)

पुष्कराह्वाभयाशुण्ठीमाद्रीपीतद्रुकट्फलात् ॥ १४ ॥

(रोहितकादिलेहः)

क्वाथे रोहितकाश्वत्थखदिरोदुम्बरार्जुनात् ।
सपलाशवटन्योधत्रिवृच्चूर्णान्विते कृतः ॥ १५ ॥
सुखोदकानुपानस्य लेहः कफविकारहा ।

(वल्लभकसर्पिः)

पञ्चाशदभयाः पिष्ट्वा द्वे च सौवर्चलात् पले ॥ १६ ॥
पयसि द्विगुणे द्रव्ये घृतप्रस्थं विपाचयेत् ।
एतद् वल्लभकं नाम पानीयं सर्पिरुत्तमम् ॥ १७ ॥

अपतन्त्रकहृद्रोगश्वासघ्नमपराजितम् ।

(धान्वन्तरतैलम्)

बलामूलकषायस्य भागाः षट् पयसस्तथा ॥ १८ ॥

यवकोलकुलत्थानां दशमूलस्य चैकतः ।

निष्क्वाथभागो भागश्च तैलस्य च चतुर्दश ॥ १९ ॥

द्विमेदादारुमञ्जिष्ठाकाकोलीद्वयचन्दनैः ।

शारिबाकुष्ठतगरजीवकर्षभसैन्धवैः ॥ २० ॥

कालानुसारीशैलेयवचागरुपुनर्नवैः ।

अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः ॥ २१ ॥

शताह्वासूप्यपर्ण्येलात्वक्पत्रैः सूक्ष्मकल्कितैः ।

पक्वं मृद्वग्निना तैलं सर्ववातविकाराजित् ॥ २२ ॥

सूतिकाबालमर्मास्थिहतक्षीणेषु पूजितम् ।

ज्वरगुल्मग्रहोन्मादमूत्राघातान्त्रवृद्धिजित् ॥ २३ ॥

धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ।

(धान्याकादिक्वाथः)

धान्याकशुण्ठीसुरदारुचित्राबलेक्षुबिल्वैः परिपक्वमम्भः ।

ससैन्धवं हृद्गदकोष्ठवातगुल्माप्लिहापार्श्वरुजासु शस्तम् ॥ २४ ॥

(दशमूलकषायः)

दशमूलकषायस्तु तैलसैन्धवसंयुतः ॥ २५ ॥

निहन्यादाशु हृद्रोगं कासश्वासक्षयान्वितम् ।

(सौवर्चलादिचूर्णम्)

सौवर्चलं हिङ्गु सनागरं च चूर्णीकृतं पीतमशीततोये ।

हृत्पृष्ठकोष्ठान्तरबस्तिशूलं प्रणाशयेदेतदतिप्रवृद्धम् ॥ २६ ॥

(पुनर्नवादिक्वाथः)

पुनर्नवामृता द्राक्षा काश्मर्यंशुमती बला ॥ २७ ॥

परूषकं च क्वाथोऽयं वाततृष्णामपोहति ।

(धान्याकशुण्ठ्यादिः)

धान्याकशुण्ठीतृणपञ्चमूलशतावरीकोलयवाषकाणाम् ।

सुशीतलं वार्यनिवार्यवीर्यं निवारयेत् पित्ततृषं सिताढ्यम् ॥ २८ ॥

(धान्याकधात्र्यादिः)

धान्याकधात्रीगुरुपञ्चमूलच्छिन्नोद्भवाधन्वयवासविश्वात् ।
रसं पिबेत् पुष्परसप्रगाढं कफात् तृषारोचकदाहमोहे ॥ २९ ॥

(गुडूच्यादिः)

गुडूचीपद्मकारिष्टधानकारक्तचन्दनम् ॥ ३० ॥
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ।

(शारिबोशीरादिः)

शारिबोशीरकाश्मर्यमधूकशिशिरद्वयम् ॥ ३१ ॥
यष्टीपरुषकं हन्ति दाहपित्तास्रतृड्ज्वरान् ।

(कुस्तुम्बर्यादिक्वाथः)

कुस्तुम्बरीनागरपर्पटाम्बुजम्बुप्रवालाध्युषितं तु पाथः ।
प्रातः पिबेत् पुष्परसप्रगाढं तृष्णां विजेतुं यदि चेत् प्रयत्नः ॥

(नवकलशकालशेयप्रयोगः)

नवकलशनिषिक्तं माहिषं कालशेयं
समधुकमुदकान्तस्स्थापयित्वैकरात्रम् ।
यदि पिबति पिपासाकामिलारक्तपित्त-
भ्रममदपरिसर्पास्तस्य न स्युर्विकाराः ॥ ३३ ॥

(चन्दनादितैलम्)

चन्दनोदीच्यमधुकधात्रीयष्ट्याह्वशारिबाः ॥ ३४ ॥
सबलाः सलिलद्रोणे पृथग् दशपलोन्मितान् ।
पक्त्वा कषाये सक्षीरे क्षिपेद् ब्राह्मीवरीरसम् ॥ ३५ ॥
कुमार्या नालिकेराम्बु तैलमानं पृथक् पृथक् ।
प्रपौण्डरीकमञ्जिष्ठाधातकीपद्मकेसरम् ॥ ३६ ॥
कुमुदोत्पलशालूकमृणालबिसपद्मकम् ।
अनन्ताकुशकाशेक्षुक्षीरशुक्तत्वगुत्पलम् ॥ ३७ ॥
गणं च जीवनीयाख्यं क्वाथद्रव्यं च पेषयेत् ।
प्रस्थं च दत्त्वा तैलस्य शनैर्मृद्वग्निना पचेत् ॥ ३८ ॥

एतत् तैलं प्रशमयेद् दाहज्वरमदभ्रमान् ।
तृष्णादाहपिपासान्तर्दाहमूर्छाशिरोग्रहान् ॥ ३९ ॥
कामिलामाढ्यरोगं च रक्तपित्तं च नाशयेत् ।
प्रदरं चित्तविभ्रंशं विसर्पं पित्तवैकृतम् ॥ ४० ॥
अभ्यङ्गपाननस्याद्यैर्हन्ति वज्रमिवासुरान् ॥ ४०½ ॥

इति हृदयप्रिये योगखण्डे चतुर्थोऽध्यायः ॥

---

अथ पञ्चमोऽध्यायः ।

निरूहोऽन्वासनं नस्यं वमनं च विरेचनम् ।
पञ्च कर्माणि शस्तानि कुर्यादपि मदात्यये ॥ १ ॥

(मृद्वीकादिक्वाथः)

मृद्वीकामधुकमधूकपिप्पलीभिः
खर्जूरैर्मलयजशारिबाब्दलाजैः
सोशीरैः शृतमथवा सुशीतमम्भ-
स्तृण्मूर्छामदमतिविभ्रमान् निरस्येत् ॥ २ ॥

(मृणालादिफाण्टः)

मृणालविसशालूकद्राक्षेक्षुकणसम्भृतः ।
फाण्टः शीतकषायश्च मदमूर्च्छायभेषजम् ॥ ३ ॥

(हरीतक्यादिक्वाथः)

हरीतकीचित्रकनागराणां क्वाथो यवक्षारपरागमिश्रः ।
प्रमाष्ट्र्यशेषेण गुदाङ्कुराणां कुलं सहस्रांशुरिवान्धकारम् ॥ ४ ॥

(पथ्याबिल्वादिक्वाथः)

पथ्याबिल्वपुनर्नवपाठाचिरिबिल्वपञ्चकोलाम्भः ।
सैन्धवयुक्तमुदस्येद् गुल्मग्रहणीप्लिहार्शांसि ॥ ५ ॥

(दुस्पर्शकादिक्वाथः)

दुस्पर्शकेन बिल्वेन यवान्या नागरेण वा ।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥ ६ ॥

(चिरिबिल्वादिक्वाथः)

चिरिबिल्वपुनर्नववह्न्यभयाकणनागरसैन्धवपक्वजलम् ।
गुदकीलभगन्दरगुल्महरं जठराग्निविवर्धनमाशु नृणाम् ॥ ७ ॥

(पूतीकादिक्वाथः)

पूतीकपिप्पलीशुण्ठीविजयाधान्यचित्रकैः ।
निर्यूहः सयवक्षारो विबन्धार्शःप्रणाशनः ॥ ८ ॥

(अर्शोघ्नगणः)

कुटजचिरिबिल्वचित्रकमहौषधप्रतिविषावचाचविकाः ।
धन्वयवासं पथ्या दारुहरिद्रा गणोऽयमर्शोघ्नः ॥ ९ ॥

(हुतभुगादिः)

हुतभुगजमोजसैन्धवमगधामरिचैः समैः समा पथ्या ।
अम्भोदश्चितपीता पाण्ड्वर्शोवह्निमान्द्यशूलहरी ॥ १० ॥

(सूरणादिलेहः)

चूर्णीकृताः षोडश सूरणस्य भागास्ततोऽर्धेन तु चित्रकस्य ।
महौषधाद् द्वौ मरिचस्य चैको गुलेन दुर्नामजयाय पिण्डी ॥ ११ ॥

(काङ्कायनवटी)

पलानि पञ्च पथ्यायाः पले मरिचजीरके ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम् ॥ १२ ॥
पलाभिवृद्धं क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ तद्वत् सूरणकन्दकम् ॥ १३ ॥
गुलेन वटकान् कृत्वा त्रिगुणेन सदा भजेत् ।
अक्षमात्रप्रमाणांश्च तक्रं शीतं पिबेदनु ॥ १४ ॥
नाशयेयुः षडर्शांसि युधि वज्र इवासुरान् ।
कङ्कायनेन विहिता शस्त्रक्षाराग्निभीरुणा ॥ १५ ॥

(क्षाराभयम्)

जीमूताग्निकरञ्जार्कस्नुहीभल्लातबर्बरम् ।
शुण्ठ्यग्निपर्णिनादेयं दग्ध्वा भस्माढकं ततः ॥ १६ ॥
क्षिप्त्वा द्विगुणगोमूत्रे परिमृज्य पुनः स्रुते ।
पथ्याशतं पचेत् तस्मिन् मधुप्रस्थं प्रदापयेत् ॥ १७ ॥

दन्तीत्रिवृत्पञ्चकोलमयश्चाप्यवचूर्णितम् ।
अवतार्य ततः खादेत् प्रातः प्रातर्यथाबलम् ॥ १८ ॥

अर्शांसि ग्रहणीदोषं प्लीहाष्ठीलामहोदरम् ।
गुल्मशूलाग्निसदनश्वासकासगलामयान् ॥ १९ ॥

पाण्डुरोगप्रमेहादीन् नाशयेन्नात्र संशयः ।
पूर्वमिन्द्रेण चन्द्रस्य प्रोक्तं क्षाराभयाह्वयम् ॥ २० ॥

(पिप्पल्यादिघृतम्)

पिप्पलीपिप्पलीमूलधातकीडाडिमैर्घृतम् ।
दध्ना च साधितं पीतं शकृन्मूत्रविबन्धनुत् ॥ २१ ॥

(पलाशक्षारघृतम्)

न्योपगर्भं पलाशस्य त्रिगुणे भस्म वारिणि ।
साधितं पिबतः सर्पिः पतन्त्यर्शांस्यसंशयम् ॥ २२ ॥

(तदेव प्रकारान्तरेण)

पलाशक्षारतोयेन द्विगुणेन पचेद् घृतम् ।
वत्सकादिप्रतीवापमर्शोघ्नं दीपनं परम् ॥ २३ ॥

(पञ्चकोलादिघृतम्)

पञ्चकोलाभयाक्षारयवानीबिलसैन्धवैः ।
सपाठाधान्यमरिचैः सबिल्वैर्दधिमद् घृतम् ॥ २४ ॥

साधयेत् तज्जयत्याशु गुदवंक्षणवेदनाम् ।
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ॥ २५ ॥

(रक्तार्शःप्रशमनक्वाथाः)

चन्दनकिराततिक्तकधन्वयवासाः सवत्सकाः क्वथिताः ।
रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च ॥ २६ ॥

उशीरकिञ्जल्कमृणालशीतशतावरीवत्सकपाम्बुदैर्वा ।

(कुटजत्वगादिलेहः)

कुटजत्वक्तुलां द्रोणे पचेदष्टांशशेषिते ।
कल्कीकृत्य पचे[illegible]त्र त[illegible]र्क्ष्यशैलं कटुत्रयम् ॥ २७ ॥

लोध्रद्वयं मोचरसं बालडाडिमजां त्वचम् ।
बिल्वकर्कटिकामुस्तासमङ्गाधातकीफलम् ॥ २८ ॥
पलोन्मितं दशपलं कुटचस्यैव च त्वचः ।
विंशतिं सर्पिषः पूते पलानि त्रिंशतं गुलात् ॥ २९ ॥
तत् पक्वं लेहतां यातं धान्ये पक्षस्थितं लिहन् ।
सर्वार्शोग्रहणीदोषश्वासकासान् निबर्हति ॥ ३० ॥

(कुटचफलादिघृतम्)

कुटचफलत्वक्चन्दनवनतिक्तोशीरसाधितं सर्पिः ।
चाङ्गेरीत्रायन्तीस्वरसे गुदजरक्तशूलघ्नम् ॥ ३१ ॥

(द्राक्षादिचूर्णम्)

द्राक्षा हरिद्रा मञ्जिष्ठा मधुकं नीलमुत्पलम् ।
तच्चूर्णं पयसा पेयमाज्येनार्द्रीकृतं प्रगे ॥ ३२ ॥

(मूत्राम्लादिवर्तिः)

विपाच्य मूत्राम्लपटूनि दन्तीपिण्डीतकृष्णागुलधूमकुष्ठैः ।
वर्तिं कराङ्गुष्ठनिभां घृताक्तां गुदे रुजानाहहरीं निदध्यात् ॥ ३३ ॥

(कुलस्थादिक्वाथः)

कुलस्थलशुनैरण्डपथ्याग्रन्थिकनागरैः ।
कषायः सयवक्षारः शूलोदावर्तनाशनः ॥ ३४ ॥

(उदावर्ते निर्यूहद्वयम्)

श्यामापथ्योपकुल्यानां पथ्याकैडर्ययोस्तथा ।
निर्यूहः पटुमान् साक्षादुदावर्तान्तकान्तकः ॥ ३५ ॥

(त्रिवृत्कणादिः)

त्रिवृत्कणादन्तिपुनर्नवं च हरीतकीं चामलकीं च पक्त्वा ।
सरामठक्षौद्रमिदं प्रपीतं जयत्युदावर्तरिपुं नराणाम् ॥ ३६ ॥

(निकुम्भादिक्वाथः)

निकुम्भकुम्भत्रिफलागवाक्षीस्नुक्तिल्वकैः कल्पितमम्बु पीतम् ।
सहेमदुग्धं सकणं विरेकाज्जयत्युदावर्तमहोदराणि ॥ ३७ ॥

इति हृदयप्रिये योगखण्डे पञ्चमोऽध्यायः ॥

---

(कुक्ष्यामयघ्नगणः)

सानन्तातिविषाकृमिघ्नकुटजत्वक्पाठाबिल्वाधातकी-
लोध्राम्बष्ठकदाडिमाङ्कुररसाञ्जनिशापद्मासमङ्गाभयाः ।
एलामोचरसाजमोदचपलामूलारलुत्र्यूषणं
बिल्वं चेति बृहत्कुटजाभिहितः कुक्ष्यामयघ्नो गणः ॥ १ ॥

(अतिसारे त्रयः कषाययोगाः)

बिल्वाम्बुदातिविषवत्सकपञ्चकोल-
ग्रन्थ्यब्दबिल्वविषवत्समहौषधैर्वा ।
मुस्ताम्बुवत्सविषबिल्वहरेणुभिर्वा
सामे सशूलरुधिरे च हितोऽतिसारे ॥ २ ॥

(आमातिसारे पथ्यादिक्वाथः)

पथ्यादारुवचामुस्तनागरातिविषान्वितः ।
आमातिसारनाशाय क्वाथं कोष्णं प्रपाययेत् ॥ ३ ॥

(शुण्ठीसमङ्गादिक्वाथः)

शुण्ठीसमङ्गातिविषाब्दबिल्वपाठाकणावत्सकदीप्यकोत्थः ।
क्वाथो निहन्यादतिसारमाशु सामं सशूलं सकफं सरक्तम् ॥ ४ ॥

(पाचनक्वाथः)

पिप्पल्यतिविषा मुस्ता नागरं चेति पाचनम् ।
पक्वे चापि प्रशंसन्ति मुनयो गौतमादयः ॥ ५ ॥

(अतिसारे द्वौ कषाययोगौ)

समङ्गा धातकीपुष्पमम्बष्ठं लोध्रमेव च ।
आम्रास्थि पद्मलोध्रं च बिल्वमध्यं प्रियङ्गवः ॥ ६ ॥
द्वाविमावुपयोक्तव्यौ सक्षौद्रौ तण्डुलाम्बुना ।

(अतिसारे मुस्तावत्सकादिः)

मुस्तावत्सकबीजं मोचरसो बिल्वधातकीलोध्रम् ॥ ७ ॥
गुलमथितसम्प्रयुक्तं गङ्गामपि वाहिनीं रुन्ध्यात् ।

(वातातिसारे समङ्गादिक्वाथः)

समङ्गाधातकीपाठाबिल्वपेशीबलाहकैः ॥ ८ ॥

क्वाथो ज्वरातिसारघ्नः सामे पक्वे च शस्यते ।

(पित्तातिसारे धन्वयासादिः)

धन्वयासपर्पटाम्भोदपाठाबालकवत्सकैः ॥ ९ ॥
पित्तातिसारं शमयेन्निष्क्वाथोऽयं त्रिभिर्दिनैः ।

(कृष्णाग्रन्थिकादिक्वाथः)

कृष्णाग्रन्थिकचव्यचित्रकविषाविश्वाभयाधातकी-
पाठातामलकीकरञ्जरजनीभार्ङ्ग्यब्दबिल्वद्रुमैः ।
दुस्पृग्दीप्यकतिन्दुकोषणमहानिम्बैः प्रसिद्धो हरेत्
क्वाथोऽयं ग्रहणीगदाग्निसदनश्लेष्मप्रवाहादिकान् ॥ १० ॥

(शोणितातिसारे पाठादिः)

पाठाकलिङ्गातिविषाब्दबिल्वदुःस्पर्शबालौषधसम्भृताम्भः ।
प्रशस्यते शोणितजेऽतिसारे सामे निरामे ज्वरसंयुते च ॥ ११ ॥

(सौवर्चलादिचूर्णम्)

सौवर्चलवचाव्योषहिङ्ग्वतिविषाभयाः ॥ १२ ॥
पिबेच्छ्लेष्मातिसारार्तश्चूर्णिताः कोष्णवारिणा ।

(पाठामोचरसादिः)

पाठामोचरसाम्भोदधातकीबिल्वनागरम् ॥ १३ ॥
सुकृच्छ्रमप्यतीसारं गुलतक्रेण नाशयेत् ।

(यवान्यादिचूर्णः अथवा कपित्थाष्टकः)

यवानीपिप्पलीमूलचतुर्जातकनागरैः ॥ १४ ॥
मरिचाग्नि*बलाजाजिधान्यसौवर्चलैः समैः ।
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ॥ १५ ॥
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ।
चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान् ॥ १६ ॥
कासश्वासाग्निसादार्शःपीनसारोचकाञ् जयेत् ।

(दाडिमाष्टकः)

कर्षोन्मिता तुगाक्षीरी चतुर्जातं द्विकार्षिकम् ॥ १७ ॥

---

* 'जलजाजि' इति अष्टाङ्गहृदये ।

यवानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकम् ।
पलानि डाडिमादष्टौ सिताया श्चैकतः कृतः ॥ १८ ॥
गुणैः कपित्थाष्टकवच्चूर्णोऽयं डाडिमाष्टकः ।

(पाठाकरञ्जादिघृतम्)

पाठाकरञ्जयुग्माग्निशरपुङ्खौषधाम्बुदात् ॥ १९ ॥
रसे सार्द्रकचाङ्गेरीरसे दध्नि चतुर्गुणे ।
आजमाज्यमथो गव्यं कल्कैरेभिर्विपाचयेत् ॥ २० ॥
हिङ्गुप्रतिविषाव्योषयवक्षारकणाङ्घ्रिभिः ।
चविकाजीरकाजाजीवालबिल्वसुरद्रुमैः ॥ २१ ॥
धातकीलोध्रमधुकभार्ङ्गीकट्वङ्गवत्सकैः ।
निशाडाडिमवत्सैश्च तत्सिद्धं ग्रहणीगदम् ॥ २२ ॥
चतुर्विधं प्रशमयेदतिसारं प्रवाहिकाम् ।
पिच्छास्रावं गुदभ्रंशं प्रतिश्यायोदराक्रिमीन् ॥ २३ ॥
गुल्मशूलारुचिहरं परमग्निबलप्रदम् ।

(पिच्छावस्तिः)

परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः ॥ २४ ॥
कृष्णमृत्तिकयालिप्य स्वेदयेद् गोमयाग्निना ।
मृच्छोषे तानि संक्षुद्य तत्पिण्डं मुष्टिसम्मितम् ॥ २५ ॥
मर्दयेत् पयसः प्रस्थे पूतेनास्थापयेत् ततः ।
*तेन यष्ट्याह्वकल्काज्यक्षौद्रतैलवतानु च ॥ २६ ॥
इत्यादि स्वल्पमात्रं यत् पिच्छावस्तिनिरूहणम् ।

(अष्टवर्गः)

मुस्ता कुष्ठं हरिद्रे द्वे पिप्पली देवदारु च ॥ २७ ॥
शुण्ठी च पिप्पलीमूलं मुस्ता चेत्यष्टवर्गिकः ।

(अरलवादिः)

अरलवतिविषा शुण्ठी मुस्ता बिल्वं सडाडिमम् ॥ २८ ॥
सर्वज्वरहरो योगः सर्वातीसारनाशनः ।

(शान्तोदरामयलक्षणम्)

यस्योच्चाराद् विना मूत्रं पवनो वा प्रवर्तते ॥ २९ ॥

---

* 'ततयष्ट्याह्व' इति अष्टाङ्गहृदये ।

दीप्ताग्नेर्लघुकोष्ठस्य शान्तस्तस्योदरामयः ।

(पाठाकरञ्जादिक्वाथः)

पाठाकरञ्जद्वयपञ्चकोलकैडर्यपथ्याशरपुङ्खबिल्वैः ।
क्वाथो निहन्यात् कणचूर्णयुक्तो गुल्मातिसारग्रहणीगुदोत्थान् ॥ ३० ॥

(नागरादिक्वाथः)

नागरं पिप्पलीमूलं चित्रकं देवदारु च ॥ ३१ ॥
बिल्वपेशी कणा चैव सिद्धमेभिर्जलं जयेत् ।
हिङ्गुसैन्धवसंयुक्तं ग्रहणीं दीपनं परम् ॥ ३२ ॥

(कैडर्यादिक्वाथः)

कैडर्यानलपथ्याव्योषरसोनाजमोजसिद्धाम्भः ।
पटुहिङ्गुव्यामिश्रं शीलयतः का कथाग्निमान्द्यस्य ॥ ३३ ॥

(अभयादिकषायः)

अभयाचिरिबिल्वबिल्वशुण्ठीशरपुङ्खाग्निपुनर्नवोषणानाम् ।
क्षपयेद् गुदकीलगुल्मशूलग्रहणीदोषमशेषतः कषायः ॥ ३४ ॥

(पिप्पल्यादिगुलिका, चूर्णं वा)

पिप्पली नागरं पाठा शारिवा बृहतीद्वयम् ।
पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम् ॥ ३५ ॥
दीप्यकं हिङ्गु गुलिका बीजपूररसे कृता ।
चूर्णं कृतं दधिसुरातन्मण्डोष्णाम्बुकाञ्जिकैः ॥ ३६ ॥
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ।

(तालीसपत्रादिवटकम्)

तालीसपत्रमरिचचविकानां पलं पलम् ॥ ३७ ॥
कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठ्याः पलत्रयम् ।
चतुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम् ॥ ३८ ॥
गुलेन वटकान् कृत्वा त्रिगुणेन सदा भजेत् ।
मद्ययूषरसारिष्टमस्तुपेयापयोनुपः ॥ ३९ ॥
वातश्लेष्मात्मनां छर्दिग्रहणीपार्श्वहृद्रुजाम् ।
प्रसेकपीनसश्वासकासानां च निवृत्तये ॥ ४० ॥

अभयां नागरस्थाने दद्यादत्रैव विड्ग्रहे ।
छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विताः ॥ ४१ ॥
पक्केन वटकाः कार्या गुलेन सितयाथवा ।
परं हि वह्निसम्पर्काल्लघिमानं भजन्ति ते ॥ ४२ ॥

(पञ्चमूलाभयादिघृतम्)

पञ्चमूलाभयाव्योषपिप्पलीमूलसैन्धवैः ।
रास्नाक्षारद्वयाजाजीविलङ्गशठिभिर्घृतम् ॥ ४३ ॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च ।
शुष्कमूलककोलाम्लचुक्रिकादाडिमत्वचः ॥ ४४ ॥
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ।
काञ्चिकेन च तत् पक्वमग्निदीप्तिकरं परम् ॥ ४५ ॥
शूलगुल्मोदरश्वासकासानिलहरं परम् ।

(पटोलनिम्बादिचूर्णम्)

पटोलनिम्बत्रायन्तीतिक्तातिक्तकपर्पटम् ॥ ४६ ॥
कुटजत्वक्फलं मूर्वा मधुशिग्रुफलं वचा ।
दार्वीत्वक्पद्मकोशीरयवानीमुस्तचन्दनम् ॥ ४७ ॥
सौराष्ट्र्यतिविषा व्योषत्वगेलापत्रदारु च ।
चूर्णितं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥ ४८ ॥
हृत्पाण्डुग्रहणीदोषगुल्मशूलारुचिज्वरान् ।
कामिलां सन्निपातं च मुखरोगांश्च नाशयेत् ॥ ४९ ॥

(भूनिम्बादिचूर्णम्)

भूनिम्बकटुकामुस्तत्र्यूषणेन्द्रयवान् समान् ।
द्वौ चित्रकाद् वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥ ५० ॥
गुलशीताम्बुपीतं तद् ग्रहणीदोषगुल्मजित् ।
कामिलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ॥ ५१ ॥

(चन्दनादिसर्पिः)

चन्दनं पद्मकोशीरं पाठामूर्वाकुटन्नटम् ।
षड्ग्रन्थाशारिबास्फोतसप्तपर्णाटरूषकान् ॥ ५२ ॥

(एलोपकुल्यादिक्वाथः)

एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः ।
क्वाथं पिबेच्छर्करयावगाढं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ ३ ॥

(एलाश्मभेदकादिचूर्णम्)

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजले लुलितानि पीत्वा ।
यद्वा गुलेन सहितान्यवलिह्य मानो (?)
आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ ४ ॥

(वस्त्यामयान्तकघृतम्)

दार्वीमधुकमत्स्याक्षीपद्मपाषाणभेदकम् ।
बृहत्यंशुमतीद्वन्द्वशारिबेक्षुकशेरुकम् ॥ ५ ॥
कपोतवङ्केक्षुरकं वसिरं शिग्रु वालकम् ।
वाराही वरणं द्राक्षा भद्रा यष्टी पलङ्कषा ॥ ६ ॥
पृथक् त्रिपलिकं क्षुण्णं सर्वतुल्यं च गोक्षुरम् ।
द्रोणेऽपां साधयेत् सर्वं पादशिष्टे परिस्रुते ॥ ७ ॥
प्रक्षिप्य सर्पिषः प्रस्थं दत्त्वा क्षीरं वरीरसम् ।
धात्रीजम्बीरजं चापि नालिकेरोदकं तथा ॥ ८ ॥
कूश्माण्डोर्वारुकजलं स्नेहद्विगुणितं पृथक् ।
द्रव्यैः सुपिष्टैः संयुक्तमेतैर्मृद्वग्निना पचेत् ॥ ९ ॥
परूषकोत्पलतुटीमधूकहिमदारुभिः ।
त्रिफलापिप्पलीकौन्तीशृङ्गिबेरैः ससैन्धवैः ॥ १० ॥
हस्तिपिप्पल्यपामार्गमञ्जिष्ठापद्मकेसरैः ।
मुस्ताकुस्तुम्बरीलोध्रसाश्वगन्धापुनर्नवैः ॥ ११ ॥
स्वयंगुप्तेक्षुरफलैर्वृद्धिपत्रकशृङ्गिभिः ।
शिलाजत्वर्धभागैस्तैः सिद्धं तत् सेवितं घृतम् ॥ १२ ॥
मूत्रकृच्छ्राणि सर्वाणि शर्करामश्मरीमपि ।
पानवस्त्यादिभिर्युक्तं नाशयेन्नात्र संशयः ॥ १३ ॥

वातपित्तसमुत्पन्नान् सर्वान् वस्तिगतान् गदान् ।
प्रमेहेण सह क्षिप्रमपावर्तयते ध्रुवम् ॥ १४ ॥
गुल्माग्निसादग्रहणीदुर्नामजठरामयम् ।
क्षयं क्षयकृतान् व्याधीन् हृत्पार्श्वोरस्शिरोग्रहम् ॥ १५ ॥
वस्त्यामयान्तकमिदं देवदेवेन भाषितम् ।

(त्रैकण्टकादिघृतम्)

क्वाथे त्रैकण्टकैलागिरिजतुसशिलाभेदयष्टीवरीणां
दर्भद्राक्षाम्बुशौण्डीवसुकवासिरकाशेक्षुमत्स्याक्षिकाणाम् ।
कल्कैः सिद्धं सदुग्धं हरति घृतमिदं सेवितं मूत्रदोषान्
मेहान् कृच्छ्राणि सर्वाण्यनिलमपि तथा शर्करामश्मरीं च ॥

(निर्गुण्ड्यादिनिर्यूहः)

निर्गुण्ड्येरण्डकोरण्डगोक्षुरद्विपुनर्नवैः ॥ १७ ॥
सिंह्यग्निशिग्रुवरणकृष्णापाषाणभेदकैः ।
निर्यूहः पातयेत् पीतः शर्करामश्मरीमपि ॥ १८ ॥
शूलार्तिविद्रधिप्लीहजठरामयनाशनः ।

(कतकादितोयम्)

कतकखादिरधात्रीवैरिदार्वीसमङ्गा-
विदुलरजनिपाठाचूतबीजाभयाब्दैः ।
प्रसवरससनाथैस्तोयमेभिः प्रसिद्धं
हरति सकलमेहान् सप्तरात्रप्रयोगात् ॥ १९ ॥

(आकुल्यादिक्वाथः)

आकुल्यब्दफलत्रयद्विरजनीजम्ब्वर्जुनक्षीरिज-
त्वक्पाठाकतकाग्निमन्थखदिराम्बष्ठासनेन्द्रद्रुमैः ।
क्वाथो वारिधिकोठकिंशुकयुतैरेभिः कृतः शीतलः
सक्षौद्रोऽद्रिजतूत्थचूर्णसहितः सर्वप्रमेहापहः ॥ २० ॥

(लोध्रासवः)

लोध्रमूर्वाशठीवेल्लभार्ङ्गीनतनखप्लवान् ॥ २१ ॥
कलिङ्गकुष्ठक्रमुकप्रियङ्ग्वातिविषाग्निकान् ।
द्वे विशाले चतुर्जातं भूनिम्बं कटुरोहिणीम् ॥ २२ ॥

यवानीं पौष्करं पाठां ग्रन्थिं चव्यं फलत्रयम् ।
कर्षांशमम्बुकलशे पादशेषे स्नुते हिमे ॥ २३ ॥
द्वौ प्रस्थौ माक्षिकात् क्षिप्त्वा रक्षेत् पक्षमुपेक्षया ।
लोध्रासवोऽयं मेहार्शःश्वित्रकुष्ठारुचिक्रिमीन् ॥ २४ ॥
पाण्डुत्वं ग्रहणीदोषं स्थूलतां च नियच्छति ।

(धान्वन्तरघृतम्)

दशमूलशटीदन्तीसुराह्वद्विपुनर्नवम् ॥ २५ ॥
मूलं स्नुगर्कयोः पथ्याभूकदम्बमरुष्करम् ।
करञ्जवरणान्मूलं पिप्पल्याः पौष्करं च यत् ॥ २६ ॥
पृथग् दशपलं प्रस्थान् यवकोलकुलत्थतः ।
त्रींश्चाष्टगुणिते तोये विपचेत् पादवर्तिना ॥ २७ ॥
तेन द्विपिप्पलीचव्यवचानिचुलरोहिषैः ।
त्रिवृद्विलङ्गकाम्पिल्यभार्ङ्गीविश्वैश्च साधयेत् ॥ २८ ॥
प्रस्थं घृताज्जयेत् सर्वांस्तन्मेहापिटकापचीः ।
पाण्डुविद्रधिगुल्मार्शश्शोषशोफगरोदरम् ॥ २९ ॥
श्वासं कासं वमिं वृद्धिं प्लीहानं वातशोणितम् ।
कुष्ठोन्मादमपस्मारं धान्वन्तरमिदं घृतम् ॥ ३० ॥

(निम्बवल्कादिक्वाथः)

निम्बस्य वल्कममृता रजनी च शुण्ठी
वाशाफलत्रयपटोलनिदिग्धिकास्तैः ।
क्वाथं समाक्षिकपुरं पिबतां प्रभाते
नश्यन्ति देहपिटकाः सकलाः समूलम् ॥ ३१ ॥

(जीवन्त्यादिनिष्क्वाथः)

जीवन्तीहिरिबेरिकात्रिफलिकावाशामृताशारिवा-
शुण्ठीयष्टिपयोदचन्दनपटोलोशीरनिम्बैः शृतः ।
निष्काथोऽष्टमशेषितो मधुगुलप्रक्षेपणात् संस्कृतः
पीतश्चेज्ज्वरितस्य तस्य पिटकोत्पत्तेः प्रसङ्गः कुतः ॥ ३२ ॥

(मृणालादिलेपः)

मृणालमृदुकुञ्चिकाकुटजवल्कनिम्बामृता-
वरारजनिसर्षपाजलजसेव्यपूतीतिलैः ।
ययोष्टुघनचन्दनभ्रमरगेहदूर्वेक्षुभि-
र्वटाङ्कुरकशारिबालवणलक्ष्मणापर्पटैः ॥ ३३ ॥

एरण्डबीजकुहलीसंयुक्तैः क्षीरपोषितैः ।
तैलाज्यमधुमाल्लेपः सर्वशोफनिबर्हणः ॥ ३४ ॥

(शतधौतघृतम्)

क्षीरिद्रुवल्कलक्काथे शतशो मथितं घृतम् ।
शतधौतमिति प्राहुः पिटकामेहदाहनुत् ॥ ३५ ॥

इति हृदयप्रिये योगखण्डे सप्तमोऽध्यायः ॥

---

अथाष्टमोऽध्यायः ।

(त्रायमाणादिघृतम्)

कुडवं त्रायमाणायाः साध्यमष्टगुणेऽम्भसि ।
कुडवं तद्रसाद् धात्रीस्वरसात् क्षीरतो घृतात् ॥ १ ॥
कर्षांशं कल्कितं तिक्तात्रायन्तीधन्वयाषकम् ।
मुस्तातामलकीवीराजीवन्तीचन्दनोत्पलम् ॥ २ ॥
कल्कयित्वा पचेत् सर्पिर्विरेकाद् विद्रधिं जयेत् ।

(फलत्रयादिकाथः)

फलत्रयद्वीपिसुराह्वशिग्रुप्रसिद्धमम्भः सघृतं प्रपीतम् ।
बलाद् बलं हन्ति विबन्धगुल्मविद्रध्युदावर्तमहोदरागाम् ॥ ३ ॥

(वरणादिकषायः)

कासीससैन्धवशिलाजतुहिङ्गुतुत्थचूर्णान्वितो वरणवर्गभृतः कषायः ।
अभ्यन्तरोत्थितमपक्वमतिप्रवृद्धं नृणामयं जयति विद्रधिमुग्रतोदम् ॥

(लशुनादितैलम्)

लशुनस्य तुलां दद्यात् पलांशं दशमूलतः ॥ ५ ॥

कृष्णा कुलस्थः खादिरं शिग्रुश्च चिरिबिल्वकः ।
पृथग् दशपलं तोये विपचेत् पादशेषिते ॥ ६ ॥

देवदारु वचा कुष्ठं तगरं हिङ्गुसर्षपम् ।
नागरं पिप्पलीमूलं पञ्चैव लवणानि च ॥ ७ ॥

अत्र कल्कानिमान् दद्यात् तैलमेरण्डमाढकम् ।
गोमूत्रमाढकं चैव शनैर्मृद्वग्निना पचेत् ॥ ८ ॥

स्नुहिक्षीरं समावाप्य क्षीरं चापि यथाविधि ।
लशुनाद्यमिदं तैलमान्त्रवृद्धिविनाशनम् ॥ ९ ॥

जाठरं सर्वरोगं च प्लीहाष्ठीलाभगन्दरान् ।
उदरं सर्वगुल्मं च पानाभ्यञ्जनलेपनात् ॥ १० ॥

(पुनर्नवादिघृतम्)

पुनर्नवतुला शुण्ठीलशुनैरण्डगोक्षुरम् ।
कुलस्थपूतीकवरीचित्रकं चैव तत्समम् ॥ ११ ॥

पचेद् द्रोणद्वयजले तत्क्वाथेऽर्धाढकं घृतात् ।
सक्षीरं विपचेत् पिष्टैर्हिङ्गुधान्यकदीप्यकैः ॥ १२ ॥

द्विक्षारपञ्चकोलेभपिप्पलीतीक्ष्णसैन्धवैः ।
निहन्ति गुल्मान् हृद्बस्तिपार्श्वशूलं यकृत्प्लिहे ॥ १३ ॥

वाताष्ठीलातुनीशोफजठराध्मानपायुजान् ।

(हपुषादिघृतम्)

हपुषोषणपृथ्वीकापञ्चकोलकदीप्यकैः ॥ १४ ॥

साजाजीसैन्धवैर्दध्ना दुग्धेन च रसेन च ।
डाडिमामलकाङ्कोलात् पचेत् सर्पिर्निहन्ति तत् ॥ १५ ॥

शूलगुल्मोदरानाहपार्श्वहृत्कोष्ठवेदनाः ।
योन्यर्शोग्रहणीदोषकासश्वासारुचिज्वरान् ॥ १६ ॥

(लशुनघृतम्)

तुलां लशुनकन्दानां पृथग् दशपलांशिकम् ।
पञ्चमूलं महच्चाम्बुभारार्धे तद् विपाचयेत् ॥ १७ ॥

पादशेषं तदर्धेन डाडिमस्वरसं सुराम् ।
धान्याम्लं दधि चादाय पिष्ट्वार्धांशपलांशिकान् ॥ १८ ॥
त्र्यूषणत्रिफलाहिङ्गुयवानीचव्यचित्रकान् ।
साम्लवेतससैन्धूत्थदेवदारून् पचेद् घृतात् ॥ १९ ॥
तैः प्रस्थं तद् परं सर्ववातगुल्मविकारजित् ।

(हिङ्गुवचादिचूर्णम्)

हिङ्गुवचाविजयापशुगन्धाडाडिमदीप्यकधान्यकपाठाः ।
पुष्करमूलशठीहपुषाक्षिक्षारयुगाद्विपटुत्रिकटूनि ॥ २० ॥
साजाजिचव्यं सहतिन्त्रिणीकं सवेतसाम्लं विनिहन्ति चूर्णम् ।
हृत्पार्श्वकुक्षिस्तनकोष्ठपृष्ठशूलानि वाय्वामकफोद्भवानि ॥ २१ ॥

कृच्छ्रान् गुल्मान् वातविण्मूत्रसङ्गं
कण्ठे बन्धं हृद्ग्रहं पाण्डुरोगम् ।
अन्नाश्रद्धाप्लीहदुर्नामगुल्मान्
वर्ध्माध्मानश्वासकासाग्निसादान् ॥ २२ ॥

(हिङ्ग्वुग्रादिचूर्णम्)

हिङ्ग्वुग्राविडशुण्ठ्यजाजिविजयावाट्याभिधानामयै-
श्चूर्णं कुम्भनिकुम्भमूलसहितैर्भागोत्तरं वर्धितैः ।
पीतं कोष्णजलेन कोष्ठजरुजागुल्मोदरादीनयं
शार्दूलः प्रसभं प्रमथ्य हरति व्याधीन् मृगौघानिव ॥ २३ ॥

(हिङ्गुत्रिगुणम्)

हिङ्गुत्रिगुणं सैन्धवमस्मात् त्रिगुणं तु तैलमैरण्डम् ।
तत्त्रिगुणं लशुनरसं गुल्मोदरवर्ध्मशूलघ्नम् ॥ २४ ॥

(वैश्वानरचूर्णम्)

लवणयवानीदीप्यककणनागरमुत्तरोत्तरं वृद्धम् ।
सर्वसमांशहरीतकिचूर्णं वैश्वानरः साक्षात् ॥ २५ ॥

(दशमूलरसोनादिक्वाथः)

दशमूलरसोनविश्वदारुक्वथितं वारि निवारयेत् प्रपीतम् ।
पवनोल्बणगुल्मकासशोषस्वरसादोदरकोष्ठपृष्ठशूलान् ॥ २६ ॥

(सप्तसारकषायः)

वर्षाभूबिल्वखल्वोरुबुसहचरशुण्ठ्यग्निमन्थैः कषायः
पातव्यः सप्तसारो गुळकणपटुहिङ्ग्वाज्यमिश्रो यथार्हम्।
विड्बन्धं वह्निमान्द्यं रुजमतिमहतीं योनिहृत्पृष्ठकोष्ठ-
श्रोणीदेशेषु सद्यः शमयति जठराष्ठीलगुल्मप्लिहांश्च॥ २७॥

(दशमूलघृतम्)

सव्योषक्षारलवणं साहिङ्गुबिळडाडिमम्॥ २८॥
कफगुल्मं जयत्याशु दशमूलशृतं घृतम्।

(भल्लातकघृतम्)

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्॥ २९॥
अल्पं तोयाढके साध्यं पादशेषेण तेन च।
तुल्यं घृतं तुल्यपयो विपचेदक्षसम्मितैः॥ ३०॥
विळङ्गहिङ्गुसिन्धूत्थयावशूकशटीविडैः।
सद्वीपिरास्नायष्ट्याह्वषड्ग्रन्थाकणनागरैः॥ ३१॥
एतद् भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत्॥ ३२॥

(विश्वाभयादिक्वाथः)

विश्वाभयाचित्रकपिप्पलीभिर्विपक्वमम्भः पटुचूर्णमिश्रम्।
आनाहविड्बोधमपक्तृशक्तिं व्यपोहति द्राक् कफजं च गुल्मम्॥३३॥

(शुण्ठ्यादिक्वाथः)

शुण्ठीग्रन्थिकचव्याग्निकृष्णाक्वाथः ससैन्धवः।
कदुष्णः श्लेष्मगुल्मघ्नो हिङ्गुतैलसमायुतः॥ ३४॥

(त्रिकट्वादितोयम्)

त्रिकट्वजाजीदहनाभयानां तथागुणं स्यात् पटुमच्च तोयम्।

(क्षारागदः)

देवदारुत्रिवृद्दन्तीकटुकापञ्चकोलकम्।
स्वर्चिकायावशूकाख्यौ श्रेष्ठापाठोपकुञ्चिकाः॥ ३५॥

कुष्ठं सर्पसुगन्धा च त्र्यक्षांशं पटुपञ्चकम् ।
पालिकं चूर्णितं तैलत्रसादधिघृताप्लुतम् ॥ ३६ ॥

घटस्यान्तः पचेत् पक्वमग्निवर्णे घटे च तम् ।
क्षारं गृहीत्वा क्षीराज्यमद्यतक्रादिभिः पिबेत् ॥ ३७ ॥

गुल्मोदावर्तवर्ध्माशोंजठरग्रहणीकृमीन् ।
अपस्मारगरोन्मादयोनिशुक्रामयाश्मरीः ॥ ३८ ॥

क्षारागदोऽयं शमयेद् विषं चाखुभुजङ्गजम् ।
श्लेष्माणं मधुरं स्निग्धं घृतक्षीररसाशिनः ॥ ३९ ॥

छित्त्वा भित्त्वाशयात् क्षारः क्षारत्वात् क्षरयत्यधः ।
मन्दाग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमाचितम् ॥ ४० ॥

(अस्रगुल्मे त्रयः कषायाः)

कणाशताह्वाद्विकरञ्जदारुभार्ङ्गीकुलस्थैः सतिलैर्विपक्वम् ।
तथा रसोनेन च सिद्धमम्भः सहिङ्गुकल्कं हितमस्रगुल्मे ॥४१॥

लशुनं किंशुकं खल्वं श्रपयित्वा सहिङ्गुकम् ।
प्रातः कोष्णं निषेवेत रक्तगुल्महरं परम् ॥ ४२ ॥

(कुलस्थपूतीकादिचित्रतैलम्)

कुलस्थपूतीकरसोनमुञ्जाबलाहरिन्मञ्जरिसिन्दुवारैः ।
सुराह्वसैरीयकशिग्रुबर्बरैर्दशाङ्घ्रियक्षाक्षिपुनर्नवैश्च ॥ ४३ ॥

सिद्धे जले हिङ्गुविलङ्गमूर्वाद्विक्षारसिन्धूद्भवपञ्चकोलैः ।
शृतं निहन्यादथ चित्रतैलं समीरगुल्मं कफसम्भवं च ॥ ४४ ॥
तथाग्निसादं जठरं च शोफं यकृत्प्लिहाष्ठीलतुनीश्च शूलम् ॥४५॥

(सुधाकाण्डभस्म)

सुधाकाण्डं सलवणं दग्ध्वा तद् भस्म पाययेत् ।
सुखाम्बुना सर्वगुल्मग्रहण्यर्शोरुजापहम् ॥ ४६ ॥

इति हृदयप्रिये योगखण्डे अष्टमोऽध्यायः ॥

---

## अथ नवमोऽध्यायः ।

(पञ्चगव्यघृतम्)

गोमूत्रं निजवाञ्छया परिमितं मूत्रार्धकं गोमयं
क्षीरं चाष्टगुणं दधि त्रिगुणितं गोमूत्रमात्रं घृतम् ।
मुस्तैलाग्निविलङ्ग्यष्टिरजनीमञ्जिष्ठपाठावचा-
शौण्डीरोहिणिकाफलत्रयविषामृद्वीकदार्वीयुतम् ॥ १ ॥

पञ्चगव्यघृतं प्रोक्तं भूतापस्मारपाप्मजित् ।
सन्तानायुष्यधीकान्तिस्मृतिदं ज्वरपाण्डुजित् ॥ २ ॥

(महातिक्तकघृतम्)

सप्तच्छदः पर्पटकः शम्याकः कटुका वचा ।
त्रिफला पद्मकं पाठा रजन्यौ शारिबे कणे ॥ ३ ॥

निम्बचन्दनयष्ट्याह्वविशालेन्द्रयवामृताः ।
किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ४ ॥

पटोलातिविषा मुस्ता त्रायन्ती धन्वयाषकम् ।
तैर्जलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसम् ॥ ५ ॥

सिद्धं तिक्तान्महातिक्तं गुणैरप्यधिकं मतम् ।

(पुनर्नवादिक्वाथः)

पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः ।
सर्वाङ्गशोफज्वरकासशोषश्वासान्वितं पाण्डुगदं निहन्ति ॥ ६ ॥

(वाशादिक्वाथः)

वाशागुडूचीत्रिफलाकट्वीभूनिम्बनिम्बजः ॥ ७ ॥
क्वाथः क्षौद्रयुतो हन्ति पाण्डुपित्तास्रकामिलाः ।

(वराव्योषादिक्वाथः)

वराव्योषविलङ्गाग्निमुस्तायःपत्रसाधितम् ॥ ८ ॥
क्षौद्राविलजलं पाण्डुकामिलामेहनुत् परम् ।

(व्योषादिचूर्णम्)

व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः ॥ ९ ॥

सेवितं तक्रमध्वाज्यकोष्णतोयोपयोजितम् ।
कामिलापाण्डुहृद्रोगगुल्मार्शोमेहनाशनम् ॥ १० ॥

(मण्डूरवटकाः)

ताप्यं दार्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च ।
व्योषादिनवकं चैव चूर्णयेद् द्विगुणं ततः ॥ ११ ॥

मण्डूरं चाञ्जननिभं सर्वतोऽष्टगुणेऽथ तत् ।
पृथग्विपक्वे गोमूत्रे वटकीकरणक्षमे ॥ १२ ॥

प्रक्षिप्य वटकान् कुर्यात् तान् खादेत् तक्रभोजनः ।
एते मण्डूरवटकाः प्राणदाः पाण्डुरोगिणाम् ॥ १३ ॥

कुष्ठान्यजरकं शोफमूरुस्तम्भमरोचकम् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥ १४ ॥

(निम्बत्वगादिक्वाथः)

निम्बत्वक्त्रिफलापटोलरजनीवाशामृताशारिबा
श्यामातामलकीपलङ्कषबलानीलीस्थिरायष्टिभिः ।
क्वाथो माक्षिकपिप्पलीगिरिजतुप्रक्षेपणात् संस्कृतः
पीतः कुम्भहलीमकं प्रशमयेद् भिन्दन् दिनैः पञ्चषैः ॥ १५ ॥

(व्योषबिल्वादिघृतम्)

व्योषबिल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।
मुस्ताग्न्ययोरजःपाठाविलङ्गं देवदारु च ॥ १६ ॥

वृश्चिकाली च भार्ङ्गी च सक्षारैस्तैः भृतं घृतम् ।
सर्वान् प्रशमयत्याशु विकारान् मृत्तिकाकृतान् ॥ १७ ॥

(भृङ्गामलकतैलम्)

भृङ्गामलरसप्रस्थे तैलप्रस्थं पलं च मधुकस्य ।
क्षीराढके विपक्वं श्रुतिनेत्ररुजासु कामिलायां च ॥ १८ ॥

(भृङ्गदूर्वादितैलम्)

भृङ्गदूर्वामृताशक्रलतागोजिह्विकारसे ।
कदलीकन्दवत् तैलं सक्षीरं कामलापहम् ॥ १९ ॥

(अमृतादितैलम्)

अमृताषट्पदरसे चन्दनामयकल्कवत् ।
तैलं समक्षीरयुतं पित्तरक्तविकारजित् ॥ २० ॥

(शुण्ठीपुनर्नवादिक्वाथः)

शुण्ठीपुनर्नवैरण्डपञ्चमूलशृतं जलम् ।
वातिके श्वयथौ शस्तं सिद्धमेरण्डतैलवत् ॥ २१ ॥

(पथ्यापुनर्नवादिक्वाथः)

पथ्यापुनर्नवनिशाकणमूलवह्नि-
चित्राब्दजीरकसुरद्रुममागधीनाम् ।
क्वाथं पिबेच्छ्वयथुदण्डधरात्तजीवो
ह्युत्तिष्ठते शिवसमाश्रितबालतुल्यः ॥ २२ ॥

(कृष्णादिचूर्णम्)

कृष्णाग्निविश्वघनजीरकदेवदारु-
पथ्यापुनर्नवनिशामगधाजटानाम् ।
चूर्णं कवोष्णसलिलैरवलोड्य पीतं
नातः परं श्वयथुरोगहरं नराणाम् ॥ २३ ॥

(आर्द्रकघृतम्)

घृतमार्द्रकनागरस्य कल्कस्वरसाभ्यां पयसा च साधयित्वा ।
श्वयथुक्षवथूदराग्निसादैरभिभूतोऽपि पिबेद् भवत्यरोगः ॥ २४ ॥

(यवानकादिघृतम्)

यवानकयवक्षारयवानीपञ्चकोलकम् ।
मरिचं डाडिमं पाठां धानकामम्लवेतसम् ॥ २५ ॥

बालबिल्वं च कर्षांशं साधयेत् सलिलाढके ।
तेन पक्वो घृतप्रस्थः शोफार्शोगुल्ममेहहा ॥ २६ ॥

(दशमूलतैलम्)

दशमूलकृते क्वाथे दधिमस्तुसमन्वितम् ।
पथ्यादारुप्रतीवापं तैलं शोफे हितं परम् ॥ २७ ॥

(शोफहरगणः)

शैलेयकुष्ठस्थौणेयरेणुकागुरुपद्मकम् ।
श्रीवेष्टकनखस्पृक्कादेवदारुप्रियङ्गुकम् ॥ २८ ॥

मांसीमागधिकावन्यधान्यध्यामकवालकम् ।
चतुर्जातकतालीससमुस्ताः शोफहरो गणः ॥ २९ ॥

(अमृताद्वितयादिः)

अमृताद्वितयं शिवाटिका सुरकाष्ठं सपुरं सगोजलम् ।
श्वयथूदरकुष्ठपाण्डुताक्रिमिमेहोर्ध्वकफानिलापहम् ॥ ३० ॥

(अजाज्यादिः)

अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्यः सुखतोयपीताः ।
शोफं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधैश्च ॥ ३१ ॥

(नाराचकचूर्णः)

यवानी हपुषा धान्या शतपुष्पोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शठी वचा ॥ ३२ ॥

चित्रको जीरकं व्योषं स्वर्णक्षीरी फलत्रयम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ ३३ ॥

विळङ्गं च समांशानि दन्त्या भागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे सप्तला च चतुर्गुणा ॥ ३४ ॥

एष नाराचको नाम चूर्णो रोगगणापहः ।
नैनं प्राप्यातिवर्तन्ते रोगा विष्णुमिवासुराः ॥ ३५ ॥

तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥ ३६ ॥

दधिमण्डेन विट्सङ्गे डाडिमाम्भोभिरर्शसि ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद् विरेचनम् ॥ ३७ ॥

(हरीतकीघृतयोगः)

हरीतकीसूक्ष्मरजः प्रस्थयुग्मं* घृताढकम् ।
अग्नौ विलाप्य मथितं खजेन यवपल्लके ॥ ३८ ॥

---

* 'युक्तामी'ति मुद्रिताष्टाङ्गहृदये दृश्यते ।

निधापयेत् ततो मासादुद्धृतं गालितं पचेत् ।
हरीतकीनां क्काथेन दध्ना चाम्लेन संयुतम् ॥ ३९ ॥
उदरं गरमष्ठीलामानाहं गुल्मविद्रधी(म् ?) ।
हन्त्येतत् कुष्ठमुन्मादमपस्मारं च पानतः ॥ ४० ॥

(त्रिवृद्व्यादिः)

त्रिवृद्व्चासैन्धवहिङ्गुशौण्डीरैरण्डतैलेन पिबेद् दिनादौ ।
अष्ठीलवृद्धिप्लिहवातशूलमहोदरश्वासनिबर्हणाय ॥ ४१ ॥

(देवदार्वादिलेपः)

देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वकर्णैः समूत्रैश्च प्रदिह्यादुदरं बहिः ॥ ४२ ॥

(वृश्चिकाळ्यादिसेकयोगः)

वृश्चिकाळीवचाशुण्ठीपञ्चमूलपुनर्नवात् ।
वर्षाभूधान्यकुष्ठाच्च क्काथैर्मूत्रैश्च सेचयेत् ॥ ४३ ॥

(पिप्पलीनागरादिचूर्णम्)

पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
विडार्धांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ॥ ४४ ॥

(रौहीतकासवम्)

रौहीतकलताः क्लृप्ताः खण्डशः साभया जले ।
मूत्रे वा सुनुयात् तच्च सप्तरात्रं स्थितं पिबेत् ॥ ४५ ॥
कामिलाप्लीहगुल्मार्शःक्रिमिमेहोदरापहम् ।

(रौहीतकघृतम्)

रौहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम् ॥ ४६ ॥
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ।
पालिकैः पञ्चकोलैस्तु तैः समस्तैश्च तुल्यया ॥ ४७ ॥
*रौहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ।
प्लीहातिवृद्धिं शमयत्येतदाशु प्रयोजितम् ॥ ४८ ॥

---

* 'हरीतकत्वचा' इति मुद्रिताष्टाङ्गहृदये ।

(कदल्यादिक्षारतैलम्)

कदल्यास्तिलनालानां क्षारेण क्षुरकस्य च ।
तैलं पक्वं जयेत् पानात् प्लीहानं कफवातजम् ॥ ४९ ॥

(हिङ्गूपकुल्यादिक्षारः)

हिङ्गूपकुल्ये त्रिफलां देवदारु निशाद्वयम् ।
भल्लातकं शिग्रुमूलं कटुकां तिल्वकं वचाम् ॥ ५० ॥
शुण्ठीं मार्द्वीं घनं कुष्ठं सरलं पटुपञ्चकम् ।
दाहयेज्जर्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ५१ ॥
अन्तर्धूमं ततः क्षाराद् विडालपदकं पिबेत् ।
मदिरादधिमन्दोष्णजलारिष्टसुरासवैः ॥ ५२ ॥
उदरं गुल्ममष्ठीलां तून्यौ शोफं विषूचिकाम् ।
प्लीहहृद्रोगगुदजानुदावर्तं च नाशयेत् ॥ ५३ ॥
क्षारं छागकरीषाणां स्रुतं मूत्रेऽग्निना पचेत् ।
घनीभवति तस्मिंश्च कर्षांशं चूर्णितं क्षिपेत् ॥ ५४ ॥
पिप्पलीं पिप्पलीमूलं शुण्ठीं लवणपञ्चकम् ।
निकुम्भकुम्भत्रिफलास्वर्णक्षीरीविषाणिकाः ॥ ५५ ॥
स्वर्जिकाक्षारषड्ग्रन्थासातलायावशूकजम् ।
कोलाभा गुलिकाः कृत्वा ततः सौवीरकाप्लुताः ॥
पिबेदजरके शोफे प्रवृद्धे च दकोदरे ॥ ५६½ ॥

इति हृदयप्रिये योगखण्डे नवमोऽध्यायः ॥

---

अथ दशमोऽध्यायः ।

(विसर्पे त्रयः कषायाः)

मुस्तारिष्टपटोलदारुरजनीद्राक्षाबलानागरै-
स्त्रायन्त्युत्पलधन्वयासधनिकाभूनिम्बसेव्याम्बुभिः ।
श्रेष्ठानिम्बकुकूलकैश्च सकणैः सिद्धाः कषाया मरुत्-
पित्तश्लेष्मविसर्पदर्पशमनाः प्रोक्तास्त्रयस्ते क्रमात् ॥ १ ॥

(दार्वीपटोलादिक्वाथः)

दार्वीपटोलकटुकामसूरत्रिफलामृतैः ।
यष्टीत्रायन्तिनिम्बैश्च पिबेत् क्वाथं घृतान्वितम् ॥ २ ॥

(त्रिफलादिलेपः)

त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ।
नळमूलान्यनन्ता च लेपः श्लेष्मविसर्पहा ॥ ३ ॥

(धवादिलेपः)

धवसप्ताह्वखदिरदेवदारुकुरण्डकम् ।
समुस्तारग्वधं लेपः कफवीसर्पनाशनः ॥ ४ ॥

(गोपात्मजादिघृतम्)

गोपात्मजाकमलचन्दनसेव्यकुष्ठ-
क्षीरिद्रुमाङ्कुरबिसोत्पलकन्दगर्भम् ।
दूर्वारसे जयति साधितमाज्यमाशु
क्षीरेण सार्धमिह सर्वविसर्पमुग्रम् ॥ ५ ॥

(दन्तीचित्रकादिलेपः)

दन्ती चित्रकमूलत्वक् सुधार्कपयसी गुळः ।
भल्लातकास्थिकासीसैर्लेपो भिन्द्याच्छिलामपि ॥ ६ ॥
बहिर्मार्गास्थितं ग्रन्थिं किं पुनः कफसम्भवम् ।

(उदुम्बराम्बरादिलेपः)

उदुम्बराम्बरं मुक्ता मृणाळमधुकं बला ॥ ७ ॥
क्षीरपिष्टः प्रदेहोऽयं कर्दमाख्ये विसर्पके ।

(पञ्चवल्कादितैलम्)

पञ्चवल्कनिशागोपीकषाये तिलजं पचेत् ॥ ८ ॥
रम्भोदकन्दमधुकत्वक्सेव्यामयचन्दनैः ।
हितं तत् पैत्तिके कुष्ठे विसर्पे क्लेदवत्यपि ॥ ९ ॥

(दूर्वागुळूच्यादितैलम्)

दूर्वागुळूचीतुळसीकुमारीनीलीविषघ्नीमुनिवृक्षभृङ्गाः ।
रसेषु तेषां विपचेत् ससर्पिस्तैलं सदुग्धं च विसर्पशान्त्यै ॥ १० ॥

(शुण्ठीबलादिक्वाथः)

शुण्ठीबलानिम्बपटोलकुष्ठैः सधान्यकैः सामलकैः समुस्तैः ।
शृतः कषायो विनिहन्ति पानान्मसूरिकामष्टविधां मधूढः ॥ ११ ॥

(शारिवामधुकादिक्वाथः)

शारिवामधुकोशीरपाठचन्दनपर्पटैः
मसूरिकापहः क्वाथः कदलीकन्दजस्तथा ॥ १२ ॥

(चन्दनपर्पटकादिक्वाथः)

चन्दनपर्पटकामृतवल्लीधान्यकरोध्रजलाम्बुदसिद्धम् ।
पुष्करमुग्रविदाहविशिष्टं स्फोटमशेषमपोहति सद्यः ॥ १३ ॥

(कुमारिकादितैलम्)

कुमारिकागोमयनालिकेरवृक्षाम्लदूर्वास्वरसाढकेन ।
प्रस्थं प्रसिद्धं तिलजं प्रलेपाद् विस्फोटपामादिगदान् प्रमार्ष्टि ॥१४॥

(स्फोटे त्रायमाणादिक्वाथः)

त्रायमाणोत्तमाद्राक्षाक्वथितं स्फोटजिज्जलम् ।

(स्फोटे धात्र्यादिः)

धात्रीखदिरनिम्बाम्बुचन्दनैर्वा सितायुतम् ॥ १५ ॥

(शीतपित्ते अमृतादिः)

अमृतारजनीनिम्बयापरोगघ्नतोयदैः ।
पथ्याधात्रीवृषैः क्वाथः शीतपित्तनिबर्हणः ॥ १६ ॥

(गुल्गुलुतिक्तकम्)

निम्बामृतावृषपटोलनिदिग्धिकानां
भागान् पृथग् दशपलान् विपचेत् घटेऽपाम् ।
अष्टांशशेषितरसेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥ १७ ॥

पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरवचामिसिचव्यकुष्ठैः ।
तेजोवतीमरिचदीप्यकवत्सकाग्नि-
रोहिण्यरुष्करनिशाकणमूलयुक्तैः ॥ १८ ॥

मञ्जिष्ठयातिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसङ्ख्यैः ।
तत् सेवितं विधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ १९ ॥

नालीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसकासशोष
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ २० ॥

(माणिभद्रः)

विडङ्गसारामलकाभयानां पलं पलं त्रीणि पलानि कुम्भात् ।
गुडस्य च द्वादश मासमेकं जितात्मनां हन्त्युपयुज्यमानः ॥ २१ ॥

कुष्ठश्वित्रश्वासकासोदरार्शो
मेहप्लीहग्रन्थिरुग्जन्तुगुल्मान् ।
सिद्धं योगं प्राह यक्षो मुमुक्षो-
र्भिक्षोः प्राणान् माणिभद्रः किलेमम् ॥ २२ ॥

(पटोलमूलादिक्वाथः)

पटोलमूलत्रिफलाविशालाः
पृथक् त्रिभागापचितत्रिशाणाः ।
स्युस्त्रायमाणा कटुरोहिणी च
भागार्धिके नागरपादयुक्ते ॥ २३ ॥

एतत् पलं जर्जरितं विपक्वं जले पिबेत् कुष्ठविशोधनाय ।

(खदिरादिक्वाथः)

खदिरारिष्टगुडूचीपटोलदार्वीदुरालभाक्वाथः ।
कुष्ठानां विनिहन्ता दैतेयानां नृसिंह इव ॥ २४ ॥

(वज्रकघृतम्)

वाशामृतानिम्बवरापटोलव्याघ्रीकरञ्जोदककल्कपक्वम् ।
सर्पिर्विसर्पज्वरकामलास्रकुष्ठापहं वज्रकमामनन्ति ॥ २५ ॥

(महावज्रकघृतम्)

त्रिफलात्रिकटुद्विकण्टकारीकटुकाकुम्भनिकुम्भराजवृक्षैः ।
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नववज्रदुग्धमुष्ट्या ॥ २६ ॥
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः क्रूरे कोष्ठे स्नेहनं रेचनं च ।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान् हन्यात् कृच्छ्रांस्तन्महावज्रकाख्यम्॥

(कुष्ठे अभयाप्रयोगः)

कुटजाग्निनिम्बनृपतरुखदिरासनसप्तपर्णनिर्यूहे ।
सिद्धा मधुघृतयुक्ताः कुष्ठघ्नीर्भक्षयेदभयाः ॥ २८ ॥

(चन्द्रशकलादिवटकः)

चन्द्रशकलाग्निरजनीविळङ्गतुवरास्थ्यरुष्करत्रिफलाभिः ।
वटका गुळांशक्लप्ताः समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः ॥२९॥

(श्वेतकरवीरादिलेपः)

श्वेतकरवीरमूलं कुटजकरञ्जात् फलं त्वचो दार्व्याः ।
सुमनःप्रवाळयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ३० ॥

(निम्बादिचूर्णम्)

निम्बं हरिद्रे सुरसं पटोलं कुष्ठाश्वगन्धे सुरदारु शिग्रुः ।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डा च चूर्णानि समानि कुर्यात्॥ ३१॥
तैस्तक्रयुक्तैः प्रथमं शरीरं तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्य कण्डूपिटकाः सकोठाः कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ३२॥

(मुस्ताद्यवचूर्णनम्)

मुस्तामृता*सङ्गकटङ्कटेरी-
कासीसकम्पिल्यककुष्ठलोध्राः ।
गन्धोपलः सर्जरसो विळङ्गं
मनश्शिलाले करवीरकत्वक् ॥ ३३ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।

---

* 'सङ्ग' इति मुद्रिताष्टाङ्गहृदये.

दद्रुः सकण्डूकिटिपानि पामा
विचर्चिका चेति तथा न सन्ति ॥ ३४ ॥

(गुल्गुलुमरिचादिचाक्रिकतैलम्)

गुल्गुलुमरिचविडङ्गैः सर्षपकासीससर्जरसमुस्तैः ।
श्रीवेष्टतालगन्धैर्मनःशिलाकुष्ठकाम्पिल्यैः ॥ ३५ ॥
उभयहरिद्रासहितैश्चाक्रिकतैलेन मिश्रितैरेभिः ।
दिनकरकराभितप्तैः कुष्ठं घृष्टं च नष्टं च ॥ ३६ ॥

(वज्रकतैलम्)

मूलं सप्ताह्वात् त्वक् शिरीषाश्वमारा-
दर्कान्मालत्याश्चित्रकास्फोतनिम्बात् ।
बीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठा जन्तुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ३७ ॥
तैलं तैलं साधितं तैः समूत्रै-
स्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ।
अभ्यङ्गेन श्लेष्मवातोद्भवानां
नाशायालं वज्रकं वज्रतुल्यम् ॥ ३८ ॥

(महावज्रकतैलम्)

एरण्डतार्क्ष्यघननिम्बकदम्बभार्ङ्गी-
कम्पिल्यवेल्लफलिनीसुरवारुणीभिः ।
निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धा-
श्रीवेष्टगुल्गुलुशिलापटुतालविश्वैः ॥ ३९ ॥
तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम् ।
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिगण्डमालाघ्नम् ॥ ४० ॥

(लाक्षादिलेपः)

लाक्षा व्योषं प्रापुनाटं च बीजं सश्रीवेष्टं कुष्ठसिद्धार्थकाश्च ।
तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो दद्रूघ्नोक्तो मूलकोत्थं च बीजम् ॥

(जलवाप्यादिलेपः)

जल*वाप्यलोहकेसरपत्रप्लवचन्दनमृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तककुष्ठे ॥ ४२ ॥

---

* 'वाप्य' इति मुद्रिताष्टाङ्गहृदये.

(खदिरादिवर्गः)

खदिरवृषनिम्बकुटजाः श्रेष्ठाः कृमिजित्पटोलमधुपर्ण्यः ।
अन्तर्बहिः प्रयुक्ताः कृमिकुष्ठनुदः सगोमूत्राः ॥ ४३ ॥

(काकोदुम्बरिकादिक्वाथः)

काकोदुम्बरिका*मूलचन्द्ररेखाशृतं जलम् ।
पीतं प्रधावयेत् श्वित्रं कुष्ठमौदुम्बरं तथा ॥ ४४ ॥

(श्वित्रे पूतीकादिलेपः)

पूतीकार्कव्याधिघातस्नुहीनां मूत्रैः पिष्टाः पल्लवा जातिजाश्च ।
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रूपामाकोठान् दुष्टनाडीव्रणांश्च ॥ ४५ ॥

(श्वित्रे अन्यः प्रलेपः)

†द्वैप्यं दग्धं चर्म मातङ्गजं वा श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।

(अन्यश्च)

पूतीकीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेको निहन्ति ॥ ४६ ॥

(लेपने स्फोटहेतुप्रयोगः)

रात्रौ गोमूत्रे वासिताञ् जर्जराङ्गा-
न्नह्नि च्छायायां शोषयेत् स्फोटहेतून् ।
एवं वारांस्त्रींस्तैस्ततः श्लक्ष्णपिष्टैः
स्नुह्याः क्षीरेण श्वित्रनाशाय लेपः ॥ ४७ ॥

(अक्षतैलादिलेपः)

अक्षतैलद्रुतालेपः कृष्णसर्पोद्भवा मषी ।
शिखिपिञ्छं तथा दग्धं ह्रीवेरं वा तदाप्लुतम् ॥ ४८ ॥

(सवर्णकरणलेपः)

कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ ४९ ॥

(गन्धकादिलेपः)

गन्धकगृहधूमनिशावल्गुजकोशातकीबीजात् ।
चूर्णं नवनीतसखं प्रलेपितं मर्दयेत् श्वित्रम् ॥ ५० ॥

---

* 'वेल्ल', † 'द्वैपम्' इति मुद्रिताष्टाङ्गहृदये.

(व्योषादिलेपः)

व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रक*शुक्तैः ।
कोलतुल्यगुलिकार्धविषांशाः श्वित्रकुष्ठशमनो वरलेपः ॥ ५१ ॥

(कुष्ठादिषु भल्लातकादिलेपः)

भल्लातकद्वीपिसुधार्कमूलं गुञ्जाफलत्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकां च पक्त्वा ॥ ५२॥

स्नुगर्कदुग्धे †पुनरायसस्थं
शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालकेषु
मशेषु दुर्नामसु चर्मकीले ॥ ५३ ॥

(व्यङ्गे रक्तचन्दनादिलेपः)

रक्तचन्दनमञ्जिष्ठाकुष्ठलोध्रप्रियङ्गवः ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ ५४ ॥

(व्यङ्गादिहरोऽभ्यङ्गयोगः)

यवान् सर्जरसं लोध्रमुशीरं मदनं मधु ।
घृतं गुडं च गोमूत्रे पचेदादर्विलेपनात् ॥ ५५ ॥
(तदभ्यङ्गान्निहन्त्याशु नीलिकाव्यङ्गदूषिकान् ।
मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥)

(कृमिरोगे खदिरादिः)

खदिरः कुटजः पिचुमन्दवचात्रिकटु त्रिफला त्रिवृता च समम् ।
पशुमूत्रयुतं पिब सप्तदिनं कृमिकोटिशतान्यपि नाशयति ॥ ५६ ॥

(पलाशबीजादिः)

पलाशबीजं सगुडं तिलजन्तुघ्नसंयुतम् ।
जलेन नाळिकेरस्य पिबेत् कृमिविनाशनम् ॥ ५७ ॥

(कृमिनिबर्हणः खलः)

रसोनव्योषकैडर्यसर्षपद्वयसैन्धवैः ।
खळो धान्याम्लसंसिद्धः सिद्धः कृमिनिबर्हणः ॥ ५८ ॥

---

* 'कुष्ठैः', † 'घनमा' इति मुद्रिताष्टाङ्गहृदये.

(कीटापहघृतम्)

निशाऽश्वरसकल्काभ्यां सिद्धं कीटापहं घृतम् ।

(गिरिकर्ण्यादिघृतम्)

गिरिकर्णीमूलकल्कसहितं सस्नुहीपयः ॥ ५९ ॥
सर्पिर्विपाचितं सर्वकुष्ठानां नाशनं परम् ।

(वातहरगणाः)

भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ॥ ६० ॥
वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ।

(तिल्वकघृतम्)

पलाष्टकं तिल्वकतो वरायाः
प्रस्थं पलांशं गुरुपञ्चमूलम् ।
सैरण्डसिंहीत्रिवृतं घटेऽपां
पक्त्वा पचेत् पादशृतेन तेन ॥ ६१ ॥
दध्नः पात्रे यावशूकात् त्रिबिल्वैः
सर्पिः प्रस्थं हन्ति तत् सेव्यमानम् ।
दुष्टान् वातानेकसर्वाङ्गसंस्थान्
योनिव्यापद्वर्ध्मगुल्मोदरं च ॥ ६२ ॥

(वत्सकादिगणः)

वत्सकमूर्वाभार्ङ्गीकटुकामरिचं घुणप्रिया च गण्डीरम् ।
एला पाठाजाजी कट्वङ्गफलाजमोजासिद्धार्थवचाः ॥ ६३ ॥
जीरकहिङ्गुविडङ्गं पशुगन्धा पञ्चकोलकं हन्ति ।
चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ६४ ॥

(वचाहरिद्रादी)

वचाजलददेवाह्वनागरातिविषाभयाः ॥ ६५ ॥
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ।
वचाहरिद्रादिगणावामातीसारनाशनौ ॥ ६६ ॥
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ।

(षड्धरणः)

चित्रकातिविषापाठाकटुकारग्वधक्षपाः ॥ ६७ ॥

महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः।

(अष्टवर्गः)

बलासहचरैरण्डशुण्ठीरास्नासुरद्रुमैः ॥ ६८ ॥
ससिन्दुवारलशुनैरष्टवर्गोऽनिलापहः।

(सहचरादिकषायः)

सहचरं सुरदारु सनागरं
क्वथितमम्भसि तैलविमिश्रितम्।
पवनपीडितदेहगतिः पिबेद्
द्रुतविलम्बितगो भवतीच्छया ॥ ६९ ॥

(वातघ्नगणः)

दशमूलबलैरण्डनिर्गुण्डीशिग्रुबर्बरैः ॥ ७० ॥
सपञ्चकोललशुनैर्सर्यकैर्वातहा गणः।

(रास्नासहचरादिः)

रास्नासहचरैरण्डबलापूतीकनागरम् ॥ ७१ ॥
गृध्रस्यां मूर्धगे वाते हितं पानं परं स्मृतम्।

(प्रसारण्यादिक्काथः)

प्रसारणीमाषबलारसोन-
रास्नौषधैः प्रक्कथितं तदम्भः
पिबन्ति ये क्षीरभुजस्त्यजन्ति
मरुद्विकारानपबाहुकं च ॥ ७२ ॥

(लशुनक्काथः)

लशुनस्य कषायं वा पिबेत् सैन्धवहिङ्गुना ॥ ७३ ॥

(रास्नामहौषधादिसर्पिः)

रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करम्।
पिष्ट्वा विपाचयेत् सर्पिर्वातरोगहरं परम् ॥ ७४ ॥

(प्रसारणीतैलम्)

प्रसारणीरसे सिद्धं पिबेत् तैलं यथाबलम्।
सर्ववातहरं चैव कफरोगविनाशनम् ॥ ७५ ॥

(सहचरादितैलम्)

सहाचरतुलायास्तु रसे तैलाढकं पचेत् ।
कल्कैर्मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः ॥ ७६ ॥
सूक्ष्मैलापिप्पलीकुष्ठ[illegible]कैः ।
गन्धैश्च जीवनीयैश्च [illegible]रसायनम् ॥ ७७ ॥
एतन्मृद्वग्निना पक्वं स्थापयेद्भाजने शुभे ।
सर्ववातविकारांश्च नाशयेत् सर्वधातुगान् ॥ ७८ ॥

(बलातैलम्)

बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ।
जलाढकशते पक्त्वा दशभागस्थिते रसे ॥ ७९ ॥
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं पचेत् ।
समैः साजपयोर्धांशं कल्कैरेभिः पलोन्मितैः ॥ ८० ॥
शठीसरलदार्वेलामञ्जिष्ठागरुचन्दनैः ।
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ॥ ८१ ॥
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ।
पलाशरसकस्तूरीनलिकाजातिकोरकैः ॥ ८२ ॥
स्पृक्काकुङ्कुमशैलेयजातिकाकटुफलाम्बुभिः ।
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः ॥ ८३ ॥
लवङ्गनतकक्कोलकुष्ठमांसीप्रियङ्गुभिः ।
स्थौणेयतगरध्यामवचामदनकप्लवैः ॥ ८४ ॥
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ।
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजितम् ॥ ८५ ॥
कासश्वासज्वरच्छर्दिमूर्च्छागुल्मक्षतक्षयान् ।
प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत् ॥ ८६ ॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ।

पाने नस्येऽन्वासनेऽभ्यञ्जने च
स्नेहाः काले सम्यगेते प्रयुक्ताः ।
दुष्टान् वातानाशु शान्तिं नयेयु-
र्वन्ध्या नारीः पुत्रभाजश्च कुर्युः ॥ ८७ ॥

(पञ्चस्नेहम्)

दशमूलबलामाषकः ... कुलत्थकम् ॥ ८८ ॥
प्रस्थं प्रस्थं पृथक् क्षुण्णं ... द्रोणद्वये पचेत् ।
धान्याम्लशूर्पसंयुक्ते चतुर्भागावशेषिते ॥ ८९ ॥
तत्र दद्यात् त्रिकुडवं तिलजं नालिकेरजम् ।
एरण्डजं चाक्रिकं च प्रत्येकं सौकरीं वसाम् ॥ ९० ॥
द्विगुणं च पयः पिष्टं रास्नानागरसैन्धवम् ।
कार्पासास्थिकुलत्थानि गण्डीरं च पचेत् पुनः ॥ ९१ ॥
सम्यक् सिद्धमिदं हन्यात् सर्ववात विकारकान् ।
पञ्चस्नेहमिदं प्रोक्तं ब्रह्मणा वा शान्तये ॥ ९२ ॥

(माषतैलम्)

माषप्रस्थं समादाय पचेत् सम्यग् जलाढके ।
पादशेषरसे तस्मिन् कल्कान्येतानि दापयेत् ॥ ९३ ॥
जीवनीयानि सर्वाणि शतपुष्पां च सैन्धवम् ।
रास्नां चैवात्मगुप्तां च व्योषं च मधुकं तथा ॥ ९४ ॥
प्रस्थं च तिलतैलस्य क्षीरस्य च तदाढकम् ।
मृद्वग्निना शनैः सम्यक् पाचयेन्मतिमान् भिषक् ॥ ९५ ॥
पक्षाघातार्दिते वाते कर्णशूले च दारुणे ।
बाधिर्ये कर्णनादे च तिमिरे च त्रिदोषजे ॥ ९६ ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ।
माषतैलमिदं श्रेष्ठं पाननावनबस्तिषु ॥ ९७ ॥

(प्रभञ्जनविमर्दनम्)

बलाशतावरीशिग्रुवरुणार्ककरञ्जकाः ।
एरण्डश्चापि कोरण्डो वाजिगन्धा प्रसारणी ॥ ९८ ॥
पञ्चमूलं वरिष्ठं च तैः समैः क्वथिते जले ।
पादावशेषिते दद्यात् तैलस्यार्धाढकं भिषक् ॥ ९९ ॥
क्षीरं तद्द्विगुणं दद्यात् तत्समे दधिकाञ्जिके ।
तकरामरकाष्ठैलाशुण्ठीसर्षपचोरकाः ॥ १०० ॥

शताह्वाकुष्ठसिन्धूत्थरास्नाकालानुसारिकाः ।
वचा सचित्रकं मांसी सरलं कटुरोहिणी ॥ १०१ ॥
प्रत्येकं कार्षिकान् भागान् प्रतीवापाय पण्डितः ।
तत्संभारेण मृद्वग्निसिद्धं तिलजमादरात् ॥ १०२ ॥
पानाभ्यञ्जननस्येषु वस्तिकर्माणि योजयेत् ।
एतत्तैलं महावीर्यमात्रेयप्रमुखैः पुरा ॥ १०३ ॥
निर्मितं नामतश्चापि प्रभञ्जनविमर्दनम् ।

(कार्पासास्थ्यादितैलम्)

कार्पासास्थिबलामाषकुलस्थक्वाथसाधितम् ॥ १०४ ॥
शिग्रुकुष्ठाग्निलशुनपटुपञ्चपुनर्नवैः ।
नालिकेरपयोयुक्तं तैलं हन्त्यपबाहुकम् ॥ १०५ ॥

(दशमूलबलादितैलम्)

दशमूलबलामूलकुलस्थैः सम्प्रसाधितम् ।
अभ्यञ्जनेन हन्त्याशु पक्षाघातं तिलोद्भवम् ॥ १०६ ॥

(स्नुह्यर्कस्वरसादितैलम्)

स्नुह्यर्कस्वरसे सिद्धं तैलं तन्मूलकल्कवत् ।
सर्ववातं निहन्त्याशु सुप्तवातं विशेषतः ॥ १०७ ॥

(भूनागतैलम्)

लिकुचरसस्नुक्क्षीरे तुल्यं तैलं समेतभूनागम् ।
सिद्धं हिनस्ति लेपाद् दुस्तरमपबाहुकं झटिति ॥ १०८ ॥

(नारायणतैलम्)

दशमूलं तथैरण्डं वाजिगन्धा शतावरी ।
पुनर्नवबलारास्नायष्टीपुन्नागपाटलाः ॥ १०९ ॥
देवदारुकणानिम्बशतपुष्पं च चन्दनम् ।
पृथग् दशपलान् भागान् सर्वतुल्यगुणे जले ॥ ११० ॥
पाचयेत् पादशेषं तु कषायं वस्त्रपूतकम् ।

समुद्धरेच्चतुष्षष्टिपलं तैलं सुशोधितम् ॥ १११ ॥
त्वक्पत्रागरुमांसीजातीतिक्कोलचन्दनम् ।
पृथग् दशपलं योज्यं पूजां कृत्वा सुरालये ॥ ११२ ॥
एतन्नारायणं तैलं सर्ववातनिकृन्तनम् ।
नरा वा वातसंभग्ना हयो वा कुञ्जरोऽपि वा ॥ ११३ ॥
वक्रत्वमपि चाङ्गस्य दन्तवातं गलग्रहम् ।
आन्त्रवृद्धिं श्लीपदं च तैलेनानेन मर्दयेत् ॥ ११४ ॥
असाध्यं साधयत्याशु यथा नारायणोऽसुरान् ।

(पुन्नागैरण्डादिपोट्टलम्)

पुन्नागैरण्डनिम्बैर्बकुलधनदद्दङ्नालिकेरैः करञ्जैः
कार्पासैः शिग्रुडोलाफलमुनिशणकैः सर्षपाङ्कोलबीजैः ।
रास्नाकुष्ठैः कुलस्थैस्तिललशुनवचाहिङ्गुसिन्धूत्थयुक्तैः
सर्वस्नेहैः कृतं तत् सकलपटुयुतं पोट्टलं वातभञ्जि ॥११५॥

(शुण्ठीवचादिलेपः)

शुण्ठीवचालशुनमाषतिलाश्वगन्धा-
शिग्रुद्वयार्कगददारुसुधाशताह्वैः ।
भूपीलुसर्षपबलालशुनैश्च लेपो
मूत्राम्लतैलसहितैः पवनार्तिहारी ॥ ११६ ॥

(रास्नातामलक्यादिक्वाथः)

रास्नातामलकीवृषागरुशठीचित्राब्दचव्याश्मभि-
द्धात्रीभार्ङ्गिपटोलपुष्करनिशासैरीयविश्वाग्निभिः ।
निष्क्वाथो दशमूलदारुसहितः पीतः कदुष्णो नृणां
हन्यात् सैन्धवखण्डशौण्डिसहितो वातं त्रिदोषोत्तरम् ॥ ११७ ॥

(रास्नैरण्डादिक्वाथः)

रास्नैरण्डबलासहाचरवरीदुस्पर्शवाशामृता-
देवाह्वातिविषाघनेक्षुरशठीविश्वैः कषायः शृतः ।
सर्पिस्तैलविमिश्रितः प्रशमयेद् वायुं सशूलं तथा
जङ्घोरुत्रिकपृष्ठपार्श्वहनुगं शोफं च वातास्रजम् ॥ ११८ ॥

(शतावर्यादिक्वाथः)

शतावरीछिन्नरुहामलत्वग्बलक्षुकाण्डेक्षुरसाम्भृताम्भः ।
कल्केन यष्टीमधुकेन मिश्रं धुनोति वातास्रमथास्रपित्तम् ॥ ११९॥

(पिण्डतैलम्)

समधूच्छिष्टमञ्जिष्ठससर्जरसशारिवम् ।
पिण्डतैलं तदभ्यङ्गाद् वातरक्तरुजापहम् ॥ १२० ॥

(चन्दनादितैलम्)

चन्दनं मधुकं कुष्ठमश्वगन्धा सुरद्रुमः ।
उशीरमुत्पलं मांसीपत्रागरुनिशाबलाः ॥ १२१ ॥
ह्रीबेरं नागकुसुमं स्पृक्का मञ्जिष्ठशारिवे ।
तगरं मृगनाभिश्च शतपुष्पा हरेणुकम् ॥ १२२ ॥
सूक्ष्मैलाब्दत्वचं चोरं बर्बरं तैः सुकल्कितम् ।
केतकीमूलजे क्वाथे सक्षीरं तिलजं पचेत् ॥ १२३ ॥
तदभ्यङ्गादिभिस्तैलं वातशोणितनाशनम् ।

(बलागुडूच्यादितैलम्)

बलागुडूचीसुरपादपानां क्वाथे पचेत् तैलमिमैश्च कल्कैः ।
जटामयाचन्दनकुन्दुरुष्कनताश्वगन्धासरलैः सरास्नैः ॥ १२४ ॥
एतत् सदाहं सरुजं सशोफं रक्तानुगं वातकफं निहन्ति ॥ १२५॥

(अमृतादितैलम्)

अमृताक्वाथसंसिद्धं तैलं चन्दनपूर्वकैः ॥ १२६ ॥
शारिवोशीरकुष्ठाब्दयष्ट्येकोत्पलतस्करैः ।
कल्कैर्वातास्रपित्तोत्थशिरोरोगहरं परम् ॥ १२७॥

(गृहधूमादिलेपः)

गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद् वातरक्ते वातकफोत्तरे ॥ १२८ ॥

(बलातैलम्)

बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत् ।
सहस्रशतपाकं तद् वातासृग्वातरोगनुत् ॥ १२९ ॥

(मधुयष्ट्यादितैलम्)

मधुयष्ट्याः पलशतात् कषाये पादशेषिते ।
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः ॥ १३० ॥
स्थिरातामलकीदूर्वापयस्याभीरुचन्दनैः ।
लोहहंसपदीमांसीद्विमेदामधुपर्णिभिः ॥ १३१ ॥
काकोलीक्षीरकाकोलीशतपुष्पर्द्धिपद्मकैः ।
जीवन्तीजीवकर्षभत्वक्पत्रनखवालकैः ॥ १३२ ॥
प्रपौण्डरीकमञ्जिष्ठाशारिवैन्द्रीवितुन्नकैः ।
चतुष्प्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत् ॥ १३३ ॥

इति हृदयप्रिये योगखण्डे दशमोऽध्यायः ॥

## अथैकादशोऽध्यायः ।

(व्रणे उपनाहनार्थं सक्तुपिण्डिका)

सकोलतिलवल्लीमा दध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा कोष्णा शस्तोपनाहने ॥ १ ॥

(व्रणशोधनालेपः)

पटोलतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ २ ॥

(रोपणम्)

काक्षीलोध्राभयासर्जसिन्दूराञ्जनतुत्थकम् ।
चूर्णितं तैलमदनैर्युक्तं रोपणमुत्तमम् ॥ ३ ॥

(त्वग्विशुद्धिकरो लेपः)

लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ॥ ४ ॥

जातीकिंशुकपर्पटाख्यसुषवीमागूरिकामाद्रिका-
निर्गुण्डीमृदुकुञ्चिकाकटुकिकादूर्वानिशानां रसे ।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥

(सुरसादिगणः)

सुरसयुगफणिज्जं कालमाली विडङ्गः
खरपुसविषकर्णीकट्फलं कासमर्दः ।
क्षवकखरसिभार्ङ्गी कार्मुका काकमाची
कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ ६ ॥

सुरसादिर्गणः श्लेष्ममेदःकृमिनिषूदनः ।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ ७ ॥

(आरग्वधादिगणः)

आरग्वधेन्द्रयवपाटलिकाकतिक्ता
निम्बामृतामधुरसास्रुववृक्षपाठाः ।
भूनिम्बसैर्यकपटोलकरञ्जयुग्म-
सप्तच्छदाग्निसुषवीफलबाणघोण्टाः ॥ ८ ॥

आरग्वधादिर्जयति च्छर्दिकुष्ठविषज्वरान् ।
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥ ९ ॥

(न्यग्रोधादिः)

न्यग्रोधपिप्पलसदाफललोध्रयुग्म-
जम्बूद्वयार्जुनकपीतनसोमवल्काः ।
प्लक्षाम्लवञ्जुलपियालपलाशनन्दी
कोलीकदम्बविरला मधुकं मधूकम् ॥ १० ॥

न्यग्रोधादिगणो व्रण्यः सङ्ग्राही भग्नसाधनः ।
मेदःपित्तास्रतृड्दाहयोनिदोषनिबर्हणः ॥ ११ ॥

(पद्मकादिः)

पद्मकपुण्ड्रौ वृद्धितुगर्ध्यः शृङ्ग्यमृता दश जीवनसंज्ञाः ।
स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनबृंहणजीवनवृष्याः ॥ १२ ॥

(सद्योव्रणे रोपणतैलम्)

तालीसं पद्मकं मांसी हरेण्वगरुचन्दनम् ।
हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ १३ ॥
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ।

(गन्धतैलम्)

शैलेयरास्नांशुमतीकशेरुकालानुसारीनतपत्रलोध्रैः।
सक्षीरशुक्लैः सपयस्कदूर्वैस्तैलं पचेत् तन्नळदादिभिश्च ॥ १४ ॥
गन्धतैलमिदमुत्तममस्थिस्थैर्यकृज्जयति चाशु विकारान्।
वातपित्तजनितानतिवीर्यं व्यापिनोऽपि विविधैरुपयोगैः ॥ १५ ॥
नळदवालकलोहितयष्टिकानखमिसिप्लवकुष्ठबलात्रयैः।
अगरुचन्दनकुङ्कुमशारिवासरळसर्जरसामरदारुभिः ॥ १६ ॥
पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ॥ १७ ॥
समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत्।

(मालत्यादितैलम्)

मालतीचित्रकाश्वघ्ननक्तमालैः प्रसाधितम् ॥ १८ ॥
लाक्षाशम्याकपत्रैलकजधात्रीफलैस्तथा।
चोचारूषिकयोस्तैलमभ्यङ्गः क्षुरमृष्टयोः ॥ १९ ॥

(शिरःकुष्ठतैलम्)

अङ्कोलबीजमरिचकुष्ठैः कल्कीकृतं भिषक्।
पचेत् बकुळपत्रस्य जम्बीरस्य रसाढके ॥ २० ॥
तैलप्रस्थं शिरोभ्यङ्गाच्छिरःकुष्ठविनाशनम्।
कुर्वासं केशकण्डूं च शिरोरोगं च नाशयेत् ॥ २१ ॥
केशानां वर्धनं नित्यमङ्गदौर्गन्ध्यनाशनम्।

(गोदन्तादिवर्तिः)

गोदन्तं कुक्कुटाण्डं करिवरदशनं कूर्मपृष्ठं वराटं
सारङ्गोद्भूतशृङ्गं जलधिजमधुकं ताम्रशङ्खं सतुत्थम्।
कर्पूरं गर्दभास्थि स्फटिकमिति कृता वर्तिरक्ष्णोर्निषिक्ता
शुक्लाख्यार्माधिमांसक्षतजभवसिरोत्पातहर्षान् निहन्ति ॥ २२ ॥

(महानीलगुडिका)

बृहतीमूलयष्ट्याह्वताम्रसैन्धवनागरैः ॥ २३ ॥
धात्रीफलाम्बुना पिष्टैर्लेपितं ताम्रभाजनम्।
यवा*न्यामलकीपत्रैर्बहुशो धूपयेत् ततः ॥ २४ ॥

---

* 'यवाज्यामलकीपत्रैरि'ति ग्रन्थान्तरे।

तत् प्रकुर्वीत गुटिकास्ता जलक्षौद्रपेपिताः ।
महानीला इति ख्याताः शुद्धशुक्रहराः परम् ॥ २५ ॥

(कर्पूरादिरसक्रिया)

(चन्द्रोदयः)

कर्पूरं स्फटिकं वराटकवरासिन्धूत्थतुत्थाञ्जनं
ताक्ष्यं पीतकरोहिणी हिमनिशे पुण्ड्राह्वयष्ट्याह्वयम् ।
कंसं नागरसाञ्जनं सकतकं शङ्खं तुटी रोचनं
मुस्तागैरिकमेघनादशवरीनीलोत्पलं शर्करा ॥ २६ ॥

फेनः केशमषीकटुत्रयवलालोध्रद्वयं पारतं
नन्द्या*वर्तकशिग्रुलुङ्गरसयोः पिष्ट्वा मधूढं पुनः ।
कर्पूरादिरयं निहन्ति तिमिरं काचार्मशुक्रं व्रणं
नक्तान्धं क्षतजं च भृङ्गनिहितो नाम्ना तु चन्द्रोदयः ॥ २७ ॥

(जीवन्त्यादिघृतम्)

तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषिते ।
तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ २८ ॥
प्रपुण्डरीककाकोलीपिप्पलीलोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ २९ ॥
कार्षिकैर्निशि तत् पीतं तिमिरापहरं परम् ।

(पटोलादिघृतम्)

पटोलनिम्बकटुकादार्वीसेव्यवराष्टपम् ॥ ३० ॥
सधन्वयासत्रायन्तीपर्पटं पलिकं पृथक् ।
प्रस्थमामलकानां च क्वाथयेदार्मणेऽम्भसाम् ॥ ३१ ॥
तदाढकेऽर्धपलिकैः पिष्टैः प्रस्थं घृतात् पचेत्
मुस्तभूनिम्बयष्ट्याह्वकुटजोदीच्यचन्दनैः ॥ ३२ ॥
सपिप्पलीकैस्तत्सर्पिर्घ्राणकर्णाक्षिरोगजित् ।
विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत् ॥ ३३ ॥

---

* 'वर्तकलुङ्गपुष्परसयोरि'ति ज्यायान् पाठः.

विशेषाच्छुक्लतिमिरनक्तान्ध्योष्णाम्लदाहहृत् ।

(त्रिफलाघृतम्)

त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ॥ ३४ ॥

तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ।
अर्धप्रस्थो घृतात् सिद्धः सितया माक्षिकेण वा ॥ ३५ ॥

युक्तं पिबेत् तत् तिमिरी तद्युक्तं वा वरारसम् ।

(महात्रैफलम्)

यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ ३६ ॥

पलिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत् समैः ।
अजाक्षीरवरावाशामार्कवस्वरसैः पृथक् ॥ ३७ ॥

महात्रैफलमित्येतत् परं दृष्टिविकारजित् ।

(मांस्याद्यञ्जनम्)

मांसात्रिजातकायःकुङ्कुमनीलोत्पलाभयातुत्थैः ।
सितकाचशङ्खफेनकमरिचाञ्जनपिप्पलीमधुकैः ॥ ३८ ॥

चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद् युगलमक्ष्णोः ।
तिमिरार्मरक्तराजीकण्डूकाचादिशममिच्छन् ॥ ३९ ॥

(अक्षबीजादिगुलिका)

अक्षबीजमरिचामलकत्वक्तुत्थयष्टिमधुकैर्जलपिष्टैः ।

छाययैव गुलिकाः परिशुष्का नाशयन्ति तिमिराण्यचिरेण ॥ ४० ॥

(षण्माक्षिकः)

मरिचामलकजलोद्भवतुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः ।
षण्माक्षिक इति योगस्तिमिरार्मक्लेदकाचकण्डूहन्ता ॥ ४१ ॥

(रत्नादिचूर्णाञ्जनम्)

रत्नानि रूप्यं स्फटिकं सुवर्णं स्रोतोञ्जनं ताम्रमयः सशङ्खम् ।

कुचन्दनं लोहितगैरिकं च चूर्णाञ्जनं सर्वदृगामयघ्नम् ॥ ४२ ॥

(सितैरण्डजटादितैलम्)

सितैरण्डजटासिंहीफलदारुवचानतैः ॥ ४३ ॥

शताह्वाबिल्वमूलैश्च तैलं पक्वं पयोन्वितम् ।
नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिजित् ॥ ४४ ॥

(जीवन्त्यादितैलम्)

*समूलजात जीवन्तीतुलां द्रोणेऽम्भसः पचेत् ।
अष्टभागस्थिते तस्मिंस्तैलप्रस्थं पयःसमम् ॥ ४५ ॥
बलात्रितयजीवन्तीवरीमूलैः पलोन्मितैः ।
यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ॥ ४६ ॥
लोह एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ।
वातपित्तामयान् हन्ति तद्विशेषाद् दृगामयान् ॥ ४७ ॥
केशास्यकन्धरास्कन्धपुष्टिलावण्यकान्तिकृत् ।

(असनबिल्वादि)

असनबिल्वबलामृतपाचिते मधुकनागरकत्रिफलान्विते ।
पयसि तैलमिदं पयसा पचेन्नयनकर्णशिरोहितमुत्तमम् ॥ ४८ ॥

(त्रिफलादितैलम्)

त्रिफलामृतवल्लीं च केतक्यसनकौ बलाम् ॥ ४९ ॥
एरण्डमिन्द्रवल्लीं च जलद्रोणे विपाचयेत् ।
रसेन तेकराजस्य हठस्य स्वरसेन च ॥ ५० ॥
तैलप्रस्थं पचेद् धीमान् द्विगुणक्षीरसंयुतम् ।
कल्कांश्च कुष्ठयष्ट्याह्वपद्मकोशीरचन्दनम् ॥ ५१ ॥
मुस्तैलापत्रमांसीश्च हयगन्धाबलामृताः ।
शारिवामरकाष्ठं च लवङ्गनतचोरकान् ॥ ५२ ॥
उत्पलाद्यञ्जनं नीलीं श्लक्ष्णपिष्टं समं पचेत् ।
खालित्यं चैव पालित्यं केशानां रञ्जनं तथा ॥ ५३ ॥
त्रिफलाद्यमिदं तैलमूर्ध्वजत्रुगदापहम् ।
शिरोरोगप्रतिश्यायौ विशेषेण विनाशयेत् ॥ ५४ ॥

(बलातैलं—क्षीरबला)

बलामूलशतक्वाथभागाः षट् पयसस्तथा ।
तैलप्रस्थं बलामूलकल्कसिद्धं पुनः पचेत् ॥ ५५ ॥

---

* 'समूलजालजीवन्ती'ति ग्रन्थान्तरे ।

द्वितीयावृत्तिकाले तु क्वाथमाढकसम्मितम् ।
दशमावर्तनान्तं स्यात् क्षीरं तत्सम्मितं विदुः ॥ ५६ ॥

द्वितीये च तृतीये च यथोक्तं कल्कमिष्यते ।
चतुर्थे पादहीनं स्यात् पञ्चमेऽर्धं च पेषितम् ॥ ५७ ॥

षष्ठे पादमकल्कं च सप्तमावर्तने पुनः ।
सर्वत्र दशमादूर्ध्वं क्वाथ्यं द्विप्रस्थमेव च ॥ ५८ ॥

क्षीरं तु तिलजादर्धमिति धन्वन्तरेर्मतम् ।
पाकं तु मन्दमेवादौ पुनर्मात्राविवर्धनम् ॥ ५९ ॥

पञ्चमे चिक्कणं कुर्याद् दशमे खरचिक्कणम् ।
एवं तु दशमादूर्ध्वं बहुपाको रसायनम् ॥ ६० ॥

यथावस्थं यथायोज्यं निरूप्य कुशलो भिषक् ।
आवर्तयेद् बलातैलं बहुशो दृष्टकर्मवान् ॥ ६१ ॥

(शताह्वादिघृतम्)

शताह्वाकुष्ठनळदकाकोळीद्वययष्टिभिः ।
प्रपुण्डरीकसरळपिप्पलीदेवदारुभिः ॥ ६२ ॥

सर्पिरष्टगुणक्षीरं पक्वं तर्पणमुत्तमम् ।

(पयस्यादिमुखालेपः)

पयस्याशारिबापत्रमञ्जिष्ठामधुयष्टिभिः ॥ ६३ ॥
अजाक्षीरयुतैर्लेपः सुखोष्णः शर्मकृत् परम् ।

(आश्च्योतने लोध्रादिः)

लोध्रसैन्धवमृद्वीकामधुकैः छागलं पयः ॥ ६४ ॥
शृतमाश्च्योतनं योज्यं रुजारागविनाशनम् ।

(जातीमुकुलादिवर्तिः)

जातीमुकुळसिन्धूत्थदेवदारुमहौषधैः ॥ ६५ ॥
पिष्टैः प्रसन्नया वर्तिः शोफकण्डूघ्नमञ्जनम् ।

(आढक्यादिवर्तिः)

आढकीमूलमरिचहरितालरसाञ्जनैः ॥ ६६ ॥
विद्धेऽक्ष्णि सगुळा वर्तिर्योज्या दिव्याम्बुपेषिता ।

(जात्यादिकं पिण्डाञ्जनम्)

जातीशिरीषधवमेषविषाणपुष्प-
　वैडूर्यमौक्तिकफलं पयसा सुपिष्टम् ।
आजेन ताम्रममुना प्रतनु प्रदिग्धं
　सप्ताहतः पुनरिदं पयसैव पिष्टम् ॥ ६७ ॥
पिण्डाञ्जनं हितमनातपशुष्कमक्ष्णि
　विद्धे प्रसादजननं बलकृच्च दृष्टेः ।

(व्योषादिमूर्तिः)

*व्योषाभयातुत्थकयष्टिलोध्रै-
　र्मूर्तिः सुसूक्ष्मैः श्लथवस्त्रबद्धैः ॥ ६८ ॥
ताम्रस्थधान्याम्लनिमग्नमूर्ति-
　रार्तिं जयत्यक्षाणि नैकरूपाम् ।

(रूप्यवर्तिः)

रूप्यं रूक्षेण गोदध्ना लिप्तं नीलत्वमागते ॥ ६९ ॥
शुष्के तु मस्तुना वर्तिर्वाताक्ष्यामयनाशिनी ।

(सुमनःक्षारकादिवर्तिः)

सुमनःक्षारकाः शङ्खस्त्रिफला मधुकं बला ॥ ७० ॥
पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ।

(सैन्धवादिवर्तिः)

सैन्धवं त्रिफला व्योषः शङ्खनाभिः समुद्रजः ॥ ७१ ॥
फेनः शैलेयकः सर्जो वर्तिः श्लेष्माक्षिरोगजित् ।

(पाशुपतवर्तिः)

प्रपुण्डरीकयष्ट्याह्वदार्वीश्चाष्टपलं †पृथक् ॥ ७२ ॥
जलद्रोणे रसे पूते पुनः पक्वे घने क्षिपेत् ।
पुष्पाञ्जनाद् दशपलं कर्षं च मरिचात् ततः ॥ ७३ ॥
कृतचूर्णोऽथवा वर्तिः सर्वाभिष्यन्दसम्भवान् ।
हन्ति रागरुजाघर्षान् सद्यो दृष्टिं प्रसादयेत् ॥ ७४ ॥

---

* 'घोषा' इति साधीयान् पाठः. † 'पचेदि'ति ग्रन्थान्तरे.

अयं पाशुपतो योगो रहस्यं भिषजां परम् ।

(तालीसपत्रादिगुडिका)

तालीसपत्रचपलानतलोहरजोऽञ्जनैः ॥ ७५ ॥
जातीमुकुळकासीससैन्धवैर्मूत्रपेषितैः ।
ताम्रमालिप्य सप्ताहं धारयेत् पेषयेत् ततः ॥ ७६ ॥
मूत्रेणैवानु गुळिकाः कार्याश्छायाविशोषिताः ।
ताः स्तन्यघृष्टा घर्षाश्रुशोफकण्डूविनाशनाः ॥ ७७ ॥

(तुत्थादिगुडिका)

तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥ ७८ ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ।
तत्सेकेनोपदेहाश्रुकण्डूशोफांश्च नाशयेत् ॥ ७९ ॥

(करञ्जबीजाद्यञ्जनम्)

करञ्जबीजं सुरसं सुमनःक्षारकाणि च ।
संक्षुद्य साधयेत् क्वाथे पूते तत्र रसक्रिया ॥ ८० ॥
अञ्जनं पिल्लभैषज्यं पक्ष्मणां च प्ररोहणम् ।

लाक्षानिर्गुण्डीभृङ्गदार्वीरसेन
श्रेष्ठं कार्पासं भावितं सप्तकृत्वः ।
दीपः प्रज्वाल्यः सर्पिषा तत्समुत्था
श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ८२ ॥

इति हृदयप्रिये योगखण्डे एकादशोऽध्यायः ॥

---

अथ द्वादशोऽध्यायः ।

(व्योषादिवटकम्)

व्योषतालीसचविकातिन्त्रिणीकाम्लवेतसम् ।
साग्न्यजाजि द्विपलिकमेलात्वक्पत्रपादिकम् ॥ १ ॥
जीर्णाद् गुलात् तुलार्धेन पक्वेन वटकीकृतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ २ ॥

(क्षारतैलम्)

शुष्कमूलक*शुण्ठीनां क्षारो हिङ्गु महौषधम् ।
शतपुष्पावचाकुष्ठदारुशिग्रुरसाञ्जनम् ॥ ३ ॥
सौवर्चलयवक्षारस्वर्जिकौद्भिदसैन्धवम् ।
भूर्जग्रन्थिविळं मुस्ता मधु शुक्तं चतुर्गुणम् ॥ ४ ॥
मातुळुङ्गरसस्तद्वत् कदलीस्वरसश्च तैः ।
पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात् ॥ ५ ॥
कण्डूक्लेदं च बाधिर्यपूतिकर्णत्वरुक्कृमीन् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयेषु च ॥ ६ ॥

(प्रियङ्ग्वादितैलम्)

प्रियङ्गुमधुकाम्बष्ठाधातक्युत्पलपर्णिभिः ।
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च ॥ ७ ॥
पचेत् तैलं तदास्रावं निगृह्णात्याशु पूरणात् ।

(प्रतिविषादितैलम्)

पक्वं प्रतिविषाहिङ्गुमिसित्वक्स्वर्जिकोषणैः ॥ ८ ॥
सशुक्तैः पूरणात् तैलं रुक्स्रावस्रुतिनादनुत् ।

(सप्तच्छदादिक्वाथः)

सप्तच्छदोशीरपटोलमुस्ताहरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य ॥ ९ ॥

(पटोलशुण्ठ्यादिक्वाथः)

पटोलशुण्ठीत्रिफलाविशालात्रायन्तिमुस्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुमान् निहन्ति मुखे स्थितश्चास्यगदानशेषान् ॥

(फलत्रयादिगुलिका)

फलत्रयद्वीपिकिराततिक्तयष्ट्याह्वसिद्धार्थकटुत्रिकाणि ।
मुस्ताहरिद्राद्वययावशूकवृक्षाम्लकाम्लाग्निमवेतसाश्च ॥ ११ ॥
अश्वत्थजम्ब्वाम्रधनञ्जयत्वक् त्वक् चाहिमारात् खदिरस्य सारम् ।
क्वाथेन तेषां घनतां गतेन तच्चूर्णयुक्ता गुलिका विधेया ॥ १२ ॥
सा धारिता हन्ति मुखेन नित्यं कण्ठोष्ठताल्वादिगदान् सुकृच्छ्रान् ।
विशेषतो रोहिणिकास्यशोषगण्डान् विदेहाधिपतिप्रणीता ॥ १३ ॥

(खादिरादितैलम्)

खदिरतुलामम्बुघटे पक्त्वा तोयेन तेन पिष्टैश्च ।
चन्दनजोङ्गककुङ्कुमपरिपेलवबालकोशीरैः ॥ १४ ॥
सुरतरुलोध्रद्राक्षामञ्जिष्ठाचोचपद्मकविडङ्गैः ।
स्पृक्कानखनतकट्फलसूक्ष्मैलाध्यामकैः सपत्तङ्गैः ॥ १५ ॥
तैलप्रस्थं विपचेत् कर्षांशैः पाननस्यगण्डूषैः ।
तद्धन्त्यास्ये च गदाञ्जनयति गार्ध्री दृशं श्रुतिं च वाराहीम् ॥

(खदिरसारादिगुलिका)

खदिरसाराद् द्वे तुले विपचेद् वल्कलतुलां चारिमेदसः ।
घटचतुष्केऽपां पादशेषेऽस्मिन् पूते पुनः क्वथनाद् घने ॥
आक्षिकं क्षिपेत् सुसूक्ष्मं रजः सेव्याम्बुपत्तङ्गगैरिकम् ।
चन्दनद्वयलोध्रपुण्ड्राह्वयष्ट्याह्वलाक्षाञ्जनद्वयम् ॥ १८ ॥
धातकीकट्फलद्विनिशात्रिफलाचतुर्जातकजोङ्गकम् ।
मुस्तामञ्जिष्ठान्यग्रोधप्ररोहमांसीयवासकम् ॥ १९ ॥
*पद्मककालेयकसमङ्गाश्च शीतं †तथा पालिकं पृथक् ॥ २० ॥
जातिपात्रिकां सजातीफलां ‡सलवङ्गतकोलकंकुकाम् ।
स्फटिकशुभ्रसुरभिकर्पूरकुडवं तत्रावपेत ततः ॥ २१ ॥
कारयेद् गुलिकाः सदा चैता धार्या §मुखेन तद्गदापहाः ।
क्वाथौषधव्यत्ययोजितेन तैलं पचेत् कल्पनयानयैव ॥ २२ ॥
सर्वास्यरोगापनयं तदाहुर्दन्तस्थिरत्वे त्विदमेव मुख्यम् ।
खदिरेणैता गुलिकास्तैलमिदं चारिमेदसा प्रथितम् ॥ २३ ॥
अनुशीलयन् प्रतिदिनं वृद्धोऽपि दृढद्विजो भवति ।

(पीतकचूर्णः)

दार्वीत्वक्सिन्धूद्भवमनश्शिलायावशूकहरितालैः ॥ २४ ॥
धार्यः पीतकचूर्णो दन्तास्यगलामये समध्वाज्यः ।

(काकादन्यादितैलम्)

काकादनीलाङ्गलिकानलिकोत्तुण्डिकाफलैः ॥ २५ ॥

---

* 'पद्मकैलेय', † 'तस्मिंस्तथा', ‡ 'सहलवङ्गकङ्कोलिकां', § 'मुखे' इति मुद्रिताष्टाङ्गहृदये.

जीमूतबीजकर्कोटीविशालाकृतवेधनैः ।
पाठान्वितैः पलार्धांशैर्बीजकर्कटुकैः पचेत् ॥ २६ ॥
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ।
अनेन माला गण्डानां चिरजा पूयवाहिनी ॥ २७ ॥
सिध्यत्यसाध्यकल्पापि पानाभ्यञ्जननावनैः ।

(भद्रश्रीदार्वादि)

भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः* ॥ २८ ॥
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ।
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ॥ २९ ॥
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।
पानाद्यैः शीलितं कुष्ठं दुष्टनाडीव्रणापचीः ॥ ३० ॥

(वचादितैलम्)

वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः ।
तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥ ३१ ॥

(काश्मर्यादिघृतम्)

काश्मर्यत्रिफलाद्राक्षाकासमर्दनिशाद्वयैः ।
गुडूचीसैर्यकाभीरुशुकनासापुनर्नवैः ॥ ३२ ॥
परूषकैश्च विपचेत् प्रस्थमक्षसमैर्घृतात् ।
योनिवातविकारघ्नं तत् पीतं गर्भदं परम् ॥ ३३ ॥

(वचोपकुञ्चिकादि)

वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ।
अजमोजयवक्षारशर्कराचित्रकान्वितम् ॥ ३४ ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत् तद् घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ३५ ॥

(शतावरीघृतम्)

शतावरीमूलतुलाचतुष्कात् क्षुण्णपीडितात् ।
रसेन क्षीरतुल्येन पाचयेत घृताढकम् ॥ ३६ ॥

---

* इतः परं "मनःशिलालनलदविशालाकरवीरकैः" इति श्लोकार्द्धमधिकं मुद्रिताष्टाङ्गहृदये दृश्यते ।

जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः।
पिष्टैः प्रियालैश्चाक्षांशैर्द्विबलामधुकान्वितैः॥ ३७॥
सिद्धः शीते तु मधुनः पिप्पल्याश्च पलाष्टकम्।
शर्करायाः दशपलं क्षिपेल्लिह्यात् पिबेत् ततः॥ ३८॥
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम्।
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम्॥ ३९॥
कामलां वातरुधिरं विसर्पं हृच्छिरोग्रहम्।
अपस्मारार्दितायाममदोन्मादांश्च नाशयेत्॥ ४०॥

(पुष्यानुगचूर्णम्)

पाठाजम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम्।
अम्बष्ठाशाल्मलीपिच्छासमङ्गावत्सकत्वचः॥ ४१॥
बाल्हीकबिल्वातिविषालोध्रतोयदगैरिकान्।
शुण्ठीमधूकमाचीकरक्तचन्दनकट्फलम्॥ ४२॥
कट्वङ्गवत्सकानन्ताधातकीमधुका*ञ्जनम्।
पुष्ये गृहीत्वा संचूर्ण्य सक्षौद्रं तण्डुलाम्भसा॥ ४३॥
पिबेदर्शःस्वतीसारे रक्तं यस्योपवेश्यते।
दोषा जन्तुकृता ये च बालानां तांश्च नाशयेत्॥ ४४॥
योनिदोषं रजोदोषं श्यावश्वेतारुणासितम्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम्॥ ४५॥

(धातक्यादितैलम्)

धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः।
जम्ब्वाम्रसारकासीसलोध्रकट्फलतिन्दुकैः॥ ४६॥
सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत्॥ ४७॥
तैलप्रस्थं तदभ्यङ्गपिचुबस्तिषु योजयेत्।
शूनोत्तानोन्नता स्तब्धा पिच्छिला स्राविणी तथा॥ ४८॥

---

* 'अर्जुनमि'त्यष्टाङ्गहृदये।

विप्लुतोपप्लुता योनिः सिध्येत् सस्फोटशूलिनी ।

(फलसर्पिः)

मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्करावचाः ॥ ४९ ॥

द्वे निशे मधुकं मेदां दीप्यकं कटुरोहिणीम् ।

पयस्याहिङ्गुकाकोलीवाजिगन्धाशतावरीः ॥ ५० ॥

पिष्ट्वाक्षांशं घृतप्रस्थं पचेत् क्षीरचतुर्गुणम् ।

मेहशुक्रप्रदोषेषु तत् सर्वेषु प्रशस्यते ॥ ५१ ॥

आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम् ।

फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत् ॥ ५२ ॥

म्रियमाणप्रजानां च गर्भिणीनां च पूजितम् ।

एतत्परं च बालानां ग्रहघ्नं चाङ्गवर्धनम् ॥ ५३ ॥

(करम्भादितैलम्)

करम्भशाखोटवरानिशानां प्राचीनकाल्पकचित्रकानाम् ।

दन्तीयुतानां क्वथिते कषाये प्राचीनकल्कं तिलजं पचेत ॥ ५४ ॥

आल्पमिथ्यास्वरसैरुपेतं सपादचित्राभवतैलमेतत् ।

श्लीपादनाशाय वदन्ति तैलं घृतं तु पित्तप्रभवे विकारे ॥ ५५ ॥

एवं स्थानत्रयेऽप्यादिदेवेन ग्रथितास्तु ये ।

योगास्तेऽपि क्रमात् प्रोक्ताः सन्तस्तुष्यन्तु सन्ततम् ॥ ५६ ॥

कृच्छ्रानुष्ठानभारैरगदसमुदयैर्दुर्लभैर्मिश्रचिह्नै-

विस्तीर्णात् पुस्तकौघात् प्रचकितमनसां प्रार्थनात् सम्प्रणीतः ।

"ग्रन्थोऽसौ लोकहृद्यः" कलितबहुरुजालक्षणः सिद्धयोगो

भूयादायुस्सुखानामयसुचरितदः शम्भुवत् स्वाश्रितानाम् ॥ ५७ ॥

इति हृदयप्रिये योगखण्डे द्वादशोऽध्यायः ॥

---

**शुभं भूयात् ।**

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śaṅkarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhanta-candrika** (Nyāya) by Gaṅgādhara-sūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Saṅkara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) *(out of stock)*. | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nangananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुति: **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (vedânta) by Kṛṣnânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravî with the commentary Śabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देश: **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantraasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra. | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्प. **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चय: **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I—1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II—3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśāna śivagurudevamiśra (Part IV, Kriyā pāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra) | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśva-deva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacūdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedânta) of Dharmarājādhvarīndra with the commentary Prakāśikā of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—**नारदीयमनुसंहिता Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumāra | 2 | 8 | 0 |
| No. 99—**मीमांसाश्लोकवार्त्तिकम् Mimamsaslokavartika** (Mīmāṁsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—**काव्यप्रकाशः Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—**आर्यभटीयम् Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—**दत्तिलम् Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—**हंससन्देशः Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—**साम्बपञ्चाशिका Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No 105—**निधिप्रदीपः Nidhipradipa** of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—**प्रक्रियासर्वस्वम् Prakriyasarvasva.** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—**काव्यरत्नम् Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—**बालमार्ताण्डविजयम् Balamartandavijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—**न्यायसारः Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् **Aryabhatiya** (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakanṭhasomasutvan.(Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111- हृदयप्रियः **Hridayapriya** (Vaidyaka) by Paramesvara, | 3 | 0 | 0 |

***Apply to:—***

*The Curator*
*for the publication of Oriental Manuscripts,*
*Trivandrum.*